The Department of Public Instruction, Bombay.

THE

# DVYÂS'RAYAKÂVYA.

BY

HEMACHANDRA

WITH

A Commentary

BY

ABHAYATILAKAGAṆI.

Text—Cantos I to X.

EDITED BY

ABAJI VISHNU KATHAVATE, B. A.

*Registered for copy-right under the Government of India's Act XXV of 1867.*

1915.

[All rights reserved.]

*Price Rs. 9*

SOLD AT

GOVERNMENT CENTRAL PRESS, BOMBAY.

Bombay Sanskrit and Prakrit Series, No. LXIX.

श्रीः ।

आचार्यश्रीहेमचन्द्रकृतम्

# द्याश्रयकाव्यम्

## अभयतिलकगणिविरचितया टीकया समेतम्



बी. ए. इत्युपपदधारिणा

काथवटेइत्युपाह्वेन विष्णुसूनुना आबाजीइत्येतेन

संशोधितम्

( मूलमेव–सर्गाः १–१० )

तच्च

मुम्बापुरीस्थराजकीयग्रन्थमालाधिकारिणा

मुम्बय्यां

निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकाशितम् ।

---

शाके १८३७ वत्सरे १९१५ खिस्ताब्दे

---

मूल्यं ९ रूप्यकाः

# PREFACE.



The work of editing the Dvyâs'rayakâvya was undertaken by the late Prof. Abaji Vishnu Kathavate of the Elphinstone College, who however, died after he had seen through the Press, only the first few forms. So the work of seeing the remaining part of the edition through the press was entrusted to Mr. D. K. Agashe Shastri of Thana High School. The MSS. which the editor made use of in preparing the text are not all available to the writer of this preface, nor is it possible for him to rightly judge of their worth and importance, without a careful study of the same. Under these circumstances, no alternative is left but to print a rough note in pencil, in the late Prof. Kathavate's own hand-writing, found in his papers which barely mentions the names of the MSS. The note runs as follows:—

[A—The MS. obtained at Ahmedabad by Mr. Dhruva—which forms the original from which the copy for printing is made.

B—Copy obtained by Mr. Dhruva through Jyeshtharam Mukundji leaf 29 wanting for V 171 (?).

C—The MS. from which different readings were given in Kumârapâlacharita. Find out its name and source.

D—Deccan College Library No. 404 Sarga 13.

E—Deccan College Library 406 sargas 7, 8, 9. 39 leaves with 8 wanting (7, 14, 23, 30, 31, 33, 36, 38).

F—Deccan College Library No. 405 of 1879–80. First 2 sargas, and 84 verses of the third.] Here ends the note.

A, B, C, D, E, F are shown in the footnotes as ए, बी, सी, डी, ई, एफ् respectively.

Of these C seems to be evidently the MS. referred to as D in the following paragraph from the Preface to the Kumârapâlacharita ( B. S. S. No. LX ), which I quote here—

"The third MS. D, has lost the first leaf, and a few lines seem to be left out by the copyist at the end of the last leaf; so it is not possible to find out when and where it was got copied. This MS. forms a part of the whole consisting of 473 leaves. The first 387 leaves contain, with the Vṛitti or Commentary, the Sanskṛita Dvyâs'raya Kâvya which illustrates the Sanskrit Grammar; and the remaining leaves from 389 to 473, contain the Prâkṛita portion of the Dvyâs'raya Kâvya with the Vṛitti on it. The leaves measure 10″ by 4½″ and contain 17 lines on each side."

The MS. D (No. 404 of 1879–80 Deccan College Library) contains only the first 13 Cantos and a part of the 14th Canto, ( extending to the 35th verse only ) of the original Kâvya and its commentary. It has 293 leaves, with about 14 lines per page and about 54 letters per line. It is written in the usual Jain fashion, with a blank square in the centre of every page.

The MS. E ( No. 406 of 1879–80 of the Deccan College Library ) is a mere fragment containing only three Cantos *i. e.* 7, 8 and 9. It has 39 leaves ( with 8 leaves missing ), with 20 lines per page and about 62 letters per line. This MS. also has a blank square in the centre of every page. It

ends with the words:—"भद्रं भवतु शिवतिलकमुनेर्लेखयितुः ॥ सं० १५१२ वर्षे." Thus the MS. is more than 450 years old.

The MS. F (No. 405 of 1879-80 of the Deccan College Library) contains only the first 2 Cantos and a part of the 3rd Canto, up to the 85th verse. It has 25 leaves only. The peculiarity of the MS. is that the original text of the Kâvya is written in a bolder character in the page proper and the commentary is written in very small though legible characters on all the four sides of the text, in the four margins as it were.

The present volume contains the first ten Cantos of the text and the commentary. The remaining text with the commentary and notes and introduction will form the second volume.

V. S. G.

अर्हम् ॥

ॐ नमः सर्वसर्वज्ञेभ्यः ॥

श्रीभूर्भुवःस्वस्त्रितयाहिताग्निगेहेभितो यस्य विभास्वरस्य ।
भातः स्फुलिङ्गाविव पुष्पदन्तौ तज्ज्योतिरेकं परमं नमामः ॥ १ ॥

यच्चक्रित्वाभिषेके गगनसवनसन्मण्डपे स्नाननीरं
स्वर्गङ्गाम्भे शुभार्थं सुरतरुदलयुक्पूर्णकुम्भो मृगाङ्कः ।
वृद्धस्त्रीक्षिप्तलाजा ध्रुवमुडुनिकरा जह्नुरेकातपत्रं
राज्यं जैनेश्वरोयं त्रिजगति कुरुतां सार्वभौमः प्रतापः ॥ २ ॥

ज्ञानं रातु सरस्वती भगवती सा मे यया ज्योतिषा
विश्वोद्द्योतिसदोदितेन वसने वासप्रतिष्ठां मिषन् ।
निर्जित्य द्विजनायकः किल मृगार्भं लालयन्पालय-
न्नङ्कस्थं समयाकरोति विजनेनन्ते वने वासितः ॥ ३ ॥

श्रीपार्श्वनाथजिनदत्तगुरुप्रसादा-
दारभ्यते रभसतोल्पधियापि किंचित् ।
श्रीहेमचन्द्रकृतसंस्कृतदुर्गमार्थ-
श्रीद्व्याश्रयस्य विवृतिः स्वपरोपकृत्यै ॥ ४ ॥

इह हि भक्तिप्राग्भारोहमहमिकानम्रकम्रश्रीकुमारपालप्रमुखासंख्य-
पृथ्वीपालचक्रवालभालस्थलीढ्कमसुरभिमृगनाभिपुण्ड्रकचूर्णप्रसक्तिप्रोञ्छ-

---

१ प ॰न भुवने । समासे 'भुवने' इति शब्दः. पफु ॰न सवने. २ पफु ॰तिष्ठा मि॰. ३ डी ॰ने चासि॰. ४ पफु ॰राहहम॰.

लितपादारविन्दोदारनखरादर्शसौन्दर्या लक्षणतर्कच्छन्दःसाहित्यालंकारत्रिषष्टि[1]शलाकापुरुषचरित्रयोगशास्त्रप्रमुखानेकशास्त्रनिर्माणोन्मूलितजगत्त्वष्टृविशिष्टसृष्टिचातुर्याः कोविदवृन्दवर्याः श्रीहेमचन्द्राचार्या यद्यपि स्वोपज्ञश्रीसिद्धहेमचन्द्राभिधानस्य संस्कृतशब्दानुशासनस्य निःशेषशब्दव्युत्पादनवपुषः सुप्रतिष्ठसप्ताध्यायाङ्गस्य सुललितपदन्यासस्य प्रभूतप्रश्नोत्तरप्रवृत्तिमदगन्धो[3]द्धुरस्य गजस्येवाल्पप्रमाणे ग्रन्थे समुद्गक इव निबन्धः कर्तुं दुःशकस्तथापि मन्दमतय एतद्बृहद्वृत्तावधीतायामपि भूरिसंज्ञाधिकारनियमविभाषापरिभाषोत्सर्गापवादादिविचारातिबाहुल्येनैतस्यामुक्तं प्रयोगजातं सम्यग्विवेक्तुं न शक्ष्यन्त्यतस्तेषां सकलप्रयोगजातस्य सम्यग्विविक्तये तथानेन शब्दानुशासनेन प्रधानोपाध्यायेनेव सर्वेपि शब्दाः शि[6]ष्या इव सम्यग्व्युत्पादिता अपि यावन्महाकाव्ये लोकव्यवहार इव न व्यापारितास्तावत्स्वमत्यान्यत्राव्यवहारिकेर्थे प्रयुज्यमाना नाभीष्टार्थसिद्धिभाजो भवन्तीति ते यस्मिन्नर्थे यथा प्रयुज्यन्ते तथा दिग्मात्रेण दर्शनार्थं तथा संसिद्धशब्दसंदर्भपुष्पोत्करसंभृतादस्माद्व्याकरणार्त्पुष्पकरण्डकादिवोद्धृत्यैतत्प्रयोगप्रसूनप्रकरः काव्यदाम्नि गुम्फितः सुमतिभिरपि सुखेन ग्राह्यो भवतीत्येतदर्थमेतच्छब्दानुशासनविशेषहेतुश्रीसिद्धचक्रवर्तिश्रीजयसिंहदेववंशावदातवर्णनाय च द्व्याश्रयं शब्दानुशासनप्रयोगसंदर्भसंग्रहस्वरूपतया सर्वकाव्यलक्षणलक्षितकथाप्रबन्धस्वरूपतया च यथार्थाभिधानं महाकाव्यं चिकीर्षन्तः शिष्टसमयपरिपालनाय निर्वि[12]घ्नशास्त्रसमाप्तये च तस्यादौ श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासननमस्कारानुसारेणाभीष्टदेवताप्रणिधानरूपं नमस्कारं चक्रुः ॥

---

१ सी डी °टिशिला°. २ सी °हृस°. ३ सी °न्धोर°. डी °न्धोदर°. ४ सी °बधाताम°. ५ सी °षापरिभाषाप°. ६ एफ् शिक्षा इ°. ७ सी °पुष्फोत्क°. डी °पुष्फोत्क°. ८ सी डी °त्पुष्फक°. ९ सी °नक°. १० सी डी °भयश°. ११ डी °या च य°. १२ एफ् °विघ्नं शा°.

अर्हमित्यक्षरं ब्रह्म वाचकं परमेष्ठिनः ।
सिद्धचक्रस्य सद्बीजं सर्वतः प्रणिदध्महे ॥ १ ॥

१. अर्हमिति वर्णसमुदायं सर्वतः सर्वस्मिन्क्षेत्रे काले च प्रणिदध्महे । आत्मानं ध्यायकं बीजमध्ये न्यस्तं संश्लेषेणार्हकारैर्ध्येयैः सर्वतो वेष्टितं चिन्तयामः । यद्वा । अर्हशब्दवाच्येन भगवतार्हता ध्येयेनाभिन्नमात्मानं ध्यायकं ध्यायाम इत्यर्थः । कीदृशम् । निर्मुक्तात्मकत्वात्परमे पदे सिद्धिलक्षणे तिष्ठति । "परमात्किन्" इत्यौणादिके कितीनि "भीरुष्ठानादयः" [२.३.३३.] इति षत्वे गणपाठसामर्थ्यात्सप्तम्या अलुपि परमेष्ठी तस्य परमेष्ठिनो भगवतोर्हतो वाचकं प्रतिपादकमत एवाक्षरं ब्रह्माभिधानाभिधेययोरभेदोपचारादचलं ज्ञानं परमज्ञानस्वरूपपरमेष्ठिवाचकमित्यर्थः । यद्वा । अक्षरमिति भिन्नं विशेषणं ब्रह्मेति च । ततोक्षरं शाश्वतमेतदभिधेयस्य भगवतः परमपदप्राप्तत्वेनाविनश्वरत्वाद्ब्रह्म च परमज्ञानस्वरूपम् । यद्वा । अक्षरस्य मोक्षस्य हेतुत्वादक्षरं ब्रह्मणो ज्ञानस्य हेतुत्वाच्च ब्रह्मात एव च सिद्धचक्रस्य सिद्धा विद्यासिद्धादयस्तेषां चक्रमिव चक्रं यन्त्रकविशेषस्तत्र सत् आद्यत्वेन प्रधानं बीजं तत्त्वाक्षरम् । स्वर्णसिद्ध्यादिमहासिद्धिहेतोः सिद्धचक्रस्य पञ्च बीजानि वर्तन्ते तेष्विदमाद्यक्षरमित्यर्थः । तेन स्वर्णसिद्ध्यादिमहासिद्धीनामिदं मूलहेतुरित्युक्तम् । अत एव चेदं ध्यानार्हमित्यर्थः । नन्वर्हमित्यस्य योभिधेयः स एव प्रणिधेयत्वेन मुख्यः । अर्हमिति शब्दस्त्वर्हद्वाचकत्वेन प्रणिधानार्हत्वाद्गौणः । गौणं च मुख्यानुयायीति मुख्यस्यैव प्रणिधानं कर्तुमुचितम् । एवं चार्हमित्यक्षरं ब्रह्मवाच्यं श्रीपरमेष्ठिनं सिद्धचक्रादिबीजेन सर्वतः प्रणिदध्मह इति कार्यं स्यात् । अत्र चैवमन्वयः । सिद्धचक्रादिबीजेनार्हमित्यनेन वाच्यं परमेष्ठिनं प्रणिदध्मह इति । नैवम् ।

१ सी डी °ता ध्ये°. २ सी डी ध्याया°. ३ एफ् °ष्ठी अस. ४ सी डी °रूपं प°. ५ सी °मेतत°. एफ् °मेव त°. ६ सी भव°. ७ सी डी °नदे°. ८ सी डी °यमक्ष°. ९ बी सी डी एफ् °र्थः । एते°. १० सी डी °सिद्धादि°.

यथा कश्चित्स्वस्वामिना प्रेषिते[1] लिखिते समायाते स्वामिनीवान्तरङ्गं[2] बहुमानं प्रकटयन् स्वामिनि सातिशयां प्रीतिं प्रकाशयत्येवं परमेष्ठिनो वाचकमर्हमिति प्रणिदधत् श्रीहेमचन्द्रसूरिर्मुख्ये प्रणिधेयेर्हे[3]ति सातिशयं प्रणिधानं ख्यापितवान् । येन हि यस्य नामापि ध्यातं तेन स नितरां ध्यात इति यथोक्तमेव साधु । तथा सर्वपार्षदत्वादस्य काव्यस्य सर्वदर्शनानुयायी नमस्कारो वाच्य इत्यर्हशब्देन परमेष्ठिशब्देन च हरिहरब्रह्माणोपि व्याख्येयाः[4] । यथा परमेष्ठिनो हरेर्हरस्य ब्रह्मणश्च वाचकमर्हमिति प्रणिदध्महे । अर्हशब्दस्य ह्येते त्रयोपि वाच्याः[5] । यदुक्तम् ।

अकारेणोच्यते विष्णू रेफे ब्रह्मा व्यवस्थितः ।
हकारेण हरः प्रोक्तस्तदन्ते परमं पदम् ॥ इति ।

शेषं प्राग्वद्व्याख्येयम् ॥

अर्हम् । इत्यनेन शब्दानुशासनसूत्रादिस्थः "अर्हम्" [१] इति नमस्कारः सूचितः । अक्षरं ब्रह्मेत्यादिना च तद्वृत्तिः सूचिता ॥

अथैतत्काव्यनायकवंशमाशीर्वादपूर्वं प्रशंसन्नाह ।

**भीमकान्तोद्धतोदात्तहिंस्रशान्तगुणात्मने ।**
**भद्रं चौलुक्यवंशाय हृतस्याद्वादसिद्धये ॥ २ ॥**

२. चौलुक्यवंशाय चुलुके संध्यावन्दनाय विधात्राम्बुना भृते हस्ते भवो "दिगादिदेहांशाद्यः"[६. ३. १२४.] इति ये चुलुक्यः[6] । उक्तं च ।

अयोग्या मातङ्गाः परिगलितपक्षाः क्षितिभृतो
जडप्रीतिः कूर्मः फणिपतिरयं च द्विरसनः ।
इति ध्यातुर्धातुः क्षितिविधृतये सांध्यचुलुका-
त्समुत्तस्थौ कश्चिद्विलसदसिपट्टः स सुभटः ॥

---

१ सी °पितलेखि°. डी °षिते लेखि°. २ बी °वान्तरं व°. सी °वान्तरं प्र°. ३ बी °र्हमिति. ४ सी डी °याः । ते य°. ५ सी डी °च्याः । यदुक्तम् ।. ६ ए °ह्ः छुछ°.

चुलुक्यस्यादिक्षत्रियविशेषपुरुषस्यायं "तस्येदम्" [६.३.१६०.] इत्यणि चौलुक्यः। स चासौ वंशश्च। यद्वा। चुलुकोत्पन्नः पुरुषोप्यभेदाच्चुलुकस्तस्यापत्यं वृद्धं गर्गादित्वाद्यञि [६.१.४२.] चौलुक्यस्तस्य वंशः संतानश्चौलुक्यवंशस्तस्मै भद्रं स्वस्त्यस्त्वित्याशीर्वादः। "तद्भद्रायुष्य०" [२.२.६६.] इत्यादिना चतुर्थी। यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते इत्यत्र भवन्तीत्यस्योपलक्षणत्वात्पञ्चम्यादिपरोपि। तेनात्रास्त्विति ज्ञेयम्। आशीर्वाददाने हेतुगर्भं विशेषणमाह। क्लृप्तस्याद्वादसिद्धय इति। स्यादित्यसकधातोर्यात्प्रत्ययान्तस्य प्रतिरूपको विधिविचारणास्तित्वविवादानेकान्तसंशयाद्यर्थवृत्तिरव्ययः। अत्र तु भीमकान्तेति विशेषणेनानेकान्तस्यैव साध्यत्वादनेकान्तवृत्तिर्गृह्यते। तस्य तत्पूर्वको वा वादः स्याद्वादो नित्यत्वानित्यत्वाद्यनेकधर्मशबलैकवस्त्वभ्युपगमरूपः श्रीमदार्हतमतप्रधानप्रासादचूलावलम्बिप्रलम्बोद्दण्डपाण्डुरपताकायमानोनेकान्तवादः। सिद्धिर्निष्पत्तिर्ज्ञापनं वा। क्लृप्ता निर्मिता स्याद्वादस्य सिद्धिर्येन तस्मै। स्याद्वादसिद्धिविधानेपि हेतुविशेषणमाह। भीमकान्तोद्धतोदात्तहिंस्रशान्तगुणात्मन इति। भीमा रौद्राः कान्ताः सौम्या उद्धता अविनयप्रधाना उदात्ता विनयप्रधाना हिंस्रा घातुकाः शान्ता दयाप्रधाना ये गुणा धर्मास्त एव धर्मधर्मिणोरभेदविवक्षया वंशस्य भीमत्वादिधर्मैः सहैक्यादात्मा स्वरूपं यस्य तस्मै। अत्र च भीमगुणात्मकत्वकान्तगुणात्मकत्वादीनां परस्परविरुद्धानामपि विरोधो रोधोभाग इव प्रत्यक्षप्रमाणमत्तवृषभेण बाध्यमानो भ्रंसते। यत उक्तम्।

दृश्यत्वान्न विरोधोपि कथ्यते युक्तिशालिभिः।
विरोधोनुपलम्भो हि यतो जैनमते मतः॥

यदि ह्येषामेकत्र दृश्यमानानामपि विरोध उद्भाव्येत तदैकस्मिन्नपि

१ बी सी डी °दानहे°. २ सी डी °गर्भवि°. ३ सी डी °धिर्विचा°. ४ एफ् °कान्तासं°. ५ सी डी °न्तवादसिद्धिनिष्पत्तिज्ञापनवृ°. ६ बी °त्वाद्य°. ७ सी डी °लावल°. ८ सी डी °त्मकादी°. ९ सी डी °धो भा°. १० सी डी °भेणे बा°. ११ सी डी भ्रंशते. १२ सी डी °रोधानु°.

पुरुषे पुत्रत्वपितृत्वे स्थूलत्वकृशत्वे लघुत्वमहत्त्वे न घटेयाताम्[1]। अथै-कोपि पुमान्स्वजनकापेक्षया पुत्रः स्वपुत्रापेक्षया जनकः स्थूलापेक्षया कृशः कृशापेक्षया स्थूलो महदपेक्षया लघुर्लघ्वपेक्षया[2] च महानिति विषयभेदेन विरुद्धधर्मा अप्येते घटन्ते तदत्रापि समानम्। तथाहि। शत्रूनुद्दिश्य भीमगुणत्वं प्रजासु[3] कान्तगुणत्वं[4] दर्पिष्ठेषूद्धतगुणत्वं पूज्येषूदात्तगुणत्वं व्यसनिषु हिंस्रगुणत्वं कृपापात्रेषु शान्तत्वं चेति। एवं च प्रत्यक्षसिद्धभीमकान्तगुणाद्यनेकधर्मात्मकेनानेन चौलुक्यवंशेन दृष्टान्तभूतेन नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगमरूपस्याद्वादसिद्धिविधानपूर्वकं दर्शनान्तरीयाणां बौद्धसांख्यादीनामेकान्तानित्यत्वैकान्तनित्यत्वादिवादेषु स्याद्वादस्यैव न्याय्यत्वं सूचितम्। अत एव श्रीहेमचन्द्रसूरेर्यतिमौलेराशीर्वादार्होयं वंश इति। व्रतिनो हि धार्मिकं विनान्यस्य प्रशंसायां दोषसंभवः॥

स्याद्वादसिद्धये। इत्यनेन "सिद्धिः स्याद्वादात्" [२] इति सूत्रार्थः सूचितः॥

अथान्येभ्योधिकेन येन[5] गुणेनायं वंशोत्र काव्ये वर्ण्यस्तं प्रकर्षयन्नाह।

लोकात्सालातुरीयादेः शब्दसिद्धिरिवानघा।
चौलुक्यवंशाज्जयति नयधर्मव्यवस्थितिः॥ ३॥

३. चौलुक्यवंशात् "गम्ययपः कर्माधारे" [२.२.७४.] इति कर्मणि पञ्चमी। चौलुक्यवंशं प्राप्य नयधर्मव्यवस्थितिर्नयो न्यायो धर्मोहिंसादिर्द्वन्द्वे तयोर्व्यवस्थितिर्व्यवस्था सम्यक्प्रतिपाल्यमानत्वेन न विद्यतेघं दुःखं व्यसनं पापं वा यस्यां[6] सानघा श्रेयसी सती जयति सर्वोत्कर्षेण वर्तते। यथा सालातुरीयादेर्लोकात्[7] सलातुर आभिजनो निवासोस्य "[8]सलातुरादीयण्" [६.३.२१६.] इतीयणि सालातुरीयः पाणिनिस्तत्प्रभृतिम्। आदि-[9]पदादिन्द्रचन्द्रशाकटायनादिवैयाकरणानां श्रीसिद्धसेनमल्लवादिहरिभद्रसू-

१ सी डी °म्। यथै°. २ सी डी °या म°. ३ सी डी एफ् °जासुदिश्य का°. ४ सी डी °त्वं पू°. ५ सी डी °न येन गु°. ६ ए एफ् यस्याः सा°. ७ सी डी एफ् °त् साला°. ८ सी डी एफ् "साला°. ९ सी डी °ति आदि°.

रिप्रभृतितार्किकाणां च परिग्रहः। लोकं वैयाकरणसमयविदं[1] प्रमाणविदं च प्राप्य शब्दसिद्धिः साधुशब्दनिष्पत्तिरनघासाधुत्वदोषरहिता सती जयति। अथवात्र श्लोक इहेत्यध्याहार्यम्। सिद्धिव्यवस्थित्यपेक्षया च गम्ययस्त्वम्। ततोयमर्थः। सालातुरीयादिलोकमाश्रित्य यानघा शब्दसिद्धिर्ये[2] प्रयोगार्हाः शब्दाः सिद्धाः सा यथेह प्रबन्धे जयति। इयं हि काव्यफला काव्ये चात्र शब्दानुशासनक्रमानतिक्रमेण निबध्यमानेषु शब्देषु स्वफलप्राप्त्योत्कर्षवती भवति तथा चौलुक्यवंशं प्राप्य यानघा नयधर्मव्यवस्थितिः सेह प्रारभ्यमाणे प्रबन्ध आधारे जयति। इयं चानघत्वेन स्वयमेवोत्कृष्टाप्यस्मिन्काव्ये[3] निबध्यमाना विशेषेणोत्कृष्टा भवतीत्यर्थः[4]। भवति हि विशिष्टाधारकृतो विशेषो यथा राजा सर्वाङ्गभूषितोपि रूपपात्रमपि यदास्थानमण्डपे सिंहासनमध्यारोहति तदान्यां कां चन शोभां लभत एवमत्रापीति। अत्र च व्याख्याने लोकात्सालातुरीयादेरित्यत्र शब्दसिद्धिः[5] सामान्योक्तावपि श्रीहेमचन्द्रसूरिकृतात्र काव्येभिधेयत्वेनावबोध्या स्वोपज्ञतया तत्क्रमानतिक्रमेणैवात्र सिद्धशब्दानां प्रयोगात्। एतेन चास्य काव्यस्य स्वोपज्ञशब्दानुशासनसंसिद्धशब्दैश्चौलुक्य[6]नयधर्मव्यवस्थित्या च सहाभिधानाभिधेयलक्षणः संबन्ध उक्तः। प्रयोजनं च सिद्धानां शब्दानां काव्यविषयं प्रयोगज्ञानम्। नयधर्मव्यवस्थितिज्ञानं चानन्तरम्। परंपरं[7] च सिद्धशब्दप्रयोगज्ञानेभीष्टदेवतादिस्तुत्यादिक्रमेण[8] नयधर्मव्यवस्थितिज्ञानेन[9] च नयधर्मानुष्ठानादिक्रमेण निःश्रेयसमुक्तम्। तथास्य द्वयोराश्रयत्वाद् द्याश्रय इत्यन्वर्थं[10] नामापि[11] व्यञ्जितम्॥

लोकात्। इत्यादिना "लोकात्" [१] इति सूत्रार्थः सूचितः॥

---

१ सी डी °दं च. २ सी डी °र्यैन प्र°. ३ एफ् स्वमे°. ४ सी डी °यमात्र°. ५ बी सी डी °सिद्धेः सा°. ६ सी °क्यवंशस्य न°. डी °क्यवंश्यस्य न°. ७ एफ् °रं च. ८ सी डी °त्या क्र°. ९ एफ् °स्थितिः। ज्ञा°. १० बी °त्यर्थना°. सी °त्यना°. ११ एफ् °मातिव्य°.

अथ श्रीसिद्धहेमचन्द्राख्यशब्दानुशासनमनुसारेण प्रयोगजातं द-र्शयन् यत्र चौलुक्यवंशो नयधर्मव्यवस्थित्या राज्यमपालयत्तत्पुरमाह ।

अस्ति स्वस्तिकवद्भूमेर्धर्मागारं नयास्पदम् ।
पुरं[1] श्रिया सदाश्लिष्टं नाम्नाणहिलपाटकम् ॥ ४ ॥

४. नाम्नाणहिलपाटकमणहिलपाटकाख्यं[2] पुरं नगरमस्ति । कीदृशम् । धर्मोहिंसादिर्धर्मे[3] दानादिर्वा । धर्मधर्मिणोरभेदोपचाराद्धर्मस्य धर्मवतामगारं गृहमत एव पूर्ववदभेदान्नयस्य न्यायवतामास्पदं स्थानं यत एव धर्मागारं नयास्पदं चात एव च श्रिया धनधान्यद्विपदचतुष्पदादिमहर्द्ध्या लक्ष्मीदे-वतया[4] वाश्लिष्टमाश्रितमत एवं[5] च भूमेः सागराम्बरायाः स्वस्तिकमिव यथा स्वस्तिकेनाढ्यवेश्मवेदिकालंक्रियते तथा येन सर्वापि भूर्भूष्यत[6][7] इत्यर्थः । यद्वा पुरं शरीरं धर्मागारं धर्मस्य पूर्वोपार्जितसुकृतस्यागारं नयस्य चास्पदं भवति तत्सदा[8] श्रिया लक्ष्म्याश्लिष्टं भवतीत्युक्तिलेशः ॥ पूर्वं किल वनराजराजेन नवपुरविधित्सया प्रधानभूमिखण्डगवेषणार्थं विचरतैकदारण्यमध्ये ग-वादींश्चारयन्नणहिलो नाम गोपालो[9] दृष्टस्तदग्रे च चित्ताभिप्रायो निवेदितस्ते-नापि तत्कार्यकरणार्थं शकुनगवेषणं कुर्वतैकत्र प्रदेशे शृगालो बलिष्ठकुक्कुरं निर्धाटयन्[10] दृष्टस्तत्रैव चाणहिलेन वनराजराजः पुरनिवेशं स्वनाम्ना कारित इति लोकश्रुतिः । आदिमध्यावसानमङ्गलानि हि शास्त्राण्यायुष्मच्छ्रोतृ-काणि[11] मतिमच्छ्रोतृकाणि च भवन्तीत्यर्हमिति प्रणिधानेन सर्वमङ्गलश्रेष्ठे भावमङ्गले विहितेपि लोकरूढिमनुसरन्नस्तिस्वस्तिकेति शब्देन द्रव्यम-ङ्गलमपि न्यस्तवान् । नाम्नेत्यत्र करणे तृतीया ॥

---

१ एफ् °रं सदा श्रियाश्लि°.

---

१ सी डी श्रीहे°. २ सी डी °टकाख्यं. ३ बी सी डी एफ् °दिर्दाना°. ४ बी लक्ष्म्या दे°. ५ ए °याश्लि°. ६ सी डी °व भू°. ७ बी °र्भूषिता इ°. ८ सी °दाश्लि°. ९ सी डी गोवालो. १० ए बी सी एफ् निर्द्राट°. ११ बी °णि म°.

अथैतदेव पुरं धर्मार्थकामोपनिबद्धवर्णनाभिर्विंशेन शतेन श्लोकैर्वर्णयति[1]। धर्मार्थकामवर्णना यथायथं स्वयमेवाभ्यूह्याः।

सपत्नीर्ष्याविधीहाभिः श्रीद्धेऽत्रानुपतीष्यते।
मधूत्तमं वधूढाभिः सभ्रूत्क्षेपं मृदूरुभिः॥ ५॥

५. श्रिया सर्वसमृद्ध्येद्धे भासुरेऽत्र पुरे मृदूरुभिः कोमलसक्थीभिर्वधूढाभिर्वध्वो योषितो[2] या ऊढाः पाणिगृहीत्यस्ताभिरनुपति भर्तृसमीप उत्तमं[3] पत्या स्वयं दीयमानत्वेन प्रेमकन्दलोद्रेदकत्वाद्मनोज्ञं[4] मधु मद्यमिष्यते। कथम्। सह भ्रुवोरुत्क्षेपेणोपहासाय[5] चालनेनास्ति यत्तत्सभ्रूत्क्षेपं यथा स्यादेवम्। यतः सपत्नीनां येर्ष्या परसंपत्तौ चेतसो व्यारोषस्तस्या[6] विधिः[7] करणं तत्रेहाभिलाषो यासां ताभिः। यथायथा सपत्न्यः प्रियकृततथा[8]विधप्रेमसंपत्तिं पश्यन्त्यो गाढतरेर्ष्यया म्लायन्ति तथातथा वधूढा भ्रूत्क्षेपेणोपहस्य मधु पिबन्तीत्यर्थः॥

उमाभर्तृषभस्कन्धा मातापितृषिपूजकाः।
नृभर्तृऋषभा अस्मिन्नासन्पितृणवर्जिताः॥ ६॥

६. नृभर्तृऋषभा नृणां भर्तारः स्वामिनो[10] नृभर्तारो राजानस्तेषु[11] ऋषभा मुख्या राजाधिराजा वनराजादयोस्मिन् पुर आसन्। एतेनास्य[12] पुरस्य चिरंतनतोक्ता[13]। कीदृशाः। उमाभर्ता शंभुस्तस्य ऋषभो बलीवर्दस्तस्य[14]स्कन्धवत्स्थूलबलिष्ठाः स्कन्धा येषां ते। तथा मातापितृ(त्रृ?)षिपूजका माता च पिता च मातापितरौ[15] तौ च ऋषयश्च तेषां पूजका अर्चकाः। याज-

१ पफ् °र्णना. There is here an evident omission of intermediate letters. २ बी °पित ऊ°. ३ पफ् °मं मधु प°. ४ प °लोद्रेक°. ५ प °पेणाप°. ६ सी °रोषंत°. ७ बी °धिः कार°. ८ सी °कृतं त°. डी °कृतां त°. ९ The commentary in Ms. C. begins with. उमाभर्ता शंभुः. १० डी °नो रा°. ११ पफ् राजन°. १२ प बी पफ् °स्य चि°. १३ पफ् °तनोक्ताः।. १४ पफ् °स्तस्य स्क°. १५ सी डी °रौ च.

कादित्वात्समासः । [३. १. ७८.] । एतेन विनयोक्तिः । अत एव पितृ-णवर्जिताः । पितॄणामृणमपत्याभावस्तेन वर्जिताः पुत्रवन्त इत्यर्थः । भवति हि [1]पूज्यपूजकानां पुत्रादिसमृद्धिः ॥

होतॄतं पोॢतं मातॄॢतं पिॢतमुद्दृणन् ।
अत्र स्याज्जडजिह्वोपि वाग्मी विद्यामठे पठन् ॥ ७ ॥

७. अत्र पुरे । [2]मठश्छात्राद्यालयः । विद्यायै मठो विद्यामठो धर्माद्यर्थ-मुपाध्यायच्छात्राणां भोजनाच्छादनादिसामग्र्योपेत ईश्वरैः कारितो वेश्म-विशेषस्तत्र । जातावेकवचनम् । विद्यामठेष्वित्यर्थः । जडा वर्णमात्रोच्चारणे-प्यपट्वी जिह्वा यस्य स जड[3]जिह्वोप्युपाध्यायाध्याप[4]ननै[5]पुण्येन होतृत्-पोॢत्-मातॄॢत्[6]-पिॢत्-शब्दान् दुरुच्चार्यानप्युद्धृणन्नुच्चारयन्[7] सन् वाग्मी पटु-वाक् स्यात् । जडर्जि[8]ह्वा हि जिह्वापाटवाय विषमवर्णानुच्चार्यन्ते ॥

अमुष्मिन्पुरुषार्थानां त्रिरूपत्वव्यवस्थितिः ।
ॡकारस्य ऋकारेण संधाविव विराजते ॥ ८ ॥

८. अमुष्मिन् [9]पुरे पुरुषार्थानां धर्मार्थकामानां त्रिरूपत्वव्यवस्थितिः । त्रीणि रूपाणि[10] स्वरूपाणि येषां तेषां भावस्त्रिरूपत्वं तस्य [11]व्यवस्थितिर्व्य-वस्था विराजते । परस्परे[12]णा[13]बाधया स्वस्ववेलायां प्रवर्तनेन धर्मार्थकामानां त्रीणि रूपाणि[14] व्यवस्थि[15]तानि शोभन्त इत्यर्थः । यथा । ॡकारस्य ऋका-रेण सह संधौ त्रिरूपत्वव्यवस्थितिः । कॄकारः । कॢऋकारः । कॢकारः । इत्येवं रूपत्रयव्यवस्था राजते ॥

---

१ सी पूज°. २ बी मठं छात्रा°. ३ सी °डप्यु°. ४ सी °पनै°. ५ बी °पुणेन. ६ ए एफ् °त् श°. ७ सी डी °न् वा°. ८ सी डी °जिह्वो हि. ९ सी पुर°. १० ए °णि ये°. ११ सी व्यस्थि°. १२ बी °रानबा°. १३ सी °बाधाया. १४ एफ् °णि स्वरूपाणि व्य°. १५ सी °स्थितिशो°.

गम्लृतं पत्लृतं श[1]क्लृतं लाक्षे[2]णिका इव ।
अत्राक्षरमपि[3] प्राज्ञा न वदे[4]न्ति निरर्थकम् ॥ ९ ॥

९. यथा लाक्षणिका वैयाकरणा गमः पतः शकश्च धातूनां संबन्धिलृतम् लृकारम[1]नुबन्धम[2]कार्यार्थत्वान्निरर्थकं न वदन्ति तथात्र पुरे प्राज्ञाः पण्डिताः प्राज्ञत्वादक्षरमपि[3] स्वरव्यञ्जनमात्रमपि निरर्थकं निःप्रयोजनं न वदन्ति । एतेनात्रत्यजनानामवाचालत्वमुक्तम् ॥

अस्मिन् महऋषिस्तुल्ये नृपाञ्शममहाऋषीन् ।
दृष्ट्वेव लज्जिता जग्मुस्ते द्यां सप्त महर्षयः ॥ १० ॥

१०. अस्मिन् पुरे । नृपान् । अपिरत्र गम्यते । प्रचण्डदोर्दण्डोग्रान् रा[4]ज्ञोपि शमेन कृत्वा महाऋषीन् महामुनितुल्यान् दृष्ट्वा लज्जिता इव तेतिशमित्वेन प्रसिद्धाः सप्त महर्षयो मरीचि१अत्रि२अङ्गिरः३पुलस्त्यं[6]४पुलह५क्रतु६वसिष्ठाख्या७ महामुनयो द्यां व्योम जग्मुर्गताः । योपि येनोत्तमेन गुणेनोत्तमंमन्यः स्यात्स यदान्यस्मिन्नात्मनोतिहीनेपि तं गुणं पश्यति तदा लोकोपहासेन लज्जितो देशान्तरं याति ॥

भान्ति मत्तेभगामिन्यो रम्भास्तम्भनिभोरवः ।
सर्वर्तुमण्डितोद्यानेष्वत्रल्कारभ्रुवोङ्गनाः ॥ ११ ॥

११. इह पुरे सर्वर्तुमण्डितोद्यानेषु सर्वैः षड्भिर्ऋतुभिरुपचाराद्धेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदाख्यषडृतुजन्यपुष्पफलादिभिर्मण्डितानि दे[10]वताप्रभावादिनावतर[11]णाद्भूषितानि यान्युद्याना[12]न्युपवनानि तेषु मत्तेभगामि-

१ सी °शल°. २ सी एफ् °क्षणका°. ३ सी °पि शा. ४ सी °दति नि°.

१ एफ् °मक्का°. २ एफ् °कार्यर्थ°. ३ सी डी °पि नि°. ४ डी राश उपश°. एफ् राशेपि. ५ सी °शोपशमनं कृ°. ६ ए बी सी एफ् °स्त्यकल°. ७ ए एफ् °वशिष्ठा°. ८ एफ् °ख्या मु°. ९ सी लोप°. १० सी देवाप्र°. डी देवप्र°. ११ सी डी °रणद्भू°. १२ सी डी °नानि°.

न्यः पुष्पफलाद्युच्चयनाय मदोन्मत्तहस्तिवत्सविलासं विहरमाणाः सत्यो-ऽङ्गना भान्ति यतो रम्भास्तम्भनिभोरवः कदलीकाण्डतुल्यसक्थ्यस्त-था नागरलिपौ वक्राकारलृकारो लिख्यते तद्वद्वक्रे भ्रुवौ यासां ताः। रूपवत्य इत्यर्थः॥

"औदन्ताः स्वराः" [१.१.४-४२.] इत्यादिभिः सूत्रैर्विधीयमानानां स्वरादि-संज्ञानां प्रयोजनम् "इवर्णादेरस्वे स्वरे यवरलम्" [१.२.२१.] इत्यादिविधिसू-त्रेष्वेवेति तदुदाहरणदर्शनेनैवैता ज्ञापिता भविष्यन्तीति स्वरादिसंज्ञासूत्राण्यु-ल्लङ्घ्य विधिसूत्रोदाहरणानि दर्शितवान्। तथा हि।

धर्मागारम्। नयास्पदम्। नाक्षाणहिल्ल। सदाश्लिष्टम्। अनुपतीष्यते। विधीहाभिः। श्रीढे। सपत्नीर्ष्या। मधूत्तमम्। मृदूरुभिः। सभ्रूत्क्षेपम्। वधूढाभिः। भर्तृषभ। गम्लृतम्। इत्यत्र "समानानां तेन दीर्घः" [१] इति दीर्घः॥ बहुवचनं व्याप्त्यर्थम्। तेनोत्तरसूत्रेणं लृऋतोरपि ऋलृति ह्रस्वो भवति। क्लृऋकारः। मातृलृतम्। अन्यथा "ऋस्तयोः" [५] इति परत्वाद् ऋरेव स्यात्॥

महऋषि। नृभर्तृऋषभाः। मातृलृतम्। शक्लृलृतम्। इत्यत्र "ऋलृति ह्रस्वो वा" [२] इति वा ह्रस्वः॥ पक्षे। महर्षयः। उमाभर्तृर्षभ। होतॄतम्। गम्लृतम्॥ कश्चित्तु ह्रस्वत्वाभावपक्षे प्रकृतिभावमपीच्छति। तन्मते महाऋषीन्॥

ऋता। कॄकारः॥ लृता। पल्लृतम्। इत्यत्र "लृत ॠॡ ऋलृभ्यां वा" [३] इति लृतो वा ॠॡ आदेशौ॥ पक्षे। ऋता सह पूर्वेण ह्रस्व उत्तरेण ऋकारश्च। क्लृऋकारः। कॄकारः॥ लृता च सह दीर्घत्वं ह्रस्वत्वं च। गम्लृतम्। शक्लॄतम्॥

ऋता। पितृषि॥ लृता। पोल्लृतम्। इत्यत्र "ऋतो वा तौ च" [४] इति

१ सी °माणस°. २ एफ् °द्वक्रौ भ्रु°. ३ सी डी °नां प्र°. ४ सी डी °हिल्ल।. ५ ए एफ् °षभः। ग°. ६ एफ् °नामिति। ब°. ७ एफ् °ण ऋलृतो°. ८ एफ् °योरपि°. ९ एफ् °षभः। मा°. १० एफ् °त्र ह°. ११ एफ् °षभः। हो°. १२ बी ह्रस्वामा°. १३ सी °देशप°. डी °देशः। प°. १४ सी डी °त्र ऋस्त°.

ऋत ॠ ऌ आदेशौ ॥ पक्षे । ऋति । भर्दृषभ । भर्तृऋषभाः ॥ ऌति । होॡतम् । मातॄॡतम् ॥ तौ च वा । पितॄण । पितॢतम् । पक्षे यथाप्राप्तम् ॥

ॠकारः । होॡतम् । इत्यत्र "ऋस्तयोः" [ ५ ] इति ऌऋतोः स्थाने यथासंख्यमृता ऌता च सह ॠकारः ॥

मत्तेभ । इन्द्रेव । मण्डितोद्यानेषु । निभोरवः । सर्वर्तु । महर्षयः । अत्रल्कार । इत्यत्र "अवर्णस्य°" [ ६ ] इत्यादिना एदादयः ॥ अकारस्य ईत्-ऋत्-ऌन्नि-मित्तकानि आकारस्य ईत्-उत्-ऊर्त्-ऋत्-ऌत्-ऌन्निमित्तकानि चोदाहरणानि स्वयं ज्ञेयानि । एवमन्यत्राप्यदर्शितोदाहरणानि स्वयं ज्ञेयानि ॥

ननु "ऌत ॠ ऌ ऋऌभ्यां वा" [ ३ ] इत्यादिसूत्रापेक्षया "ऋऌति ह्रस्वो वा" [ २ ] इति सूत्रस्य "ऋतो वा तौ च" [ ४ ] इत्यस्यापेक्षया "ऌत ॠ ऌ ऋऌभ्यां वा" [३] इत्यस्य च प्राथम्यादेतदुदाहरणगर्भाणां दशमाष्टमनवमश्लोकानां पञ्चमश्लोकानन्तरमुपन्यासः कर्तुमुचितस्तदनु "ऋतो वा तौ च" [४] इत्युदाहरणगर्भयोः षष्ठसप्तमश्लोकयोः । एवं हि सूत्रक्रमोऽनुसृतः स्यात् । सत्यम् । लाघवार्थम् । एवं ह्युपन्यासे क्रमप्राप्तं भर्दृषभेत्येतद् ऋति "समानानां तेन दीर्घः" [ १ ] इति दीर्घोदाहरणम् "ऋतो वा तौ च" [ ४ ] इत्यस्य विकल्पोदाहरणं च युगपद्दर्शितं स्यात्तथा महर्षय इत्येतद् "ऋऌति ह्रस्वो वा" [ २ ] इत्यस्य विकल्पोदाहरणम् "अवर्णस्येवर्णादि°" [ ६ ] इत्यत्रावर्णग्रहणेनाप्तस्य आत ऋति परे अर्कार्योदाहरणं च युगपद्दर्शितं स्यादिति सर्वमुपपन्नम् । एवमन्यत्रापि व्युत्क्रमोपन्यासकारणानि यथायथं सुधिया स्वयमभ्यूह्यानि ॥

इहर्णार्णं कम्बलार्णं वत्सरार्णं दशार्णकम् ।
वसनार्णं वत्सतरार्णं प्रार्णं वा न कस्य चित् ॥ १२ ॥

१२. इह पुरे ऋणस्यावयवतया ऋणमृणार्णं कलान्तरं कम्बलस्य

---

१ डी वास्ति न.

---

१ एफ् °तृऋत°. २ सी °दयश्च ।. ३ सी डी °नि चो°. ४ एफ् °त्-ऋत्-ऋ्°
५ सी डी एफ् °या "ऋत°. ६ बी सी डी दीर्घो°. ७ ए बी °त्यत्र व°.
८ बी सी डी °र्थं स्वधि°.

ऋणं कम्बलार्णं वत्सरस्य वर्षस्य ऋणं वत्सरार्णं दशानां रूपकादीनामृणं दशार्णं कुत्सितमल्पमज्ञातं वा दशार्णं दशार्णकं वसनार्णं वस्त्रस्य ऋणं वत्सतरार्णं तर्णकस्य ऋणं प्रकृष्टमृणं प्रार्णं वा। कस्य चिन्नास्तीति प्रत्येकमभिसंबध्यते। वाशब्दः पूर्वोक्तऋणार्णाद्यपेक्षया विकल्पार्थः। एतेनात्रत्यलोकानामैश्वर्यातिशयोक्तिः ॥

सुखेतोप्रऋणार्तश्च परमर्तो रतीच्छया।
अस्मिन् स्मरऋतः स्त्रीभिर्मुदर्तो रमते जनः ॥ १३ ॥

१३. अस्मिन्पुरे जनः स्त्रीभिः सह रमते[3]। चः पूर्ववाक्यार्थापेक्षया समुच्चये। कीदृक्सन्। अप्रऋणार्तः। न प्रकृष्टेन ऋणेन ऋतः पीडित ईश्वर इत्यर्थः। अतएव सुखेतोनुपमभोजनाच्छादनविलेपनादिजनितं[4] सुखं[5] प्राप्तोत एव च मुदा प्रीत्या कर्न्यायेते स्म ऋतः प्राप्तो[6] यथा देवदत्तेन ग्रामो गतः प्राप्त इत्यर्थः। अत एव च स्मरऋतः कामेन पीडितोत एव च रतीच्छया निधुवनाभिलाषेण कर्न्यो परमर्तः। परमं प्रकृष्टं गाढं यथा स्यादेवमृतः पीडितः ॥

प्रार्णम्। दशार्णकम्। ऋणार्णम्। वसनार्णम्। कम्बलार्णम्। वत्सरार्णम्। वत्सतरार्णम्। इत्यत्र "ऋणे प्र°" [७] इत्यादिना आर् ॥ समानानामिति[7] बहुवचनस्य व्याप्त्यर्थत्वेनोक्तत्वादिहोत्तरत्र च ह्रस्वोपि भवति। प्रऋण ॥

ऋणार्तः। इत्यत्र "ऋते°" [८] इत्यादिना[9] आर् ॥ ह्रस्वोपि भवति। स्मरऋतः ॥ ऋत इति किम्। सुखेतः॥ तृतीयाग्रहणं किम्। परमर्तः। समास इति किम्। मुदर्तः॥

इहर्च्छन्ति परार्च्छन्ति खे प्रार्च्छन्त्यहिसद्मनि।
प्रर्षयोत्र स्वतेजोभिरनपेतास्तपोमयैः ॥ १४ ॥

१४. अत्र पुरे वर्तमानाः प्रर्षयस्तपोध्यानादिविशेषेण प्रकृष्टा मु-

१ एफ् °नां ऋणं रू°. २ सी पूर्वं ऋ°. डी पूर्वेण ऋ°. ३ सी एफ् °ते। च पू°. ४ बी सी डी °नितेन सु°. ५ बी सी डी सुखेन प्रा°. ६ सी डी प्राप्त°. ७ सी °मानामि°. ८ डी °ति। अप्र°. ९ सी °दि आ°.

नय इह मर्त्यलोकेऽभ्यादार्च्छन्ति यान्ति । तथा स्व ऊर्ध्वलोके पराच्र्छन्ति प्रकर्षेण गच्छन्ति । तथाहिसध्रन्यधोलोके च प्रार्च्छन्ति । यतस्तपोमयैस्तपांसि प्रकृतानि कारणतया येषु तैस्तपोमयैः स्वतेजोभिः स्वकीयप्रभावैरनपेताः संयुक्ताः । तपःप्रभावादत्रत्यमुनीनां त्रिभुवनमपि गृहाङ्गणमित्यर्थः । एवं च तपःप्रभावोपेतमहामुन्यवस्थित्यास्य पुरस्यातिपावित्र्यं सूचितम् ॥

प्रार्च्छन्ति । परार्च्छन्ति । इत्यत्र "ऋत्यारुपसर्गस्य" [ ९ ] इत्यार् ॥ उपसर्गस्येति किम् । इहर्च्छन्ति । येन धातुना युक्ताः प्रादयस्तं प्रत्युपसर्गसंज्ञास्तेनेह न स्यात् । प्रर्षयः ॥

प्रार्षयन्ति शमे धर्मधुरायां प्रर्षभन्ति च ।
अत्र प्रऋजवन्त्येव दुर्जनेष्वपि[1] साधवः ॥ १५ ॥

१५. अत्र पुरे साधवः सज्जनाः शम इन्द्रियजयविषये प्रार्षयन्ति प्रकर्षेण ऋषय इवाचरन्ति । "कर्तुः क्विप्" [३.४.२५.] इति क्विप् । तथा धर्मधुरायां धर्मकार्यप्राग्भारविषये प्रर्षभन्ति प्रकर्षेण[4] ऋषभा इवाचरन्ति यथा धवलाः शकटादिधुरं वहन्त्येवं धर्मधुरामिति । अतिधार्मिका इत्यर्थः । अत एव दुर्जनेष्वपि[5] खलेष्वपि प्रऋजवन्त्येव प्रकर्षेण[6] ऋजव इवाचरन्ति । हितमेव कुर्वन्तीत्यर्थः ॥

प्रार्षयन्ति प्रर्षभन्ति । इत्यत्र "नाम्नि वा" [ १० ] इति वा आर् ॥ केचित्तु पक्षे ह्रस्वत्वमपीच्छन्ति । प्रऋजवन्ति ॥

प्राल्कारायितवेणीकाः प्रऌकारायितभ्रुवः ।
प्रल्कारयन्ति स्वे दन्तज्योत्स्नयात्र मृगीदृशः ॥ १६ ॥

---

१ सी डी °नेष्विव सा°.

---

१ एफ् °कीयैः प्र°.　२ सी डी °प्रतापैर°.　३ एफ् °वं त°.　४ सी डी °र्षे ऋ°.　५ सी डी एफ् °पि प्र°.　६ सी डी °र्षे ऋ°.

१६. अत्र पुरे प्राल्कारायिताः प्रकर्षेण ऌकारवदाचरितवत्यः । कुटिला इत्यर्थः । वेण्यः कबर्यो यासां ता एवं प्रल्कारायितभ्रुवो मृगीदृशो दन्तज्योत्स्नया दन्तकान्त्या कृत्वा खे व्योम्नि प्रल्कारयन्ति प्रकर्षेण ऌकारान् कुर्वन्ति दन्तानामतिनैर्मल्यान्मृगीदृशां दन्तकान्तय ऌकाराकारा व्योम्नि स्फुरन्तीत्यर्थः । दन्तकान्तिज्योत्स्नयोर्नैर्मल्यादिगुणैः सादृश्याद्दन्तकान्तिर्ज्योत्स्नात्वेन व्यपदिश्यते । अतो ज्योत्स्नाशब्दस्य चन्द्रिकावाचकस्याप्यत्र प्रयोगो न दुष्यति ॥

प्राल्कारायितं प्रल्कारयन्ति । इत्यत्र "ऌत्याल्वा" [ ११ ] इति वाल् ॥ अत्रापि पक्षे ह्रस्वत्वमित्येके । प्रल्कारायित ॥

उपस्थिते प्रभोः कार्ये गुणौघैर्धौतवृत्तयः ।
प्रैषप्रौढा इह प्रैष्याः प्रौहप्रौढिं न कुर्वते ॥ १७ ॥

१७. अत्र पुरे प्रभोः स्वामिनः कार्ये उपस्थित उपागते सति प्रैष्या भृत्याः प्रौहप्रौढिं प्रौहे कथमि करिष्यत इत्येवंरूपे वितर्के प्रौढिं प्रागल्भ्यं न कुर्वते यतः प्रैष इदमेवं कार्यमिति स्वामिनियोगे प्रौढाः समर्था दुष्करस्यापि स्वाम्यादेशस्य तत्क्षणादेव कारका इत्यर्थः । प्रैषप्रौढत्वमपि कुत इत्याह । गुणौघैः स्वामिभक्तिसुशक्तिस्थैर्यधैर्यादिभिर्धौतेव धौता निर्मला वृत्तिर्व्यापारो येषां ते ॥

ओघैः । गुणौघैः । इत्यत्र "ऐदौत्संध्यक्षरैः" [१२] इति ऐदौतौ ॥

धौत । इत्यत्र "ऊठा" [१३] इति औत् ॥

प्रैष । प्रैष्याः । प्रौढाः । प्रौढिम् । प्रौह । इत्यत्र "प्रस्यैष०" [ १४ ] इत्यादिनैा ऐदौतौ ॥

---

१ सी °ल्कारयि°. २ सी डी °कारयि°. ३ एफ् °दृशीद°. ४ बी सी °कान्तेर्ज्योत्स्नाया नै°. डी °कान्तेर्ज्योत्स्नायाश्च नै°. ५ सी डी °त प्रल्कारायित प्र°. ६ सी डी °कारयि°. ७ ए °ति प्रेष्या°. ८ सी डी प्रौढ्यं प्रा°. ९ एफ् °पि इत°. १० सी डी °क्तिस्थै°. ११ एफ् °ना एदौ°.

स्वैरिस्मराक्षौहिणीनां स्वैरस्त्रीणामभावतः ।
इहैव धर्मः सोद्येव त्रेतात्रेति वितर्क्यते ॥ १८ ॥

१८. इहैवाणहिल्लपाटक एव नान्यदेशेषु धर्मोस्तीति तथात्र पत्तनेद्येवाद्यापि कलिकालेपि स स्त्रीमहासतीत्वादिधर्मप्रधानत्वेन प्रसिद्धस्त्रेता द्वितीययुगमस्तीति च लोकैर्वितर्क्यते । इतिर्वाक्यसमास्त्यर्थ उभयत्रापि योज्यः । कुतः । अभावतोभावात् । कासाम् । स्वैरस्त्रीणाम् । स्व आत्मीयैः स्वेच्छाकृत ईर आसाम् । यद्वा । स्वेनात्मना न तु श्वशुराद्यनुज्ञयेरन्ति ईरते वा विचरन्ति "नाम्युपान्त्य°" [५.१.५४.] इत्यादिना के स्वैरा याः स्त्रियस्तासां कुलटानाम् । किंभूतानाम् । स्वयमीरितुं शीलमस्य स्वैरी स्वतन्त्रो यः स्मरः कामस्तस्याक्षौहिण्य इव दुःसाध्यानां कामविपक्षाणां मुनीनामपि रूपलावण्यलीलाकटाक्षविक्षेपादिशस्त्रैः साधकत्वात्सेनाविशेषा इव याः । यद्वा । स्वैरिण्यो याः स्मराक्षौहिण्यस्ता इव याः । तासाम् ॥

स्वैर । स्वैरि । अक्षौहिणीनाम् । इत्यत्र "स्वैरस्वैरि°" [१५] इत्यादिना ऐदौतौ ॥ यदा तु स्वैरिण्यश्च ताः स्मराक्षौहिण्यश्चेति समासस्तदा स्वैरिण्य इत्यत्र "नामग्रहणे लिङ्गविशिष्टस्यापि" [न्या° सू° १६] ग्रहणमिति न्यायादैत् ॥

अद्येव । इत्यत्र "अनियोगे लुगेवे" [१६] इत्यस्य लुक् ॥ नियोगे तु इहैव धर्मः ॥

नौतुनेत्रा न वृद्धोतुक्रूरा नाभौतुलम्पटाः ।
न दीर्घोष्ठा न ह्रस्वौष्ठा नौष्ठस्थूला इह स्त्रियः ॥ १९ ॥

१९. सुगमः । नवरं नौतुनेत्राः न मार्जारवत्कपिलरौद्राक्ष्यः । न च वृद्धोतुवत्क्रूराशयाः । न च बालौतुवल्लम्पटाः । तथा स्थूलशब्दोत्र गुण-

१ सी एफ् °ति वाक्य°. २ एफ् °यस्वे°. ३ बी सी न श्व°. ४ ए °व । य°. ५ सी डी स्वैरण्य°.

मात्रवाची । ओष्ठयोः स्थूलः स्थूलत्वं यासां ता ओष्ठस्थूला न । यद्वा । गुणिवचनः स्थूलशब्दः । नौष्ठाभ्यां स्थूलाः । न स्थूलोष्ठय इत्यर्थः ॥

दीर्घौष्ठाः ह्रस्वौष्ठाः । बृहोतु अभौतु । इत्यत्र "वौष्ठौतौ[1] समासे" [ १७ ] इति वाक्लुक् ॥ समास इति किम् । नौष्ठस्थूलाः । नौतुनेत्राः ॥

अत्रोपैति जनः स्वोढां न प्रोखति परस्त्रियम् ।
प्रेलितः श्रोत्रियोङ्कारैर्धर्मश्चास्मिन्नुपैधते ॥ २० ॥

२०. अत्र पुरे जनो लोकः स्वोढां स्वेनौढामात्मना परिणीतामुपैत्युपगच्छति[2] । सेवत इत्यर्थः । ननु स्वदारांस्तावत्सेवते परदारानपि[3] सेविष्यत इत्याह । परस्त्रियं परेणोढां नारीं न प्रोखति धार्मिकत्वान्न गच्छति । अत एवास्मिन्पुरे धर्मश्च[4] न केवलमुक्तनीत्या कामः किं त्वाद्यपुमर्थोप्युपैधते वर्धते । परस्त्रीवर्जनं हि परम[5]धर्मवृद्धिनिबन्धनं सर्वशास्त्रेषु गीयते । उत्प्रेक्ष्यते[6] । श्रोत्रियोंकारैः प्रेलित इव । श्रोत्रियाणां यजूणां[7] यागादिविधिकाल उच्चारणेन संबन्धिनो य ओंकाराः प्रणवास्तैः प्रेरित इव प्रेरितो वर्धस्व वर्धस्वेति दत्तानुमतिक इवेत्यर्थः । अत्रेत्य[9]लोकस्य परदारवर्जकत्वेन धर्मः स्वयमेव वर्धते श्रोत्रियैश्च यागादिविधौ वेदमं[10]त्रानुच्चारयद्भिः स्थाने स्थान ओंकारा उच्चार्यन्ते तेषां चानुमतेरप्यर्थस्य दर्शनादेवमुत्प्रेक्षा[11] । अत्रोत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादवसीयत इति । नचैवं[12]विधे विषय इवादिशब्दप्रयोगमन्तरेणासंबद्धतैवेति शक्यं वक्तुम् । गमकत्वात् । अन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात् । यथा माघकाव्ये ।

---

१ बी "वोष्ठौतौ. सी डी "वौष्ठोतौ. २ एफ् °पैति से°. ३ एफ् °पि न से° ४ एफ् °थः पु°. ५ बी °रमं ध°. ६ सी डी एफ् °त्प्रेक्षते. ७ सी ऊ इति । श्रो°. ८ सी डी °णां या°. ९ ए °त्र लो°. १० एफ् °मन्त्रोच्चा ११ सी डी °क्षा सा°. १२ एफ् °वं विध°.

त्रासाकुलः परिपतन्परितो निकेतान्पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः कचिदङ्गनाभिराकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥५.२६.

परितः सर्वतो निकेतान्परिपतन्नाक्रामन् कैश्चिदपि चापपाणिभिरसौ मृगोनुबद्धस्तथापि न कचित्तस्थौ त्रासचापलयोगात्स्वाभाविकादेव । तत्र चोत्प्रेक्षा ध्वन्यते । अङ्गनाभिराकर्णपूर्णैर्नेत्रशरैर्हृतेक्षणश्रीः सर्वस्वभूतास्य यतोतो न तस्थौ । नन्वेतदप्यसंबद्धमस्तु । न । शब्दार्थव्यवहारे हि प्रसिद्धिरेव प्रमाणम् । एवमन्यत्रापि ज्ञेयम् ॥

ओत्रियोंकारैः । स्वोढाम् । इत्यत्र "ओमाङि" [१८] इत्यलुक् ॥ आङि दीर्घत्वेनैव सिद्धे लुग्विधानमनर्थकं स्यादित्याङित्याङादेशो गृह्यते । तेन आ ऊढा ओढा । ततस्तेन समासः ॥

प्रेक्षितः । प्रोक्षति । इत्यत्र "उपसर्गस्य०" [१९] इत्यादिनाऌुक् । अनिणेधिति किम् । उपैति । उपैधते ॥

अत्र गुर्वर्थपित्र्यर्थनतिलाकृतिभिर्जनैः ।
प्रोजायते प्रौषधयन् धर्मः प्रेकत्युपैकितैः ॥ २१ ॥

२१. अत्र पुरे धर्मः प्रोजायते प्रकर्षेणौजस्वीव बलिष्ठ इवाचरति । कैः कृत्वा । जनैः । किंभूतैः सद्भिः । गुरुर्धर्माचार्यो विद्याचार्यो वा तस्मा इयं गुर्वर्था । पितरौ मातापितरौ ताभ्यामियं पित्र्यर्था । द्वन्द्वे ते ये नती प्रणामौ ताभ्यामेव न तु रोगादिना ऌकारस्येव ॡकारस्येव वा वक्रा आकृतिः संस्थानं येषां तैः । विनीतैरित्यर्थः । अत एवोपपन्नं यथा स्यादेवमेक इव मुख्या इवाचरन्ति स्म । किपि के च उपैकिताः । तैः । सर्वगुणमूलविनर्यवत्त्वेन प्रधानैरित्यर्थः । यथौजस्वी स्वौजसा शत्रून् पराभवति

१ एफ् °तान् पत°. २ बी एफ् °न्नाक्रम°. ३ एफ् °नारा°. ४ सी डी बो न. ५ सी डी एफ् °स्तु । श°. ६ बी आङ् दी°. ७ एफ् °धि इति. एफ् °यत्वेन°.

स्वानुकूलान् स्वजनादींश्च पोषयति[1] तथा धर्मोप्यत्रत्यजनविनयलक्षणेन[2] महाबलेन बलिष्ठत्वादहंकारादीन् स्वशत्रूनभिभवति स्वानुकूलान् दानशीलादींश्च पोषयतीत्यर्थः । अत एव प्रेकति प्रकर्षेणैक इवासाधारण इवाचरति । बलिष्ठत्वेन निःसपत्नत्वान्निरुपमो भवतीत्यर्थः । उत्प्रेक्ष्यते[3] । प्रौषधयन् । पूर्ववदुत्प्रेक्षात्रावसेया । प्रकर्षेण बलकान्त्यादिवृद्धिकरीमोषधिं[4] कुर्वन्निव । णिज् । करोतिः सामान्यकरणार्थोपि प्रस्तावादिह विशेषे भक्षणकरणे वर्तते । यद्वा । अनेकार्थत्वाद्धातूनां करोतिरिह भक्षणार्थस्तेनौषधिं भक्षयन्निवेत्यर्थः । यो हि बलकान्त्यादिवृद्धिकरीमोषधिं[5] भक्षयति स तत्प्रभावादोजस्वी निरुपमश्च स्यात् । अचिन्त्यो हि मणिमन्त्रौषधीनां[6] प्रभावः ॥

रजतं चारु ईक्षित्वा हारि अत्र च काञ्चनम् ।
दधियेतन्मधुवेतत्कुमारी एवमूहते ॥ २२ ॥

२२. सुगमः । नवरं हारि जात्यत्वाद्रम्यम् । एतत्प्रत्यक्षं वस्तु[7] दधि वर्तते । एवं तथैतत्प्रत्यक्षं[8] वस्तु मधु वर्तते । एवं च बालिका वितर्कयति । सावर्ण्याद्बाल्याच्चैवमूहः । एवमिति भिन्नक्रमे यथास्थानं योजित एव । एवंशब्देनैव कर्मण उक्तत्वादधियेतदित्यत्र मधुवेतदित्यत्र च नामार्थमात्रे प्रथमैव ॥

रोदस्यौ पावयन्त्येनोलवन्यौर्वाग्निनायिनी ।
अन्येतिवृत्ता ब्राह्मयत्र गव्यनाव्यजला नदी ॥ २३ ॥

२३. अत्र पुरे ब्राह्मी ब्रह्मणोपत्यं नदी सरस्वत्यस्ति । कीदृशी । ब्रह्मणः पुत्रीत्वेन महातीर्थत्वादेनः पापं लूयतेनयेत्येनोलवनी । अत एव रोदस्यौ द्यावापृथिव्यौ पावयन्ती[9] पवित्रयन्ती । तथौर्वाग्निं[10] वडवानलं

१ एफ् °षति. २ बी °क्षणम°. सी एफ् °क्षणे म°. ३ सी डी एफ् °त्प्रेक्षते. ४ बी सी डी °रीमौष°. ५ बी सी °रीमौष°. ६ एफ् °मन्त्रमहौष°. ७ सी डी °स्तु मधु. ८ एफ् °थैव त°. ९ सी डी °यन्ति । सा°. १० ए बी °न्ती त°.

समुद्रमवश्यं नीतवती "णिन् चावश्यकाधमर्ण्ये" [५.४.३६.] इति णिनि और्वाग्निनायिनी। सकलं जगद्भक्षयिष्यामीति वदन्तं वडवाग्निं ब्रह्मादिष्टा सरस्वती समुद्रे प्रक्षिप्तवतीति पुराणम्। अत एव श्रव्यं श्रवणार्हमितिवृत्तं चरितं यस्याः सा। तथा गव्यं सुस्वादुशीतलशुभपरिणामत्यादिना गोभ्यो हितं नाव्यं चागाधत्वान्नावा तार्यं च जलं यस्यां सा। एतेनास्य पुरस्यातिपावित्र्यं निर्दोषजलप्राचुर्यं चोक्तम्॥

न गव्यत्यत्र गोयानो नौयानो न च नाव्यति।
उपोयमानः श्राव्याभिर्लौयमानीसुगीतिभिः॥ २४॥

२४. अत्र पुरे गोयानो वृषवाहनो नरो न गव्यति[2] न गामिच्छति तथा नौयानश्च प्रवहणवाहनः पुमान्न नाव्यति न नावमिच्छति। यतः श्राव्याभिर्मधुरतयावश्यं श्रवणार्हाभिर्लौयमानीसुगीतिभिः। लूयते कूर्चश्रेण्यां लूयमानो देवलो मार्दङ्गिकादिस्तस्यापत्यानि स्त्रियः "अत इञ्" [६.१.३१.] लौयमान्यो गायन्यः। यद्वा। लूयन्ते लूयमानाः केदारास्तेषामिमा रक्षित्र्यः "तस्येदम्" [६.३.१६०.] इत्यणि लौयमान्यो गोप्यः। तासां सुगीतयः शोभनगानानि। ताभिरुपोयमानो व्याप्यमानः। आवर्ज्यमान इत्यर्थः। एवं नाम सुगीतीनां माधुर्यादिगुणैर्हृतहृदया यावता स्वस्य यानहेतुत्वेनात्यभीष्टमपि गवादिकं यानं चौराद्यैरपह्रियमाणमपि गोयानादयः सुगीतिश्रवणभङ्गभयेनावहेलयन्तीत्यर्थः॥

प्रेकति उपैकितैः। प्रोजायते प्रौवधयन्। इत्यत्र "वा नाम्नि" [२०] इत्यस्य लुग्वा॥

प्रेकत्युपैकितैः। गुर्वर्थं। पित्रर्थं। लाकृतिभिः। इत्यत्र "इवर्णादेः°" [२१] इत्यादिना यवरलाः॥ केचित्त्विवर्णादिभ्यः परान् यवरलानिच्छन्ति। दधियेतत्। मधुवेतत्। तन्मतसंग्रहार्थमिवर्णादेरिति पञ्चमी व्याख्येया॥

---

१ सी °स्वादशी°. २ सी डी °ति त°. ३ पफू °वल°.

हारि अत्र । चारु ईक्षित्वा । इत्यत्र "ह्रस्वोपदे वा" [२२] इति वा ह्रस्वः ॥ पक्षे । माहत्यत्र ॥ कश्चित्तु प्रकृतिभावमपीच्छति । कुमारी एवम् ॥ अपद इति किम् । रोदस्यौ ॥

पावयन्ती । औवाँग्निनायिनी । इत्यत्र "एदैतोयाय्" [२३] इत्ययायौ ॥

लवनी । पावयन्ती । इत्यत्र "ओदौतोवाव्" [२४] इत्यवावौ ॥

गव्यति । नाव्यति । अव्य[1] । आव्याभिः । गव्य । नाव्य । इत्यत्र "य्यक्ये" [२५] इत्यवावौ ॥ अक्य इति किम् । उपोयमानः[2] । लौयमानी ॥ क्यवर्जनाद्यकारादिः प्रत्ययो गृह्यते । तेनेह न भवति । गोयानैः[3] । नौयानः ॥

पित्र्ये पक्षेत्र वीक्षन्ते[1] गवाक्षस्थाः पुरन्ध्रयः ।
गोक्षानन्दितृणां भूमिं गवाक्षानन्दिनीं नदीम् ॥ २५ ॥

२५. अत्र पुरे पितृषु साधुः पित्र्यस्तस्मिन् पित्र्ये पक्षे श्राद्धपक्षे गवाक्षस्था वातायनस्थिताः पुरन्ध्रयो विलासिन्यो भूमिं वीक्षन्ते विशेषेण पश्यन्ति । यतो गवां धेनूनां वृषभाणां चाक्षाणीन्द्रियाणि तेषां तृप्तिहेतुत्वादानन्दीनि आह्लादनशीलानि तृणानि हरितानि यस्यां ताम् । तथा नदीं सरस्वतीं च वीक्षन्ते । यतो गवाक्षानन्दिनीं तृष्णाद्युच्छेदकत्वाद्गवेन्द्रियाणामाह्लादयित्रीम् । शरदि हि भूमिर्हरिताभिरामत्वेन नदी च स्वच्छजलपूर्णत्वेन विशेषेण दर्शनीया स्यात् । एतेनात्र महर्द्धिकातिसुखिता विलासिन्यः सन्तीत्युक्तम् ॥

---

१ सी डी एफ् वीक्ष्यन्ते.

---

१ ए अव्यः ।. २ एफ् °मानः ।. ३ सी डी एफ् °नः ॥ २४ ॥ ४ सी गवां क्षान°. ५ डी एफ् °णां वाक्षा°.

गवोष्ट्रिभिर्गवेन्द्रांसैर्गवुष्ट्रप्रियवीरुधः ।
गोअग्रस्थायिभिश्चास्य निषेव्यन्ते बहिर्भुवः ॥ २६ ॥

२६. अस्य पुरस्य बहिर्भुवो बाह्यभूमयो गावश्चोष्ट्राश्च गवोष्ट्रमस्त्येषां तैर्गवोष्ट्रिभिर्गोपालोष्ट्रपालैर्गवोष्ट्रस्य चारणाय निषेव्यन्ते । किंभूतैः । गवामिन्द्रो गवेन्द्रः शण्डस्तदंसवदंसौ स्कन्धौ येषां तैः । गोदुग्धोष्ट्रीदुग्धपानेनावलितस्कन्धैरित्यर्थः । तथा गोर्वृषस्याग्रमग्रभागः ककुत्प्रदेशस्तत्र तिष्ठन्तीत्येवंशीलास्तैर्गोअग्रस्थायिभिश्च वीवधाहारिभिश्च वीवधाहरणाय च सेव्यन्ते । यतः कीदृश्यः । गवुष्ट्रस्य वृषकरभव्रजस्योपलक्षणादश्वादेश्च प्रिया वीरुधो लता यासु ताः । पत्तनगोचरे हि वृषभोष्ट्रादिप्रियचारिसंकीर्णं महद्वनमस्ति ॥

पित्र्ये । इत्यत्र "ऋतो रत्स्वद्धिते" [२६] इति रादेशः ॥

पक्षेत्र । गोक्ष । इत्यत्र " एदोतः०" [२७] इत्यादिनास्य लुक् ॥

गवाक्ष । इत्यत्र "गोर्नाम्नि०" [२८] इत्यादिना अवादेशः ॥ नाम्नीति किम् । गोक्ष[4] ॥ कश्चित्त्वसंज्ञायामपि गवाक्षेतीच्छति ॥

गवोष्ट्रिभिः गवुष्ट्र । इत्यत्र "स्वरे वानक्षे" [२९] इति वावादेशः ॥ अनक्ष इति किम् । गोक्ष ॥

गवेन्द्र । इत्यत्र "इन्द्रे" [३०] इत्यवः ॥

गोअग्र । इत्यत्र "वात्यसंधिः" [३१] इति वासंधिः ॥ पक्षे । गोक्ष[5] ॥

व्रज३ आस्स्वेति मा वास्स्व३ इति स्वाधीनभर्तृकाः ।
इदं ब्रूहि३ इदं मा वा ब्रूहीत्याहुरिह प्रियम् ॥ २७ ॥

२७. सुगमः । नवरं व्रज३ इत्यत्र इदं ब्रूहि[6] इत्यत्र च वाक्यपरि-

---

१ ए °षां ते गो°. २ ए एफ् °ला ये तैर्गो°. ३ डी सी °दृशो ग°. ४ एफ् गोक्षः ।. ५ एफ् गोक्षः ।. ६ ए सी डी ब्रूहीत्य°.

समास्यर्थे इतिशब्दो योज्यः । तथा स्वाधीनो रतगुणाकृष्टत्वेनायत्तो भर्ता यासां ताः स्वाधीनभर्तृकाः "क्षियाशीः प्रैषे" [७.४.९२.] इति सर्वत्र प्लुतः ॥

प्रज३ आस्स्व । इत्यत्र "प्लुतोनितौ" [३२] इत्यसंधिः ॥ अनिताविति किम् । आस्स्वेति । अत्र प्लुतस्य संधिः ॥ केचिदिवितिशब्दे विकल्पमिच्छन्ति । आस्स्व३ इति आस्स्वेति ॥

ब्रूहि३ इदम् । इत्यत्र "इ३ वा" [३३] इति वासंधिः ॥ पक्षे । ब्रूहीति । अत्रापि प्लुतस्य संधिः ॥

मणी इव जपावर्णकुसुमे हारिणी अपि ।
अहो३ किं स्वि३दमू३ अग्नी३ इत्युज्झ्येते इहार्भकैः ॥ २८ ॥

२८. इह पुरे जपावर्णकुसुमे जपा वर्णश्च वृक्षभेदौ तयोः कुसुमे मणी इव रत्ने इव हारिणी अपि । मणयो हि सामान्येन कान्तिमन्तो रक्ताश्च वर्ण्यन्त इति कान्तिमत्तारक्तताढ्यतया मनोहरे अप्यर्भकैर्बालकैरुज्झ्येते त्यज्येते । ननु बालका रम्यं वस्तु कौतुकाद्बालस्वभावाच्च प्रत्युत गृह्णन्ति तत्किमिति हारिणी अपि ते त्यज्येते इत्याह । अहो ३ किंस्वि३दमू३ अग्नी३ इतीति । अमू जपावर्णकुसुमे किमग्नी वह्निकणाविति बुद्ध्या । अहो इति किंस्विदिति च निपातद्वयं वितर्कातिशयद्योतनाय । वितर्कस्य चान्तरात्मप्रश्नरूपत्वात् "प्रश्ने च प्रतिपदम्" [७.४.९८.] इति प्लुतः ॥ सावर्ण्याद्बाल्याच्चाग्निकणभ्रान्तिः ॥

---

१ सी डी °वर्णे कु°.

---

१ पफ् °ति प्लु°. २ सी डी °श्च वा. ३ सी डी °र्बालैरु°. ४ सी °तनद्व°. ५ पफ् °ल्याद्दाग्नि°.

मणीव मसृणौ चक्रदंपतीव युतौ स्तनौ ।
विजेतुं रोदसीवात्र स्त्रीणां भातः स्मरायुधे ॥ २९ ॥

२९. अत्र पुरे स्त्रीणां स्तनौ भातः । कीदृशौ । मणीव रत्ने इव मसृणौ कठिनकोमलौ । तथा चक्रदंपतीव । जाया च पतिश्च दंपती चक्रश्च चक्री च चक्रौ चक्रौ च तौ दंपती च चक्रदंपती चक्रवाकमिथुनम्[1] । तौ यथा प्रेमातिरेकादन्योन्यं युतौ भवतस्तथा युतावति-[2] स्थूलत्वादन्योन्यं मिलितौ । उत्प्रेक्ष्येते[3] । रोदसी द्यावापृथिव्यौ जेतुं[4] पराभवितुं स्मरायुधे इव कामशस्त्रद्वयमिव रोदस्योरपि द्वयोर्जेतव्य-त्वात् ॥

हारिणी अपि । अमू३अग्नी । उज्ज्येते इह । इत्यत्र "ईदूदेद्विवचनम्" [३४] इत्यसंधिः ॥ एषां प्लुतानामितावपि संधिर्न स्यात् । अग्नी३इति ॥ केचित्तु मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ ममेति[5] प्रयोगदर्शनान्मणी इव मणी-वेत्यादावसंधिप्रतिषेधं वर्णयन्ति तदयुक्तम् । वाशब्देनोपमार्थेन सिद्धत्वात् ॥ अन्ये तु यथादर्शनं संधिमसंधिं वेच्छन्ति । मणीव । दंपतीव । रोदसीव[6] । मणी इव ॥

अमी अमुमुईचोस्य नखाः कण्ठे इ ईक्षिताः ।
अ[1] एहि त्वमु उत्तिष्ठ यद्या एवं नु मन्यसे ॥ ३० ॥
ऊ ऊहस्व त्वमे अस्मिकी ईदृशि रतिः कथम् ।
तदो अलमनेनेति सखीमाहात्र मानिनी ॥ ३१ ॥

३०, ३१. अत्र पुरे किल काचिन्नायिका पत्यौ सपत्नीनखक्षता-

---

१ सी अत ए°.

---

१ डी °नमेतौ. २ एफ् °ताविति°. ३ सी डी °त्प्रेक्षेते. एफ् °त्प्रेक्षते. ४ सी डी °तुं स्म°. ५ डी °ति प्रायो°. ६ ए °सीव ॥.

दिकं दृष्ट्वात्यन्तं दृष्टा पादपातादिकां प्रसादनक्रियां कुर्वाणेपि मानिनी-त्वाद्यदा कथमपि न प्रसीदति तदा तत्सखीपार्श्वात्स तां प्रसादयति। तां च सखीमनुनयार्थं पत्यपराधं निगूहयन्तीं[३] मानिनी क्ष्याह ब्रूते। यथा। अ इति संबोधने। हे सखि एहि मद्वचःश्रवणाय मत्पार्श्वमागच्छ। इ इति संबोधने। हे सखि अमूं विप्रकृष्टवर्तिनीं सपत्नीमश्नति गच्छति यस्तस्यामुमुईचोस्य प्रियस्य कण्ठेमी प्रत्यक्षवर्तिनो नखास्त्वये-क्षिता दृष्टाः। एवं[४] तया प्रत्यक्षमपराधे दर्शितेपि यावदद्यापि सखी किंचिन्न प्रतिवदति तावन्मानिनी मदुक्तं सत्यमप्येषा नाङ्गीकरोतीति कोपाविष्टाह। उ उत्तिष्ठ यद्या एवं नु मन्यस इति। उ इति संबोधने। आ निरनुबन्धः पूर्ववाक्यार्थवैपरीत्ये वर्तते। पूर्वं यत्त्वया पत्यपराद्धं मनितं तद्यदीदानीमेवं नु मन्यसे नु निश्चितमन्यथा मन्यसे तदा हे सखि उत्तिष्ठ मत्पार्श्वाद्गच्छ पूर्वं मनितस्यार्थस्य केनापि द्रव्यलोभादिना हेतुनान्यथाभाषिण्या त्वयापि न प्रयोजनमित्यर्थः॥ एवं[५] परुषोक्तौ सखी मा रुषदिति विचिन्त्य पुनस्तां[६] सान्त्वाह। ऊ ऊहस्वेत्यादि। ऊ इत्यक्ष-मायाम्। पतिमक्षाम्यन्ती प्राह। ए इति संबोधने। हे सखि त्वमूहस्व त्वमेव स्वचेतसि पर्यालोचय। ई इति खेदे। खिद्येहमीदृशि व्यक्तमत्यन्त-मपराद्धर्यस्मिन् पत्यौ[७] विषये कथं रतिः प्रीतिः स्यात्। न कथमपीत्यर्थः। ओ इति संबोधने। हे सखि तत्तस्माद्धेतोरनेन पत्यालम्। सृतमिति॥

न जानू अरुजल्लङ्कां भ्रमतो यस्य मारुतेः।
अहो आन्तं जिगमिषो रुजेत्तस्यापि जान्विह॥ ३२॥

३२. जानू इत्यत्र उ लोकसंबोधने। हे लोका यस्य मारुतेर्हनूमतो लङ्कां रावणपुरीं भ्रमतो दहनाय पर्यटतः सतो जान्वष्ठीवाभारुजन

१ सी °सान°. डी °साधन°. २ डी °दा कदा क°. ३ सी एफ् °यन्ती मा°. ४ एफ् °वं प्र°. ५ सी एफ् °वं पुरु°. ६ एफ् °स्तां सकोमलवचसा सा प्राह। ७ एफ् °लौ क°.

श्रान्तम् । अहो इत्याश्चर्ये । जान्विहेत्यत्र उ इति संबोधने । हे लोका आश्चर्यं तस्यापि मारुतेरपीह पुर आन्तादन्तं मर्यादीकृत्याभिव्याप्य वा श्रीविशेषविलोकनाय जिगमिषोर्गन्तुमिच्छोः सतो जानु रुजेत् खिद्येत। संभावने सप्तमी । इदमहं संभावयामीत्यर्थः । एतेनास्य लङ्कासकाशादपि महत्तमत्वोक्तिः ॥ आन्तमित्यत्र क्रियाविशेषणे द्वितीया [ २. २. ४१. ] ॥

अमी अमुमुईचः । इत्यत्र "अदोमुमी" [३५] इत्यसंधिः ॥

अ एहि । आ एवं नु मन्यसे । इ ईक्षिताः । ई ईदृशि । उ उत्तिष्ठ । ऊ ऊहस्व । ए अस्मिन् । ओ अलम् । इत्यत्र "चादिः स्वरोनाङ्" [३६] इत्यसंधिः ॥ स्वरे पर इति प्रत्यासत्तेस्तन्निमित्तकसंधिप्रतिषेधादिह दीर्घत्वलक्षणः संधिर्भवत्येव । जानू अरुजत् ॥ केचित्तु चाद्यचादिस्थानस्याचादिरूपत्वात्स्वरनिमित्तकमपि संधिमिच्छन्ति । जान्विह ॥ अनाङिति किम् । आन्तम् ॥

अहो आन्तम् । इत्यत्र "ओदन्तः" [३७] इत्यसंधिः ॥

उ इत्यूँ इति विति[1] चाहो इत्याह्वायके गुरौ ।
विभो इति प्रभविति चाहात्र विनयी जनः ॥ ३३ ॥

३३. सुगमः । नवरं[2] सर्वत्र उ इति संबोधने । आगच्छेत्यादिका च क्रिया सर्वत्राध्याहार्या । संबोध्यानां[3] च बहुत्वाद्बहूनि संबोधनपदानि[4] । तथा विभो इति प्रभवितीत्येतयोः प्रत्युत्तरवाक्ययोरादिशेत्यादिक्रियाध्याहार्या । उपलक्षणत्वाद्भगवन्नित्यादीन्यपि गुरुसंबोधनपदानि ज्ञेयानि । प्रत्युत्तरदायिनामनेकत्वात् । इतिः[5] सर्वत्र वाक्यपरिसमाप्तौ ॥

१ ए एफ् °ति वाहो.

१ सी डी °तमोक्तिः ।. २ एफ् °रं उ इति स°. ३ डी °बोधनीयानां. ४ एफ् °नि ज्ञेयानि । त°. ५ सी डी °ति स°.

बिभो इति प्रभविति । इत्यत्र "सौ नवेतौ" [३८] इति वासंधिः ॥

उ इति । इत्यत्र "ऊँ चोञ्" [३९] इति वासंधिः । असंधिपक्षे च उञ् ऊँ इत्येवंरूपो दीर्घोनुनासिको वा । ऊँ इति ॥ पक्षे । संधिः । [2] विति ॥ ञित्करणं स्वरूपपरिग्रहार्थम् । तेन विकृतस्य न भवति । अह [3] उ अहो इति ॥

किमु अम्बा किमु तातः किम्वीशो गीरु इत्यभूत् ।
गुरुं प्रति नृणामत्र वृद्ध्यै घञु अलं यथा ॥ ३४ ॥

३४. अत्र पुरे [4] गुरुं धर्माचार्यं [5] विद्याचार्यं वा प्रति [6] लक्ष्मीकुल्येवं- विधा नृणां गीर्वाणी वृद्ध्यै धर्नसंतत्यादिवृद्धिनिमित्तमलं समर्थाभवत् । भवति हि वृद्धिः पूज्येषु पूजोपचारवचनादि[10]ना । का गीरित्याह । उ हे गुरो वात्सल्यपरमोपकारित्वादिना त्वमस्माकं किमु अम्बा किमु किं वा तातः किम्वीशः किंवा स्वामीति । यथा उ हे लोका घञ् प्रत्ययो ञा- नुबन्धत्वाद्वृद्ध्यायैकारौकारार्लक्षणायै समर्थो भवति । शब्दसाम्येनो- पमा । किमुशब्दा उनिपातयुताः सर्वेपि[11] वितर्कस्य वाचकाः ॥

किम्वीशः । इत्यत्र "अञ्वर्गात्[12]०" [४०] इत्यादिना वकारो वा स चासन् । असत्त्वादनुस्वारानुनासिकाभावः ॥ पक्षे । किमु अम्बा ॥ वर्गादिति किम् । गीरु इति ॥ अञिति किम् । घञु अलम् ॥ स्वर इति किम् । किमु तातः ॥

सामँ साम ध्रुवं तावद्दधिँ दधि मधुँ मधु ।
श्रूयन्ते सुभ्रुवामत्र न यावन्मधुरा गिरः ॥ ३५ ॥

३५. सामवेददधिमधूनि हि अतिमधुरत्वादिप्रधानगुणोपेतानि स्युः ।

---

१ डी वा भवति प°. २ प डी पफू °ति ॥ कि°. ३ डी उ अहो अ°. ४ डी गुरुधर्माचार्यं वा. ५ सी पफू °र्थं वा. ६ सी डी लक्ष्मीकु°. ७ बी °कुलेत्येवं°. सी °कुल्येवं. ८ पफू °संपत्त्या°. ९ सी डी भवेत् ।. १० सी डी °दि का°. ११ सी °पि त°. १२ पफू °र्गादि°.

परमेतानि तावदेव स्वेनस्वेनातिमाधुर्यादिप्रधानगुणेनोपेतानि यावदत्र पुरे सुभ्रुवां गिरो न श्रूयन्ते । तासु चातिमधुरतमत्वादिप्रधानैतमगुणोपेतासु श्रुतासु सामादि न किंचिदित्यर्थः । अत्राद्याः सामादिशब्दाः सामवेदादिवाचकाः । द्वितीयास्तु तद्गुणवाचकाः । तावद्यावतोः "क्रियाविशेषणात्" [ २. २. ४१. ] इति "कालाध्वनोर्व्याप्तौ" [ २. २. ४२. ] इति वा द्वितीया ॥

अमू पाणी मृदू पद्मे किमु किं नु नखा अमी ।
केसराणीति तर्क्यन्ते जनैरस्मिन्मृगीदृशाम् ॥ ३६ ॥

३६. अस्मिन्पुरे जनैर्मृगीदृशां स्त्रीणां पाणी नखाश्च तर्क्यन्ते । कथमित्याह । अमू प्रत्यक्षौ मृदू कोमलौ पाणी किमु पद्मे तथामी पाणिस्था नखा रक्तत्वान्मृदुत्वाच्च किं नु केसराणि पद्मस्थानि किञ्जल्कानीति ॥

सामँ साम । दधिँ दधि । मधुँ मधु । इत्यत्र "अइउवर्णस्य०" [४१] इत्यादिना वानुनासिकः ॥ अन्त इति किम् । गिरः । मधुराः ॥ अनीदादेरिति किम् । पाणी । अमू । मृदू । अमी । किमु ॥

द्वितीयः पादो लक्षणतः समर्थितः ॥

एतज्यायान् क्षमौ स्तोतुं न चतुर्मुखषण्मुखौ ।
हेतुर्वृद्धेरेतणिणद्वञ्भिद्ढ्येत सूरिभिः ॥ ३७ ॥

३७. आस्तां तावदेकमुखः कश्चिद्यावच्चतुर्मुखषण्मुखावपि । अ-

---

१ एफ् ॥ ३६ ॥ द्वितीयपादो लक्षण° ॥

---

१ सी डी °गुणोपे°. एफ् °गणेनोपे°. २ एफ् °नगु°. ३ डी ३६ ॥ स्त्री°. ४ डी °त्वाच्च. ५ डी किम् पा°. ६ एफ् °दादिरि°. ७ एफ् °मु ॥ ३६ इति द्वितीयः पादः ॥

पिरत्राध्याहार्यः । अन्नस्कन्दावप्येतन्न्यायानस्य पुरस्य नीतीः स्तोतुमेतावन्त ईदृशाश्चात्र न्याया इति वर्णयितुं न क्षमौ न समर्थौ । एतेनात्रत्यन्यायानां श्रेष्ठतमत्वमसंख्यत्वं चोक्तम् । अत एवैतत्पुरं सूरिभिस्तत्त्वातत्त्वविवेककुशलैर्वृद्धेर्धनधान्यद्विपदचतुष्पदादिसमृद्धिवर्धनस्य हेतुः कारणं ब्रूयेत कथ्यते । वर्तमानाया अर्थेपि क्वचित्सप्तमी दृश्यते । भवति हि न्यायवति पुरे लोकः श्रीपात्रम् । यद्वा । सूरिभिर्वास्तुविद्याकुशलैर्वास्तुविद्यानुसारेण निर्मितत्वाद्वृद्धेर्हेतुर्ब्रूयेत । वास्तुविद्यानतिक्रमेण निर्मिते हि पुरे श्रीर्विजृम्भते । णिद्वञ्णिद्वदिति । यथा णित् णानुबन्धो णिगादिर्ञित् ञानुबन्धो ञिजादिश्च प्रत्ययो वृद्धेरैदौदार्लक्षणाया हेतुः सूरिभिर्वैयाकरणैः कथ्यते ॥

अस्मिन् सागरुधूमेब्दशङ्काभाग्णशिखः शिखी ।
समुत्कचञ्चुरुद्गम्य सुवाङ्कवत उन्मनाः ॥ ३८ ॥

३८. सहागरोर्धूमेन वर्तते यत्तस्मिन् सागरुधूमेस्मिन् पत्तने णवण्णकाराकारा शिखा चूडा यस्य स णशिखस्तथा ञकाराकारा चञ्चुर्यस्य स ञचञ्चुः । नागरलिपौ हि णकारञकारावेवं लिख्येते । यथा । ण ञ । शिखी मयूर उद्गम्य ग्रीवामूर्ध्वीकृत्य सुवाग्मधुरस्वरं यथा स्यादेवं क्वते केकायते । कीदृक् सन् । अब्दशङ्काभाग् मेघवितर्कवान् । अत एव सुहृत्संगमाभिप्रायेण समुत्सहर्षः । अत एव चोन्मना उत्कण्ठितः । एतेनैवं नामार्गुरुः प्रभूतो देवगृहेषु विलासिभवनेषु च दन्दह्यते यावता तद्धूमो नभस्तलेभ्रपटलविभ्रमं वहतीत्युक्तं स्यात् ॥

१ एफ् °पि अत्रा°. २ सी °भ्रम् । सू°. डी °भ्रम् । अथवा सू°. ३ सी एफ् °गरधू°. ४ सी डी ण इव णका°. ५ बी °ञास्य. ६ बी सी डी °मागुरुः. ७ एफ् °ञुद°.

विप्रबन्धूः । अप्राणिनश्च । कर्कन्धू । इत्यत्र "उतोप्राणिनश्च°" [७३] इत्यादिनोङ् ॥ अप्राणिनश्चेति किम् । न्यङ्कु ॥ जातेरित्येव । पटु ॥ अयुरज्ज्वादिभ्य इति किम् । अध्वर्युम् । रज्जु ॥

मद्रबाहूम् । कद्रू । कमण्डलूम् । इत्यत्र "बाह्वन्त°" [७४] इत्यादिनोङ् । नाम्नीति किम् । कोमलबाहुम् ॥

करभोरु सहोरु संहितोरुवामोर्वावशफोरु लक्ष्मणोरु ।
सहितोरु सुखं वरोरुनारीश्वश्रूसख्यभ्यर्णगा इहाध्वम् ॥ ८२ ॥

युवते पङ्गूनु दैवदत्त्ये वाराहे वाराहि दाक्षि यूनि ।
वासिष्ठी कापटव्युपान्ते माध्वं पश्यत बाहुविक्रमं नः ॥ ८३ ॥

पौणिक्ये क्रौड्य एहि लाड्ये सूत्ये भोज्ये तिष्ठ सुश्च भोजे ।
व्रज सूते दैवयज्ञि काण्ठेविद्ध्ये काण्ठेविद्ध्यनुप्रपन्ने ॥ ८४ ॥

धीरा भव सात्यमुग्रि दैवयज्ञ्यासखि मास्स्वातिसात्यमुग्र्या ।
शौचेर्वृक्ष्येथ शौचिवृक्ष्याळीत्यूचुः प्रयुयुत्सवः स्वकान्ताः ॥ ८५ ॥

८२–८५. प्रेयुयुत्सवो योद्धुमिच्छवो भटाः स्वकान्ता इत्यूचुः । यथा हे करभोरु करभः कनिष्ठाङ्गुलेर्मणिबन्धस्य चान्तरं स इव मृदू निर्मलौ वोरू सक्थ्नी यस्याः । तथा हे सहोरु

सहः संबन्धसादृश्ययौगपद्यसमृद्धिषु ।
साकल्ये विद्यमाने च

इति वचनात्सह सदृशावेकादृशौ समृद्धौ वोरू यस्याः । तथा हे सं-

१ ए सी °हाक्कु°. डी हाक्कु°. २ ए सी क्रौड ए°. ३ ए सी डी वृक्षाळी°.

१ ए सी डी °बाहुम् ।. २ ए सी डी प्रायु°. ३ बी सक्थनीय°. ४ ए सी डी °स्याः । यथा. ५ ए सी डी °ह स°. ६ बी °ति वाच°.

हितोरूवामोर्वौ संहितौ जानुकटीभ्यां सह सुसंधानावूरू यस्याः सा च वामोरूश्च चारुसक्थिका च। तथा हे अशफोरु अनिन्द्यसक्थिके हे लक्ष्मणोरु लक्ष्मीरस्त्यनयोः "लक्ष्म्या अनः" [७.२. ३२] इत्यनेन लक्ष्मणौ श्रीमन्तावूरू यस्याः। तथा हे सहितोरु सुघटितोरु सुखं यथा स्यादेवमिह प्रदेशे वरोरुनारीश्वश्रूसख्यभ्यर्णगाः प्रशस्योरूणां वनिताश्वश्रूवयस्यानां निकटस्था यूयमाध्वं तिष्ठत। तथा हे युवते तरुणि हे दैवदत्त्ये देवदत्तस्य पौत्रि हे वाराह्ये वराहस्य पौत्रि हे वाराहि वराहपुत्रि हे यूनि तरुणि दाक्षि दैक्षपौत्रि वसिष्ठस्यापत्यं पौत्रादि स्त्री "ऋषिवृष्णि०" [६.१. ६०] इत्यादिनाणि वासिष्ठी कपटोरपत्यं वृद्धं स्त्री कापटवी। द्वन्द्वे तयोः समीपे पङ्गूतुं पादरहितेव माध्वं मा तिष्ठत। तर्हि किं कुर्म इत्याहुः। नोस्माकं बाहुविक्रमं पश्यत। तथा हे पौणिक्ये पुणिकस्य पौत्रि "अत इञ्" [६.१. ३०] एवं हे क्रौड्ये च क्रोडस्य पुत्रि त्वं चैह्यागच्छार्थाद्रणभुवम्। तथा हे लाड्ये लाडपुत्रि हे सूत्ये प्राप्तयौवने स्त्रियद्धौ सूतसंबन्धिनि स्त्रि भोज्ये च भोजवंशजे क्षत्रिये त्वं च तिष्ठात्रैवास्स्व। तथा हे भोजे भोजाख्ये स्त्रि मुञ्च त्यज प्रस्तावाद्रणे यियासुं माम्। तथा हे सूते प्रसूते कान्ते हे दैवयज्ञि हे काण्ठेविद्ध्ये देवयज्ञस्य कण्ठेविद्धस्य च पुत्रि पौत्रि वा काण्ठेविद्ध्यनुप्रपन्ने च काण्ठेविद्धीमाश्रिते स्त्रि त्वं च व्रज गच्छार्थाद्रणाङ्गणम्। तथा हे सात्यमुग्रि सत्यमुग्रस्य पुत्रि पौत्रि वा धीरा निर्भया भव। हे दैवयज्ञ्यासखि दैवयज्ञ्याया वयस्ये त्वमतिसात्यमुग्र्या धैर्यात्सात्यमुग्र्यामतिक्रान्ता सती मास्स्व मा तिष्ठ धीरत्वाद्रणदर्शनाय प्रचलेत्यर्थः। शौचेर्वृक्ष्ये इति शौचेरिति गम्यपरत इत्यपेक्षया "प्रभृत्यन्यार्थ०" [२.२.७४.] इत्यादिना पञ्चमी। अत्र च शब्दार्थयोरभेदाच्छौचिवृक्ष्य इति शब्देन वाच्यो योर्थः शुचिवृक्षापत्यस्त्रीरूपः

---

१ प सी लक्षणो°. २ प सी रोरूना°. ३ प सी हे वरा°. ४ सी दक्षिपौ°. ५ प सी तयो स°. ६ प सी क्रौडि च. ७ प सी °हासत्तंव°. डी °हा तत्संव°. ८ प सी °यशास°. ९ सी शौचरि°.

स शौचिवृक्ष्य इति शब्देनाभिप्रस्तेन शौचेरिति परपश्चम्यन्तविशेषणं वृक्ष्ये इति शब्दसंबन्ध्यप्यर्थस्य स्याद्यथा समस्तवस्तुविस्तरं इत्यत्र विस्तरशब्दस्य वचनप्रथावाचकत्वेपि शब्दार्थयोरभेदादर्थप्रथायामुपन्यास इति। एवमग्रेप्येवंविधे प्रयोगे सर्वत्र ज्ञेयम्। ततः शौचेर्वृक्ष्ये इति कोर्थो हे शौचिवृक्ष्ये शुचिवृक्षस्य पुत्रि पौत्रि वाथ तथा हे शौचिवृक्ष्यालि शौचिवृक्ष्याः सखि त्वमप्यतिसात्यमुग्र्या सती मास्स्वेति ॥

करभोरु[3]। सहितोरु[4]। संहितोरु। सहोरु। अशफोरु। वामोर्वी। लक्ष्मणोरु। इत्यत्र "उपमान°" [७५] इत्यादिनोङ् ॥ उपमाद्यादेरिति किम्। वरोरुनारीत्यादि ॥

नारी। सखी। पङ्गूः। श्वश्रू। इत्येते "नारीसखी°" [७६] इत्यादिना ङ्यूङन्ता निपात्याः ॥

युवते। इत्यत्र "यूनस्तिः" [७७] इति तिः ॥ यूनीत्यपि कश्चित् ॥

दैवदत्त्ये। वाराह्ये। इत्यत्र "अनार्षे°" [७८] इत्यादिनान्तस्य ष्यः ॥ अनार्ष[5] इति किम्। वासिष्ठी ॥ वृद्ध इति किम्। वाराहि[6] ॥ बहुस्वरेति किम्। दाक्षि ॥ गुरूपान्त्यस्येति किम्। कापटवी ॥

पौणिक्ये। इत्यत्र "कुलाख्यानाम्" [७९] इति ष्यः ॥

क्रौड्ये। लाड्ये। इत्यत्र "क्रौड्यादीनाम्" [८०] इति ष्यः ॥

भोज्ये। सूत्ये। अत्र "भोज°" [८१] इत्यादिना ष्यः ॥ क्षत्रियायुवत्योरिति किम्। भोजे सूते ॥

दैवयज्ञ्या दैवयज्ञि। शौचिवृ(चेर्वृ ?)क्ष्ये शौचिवृक्षी। सात्यमुग्र्या सात्यमुग्रि। काण्ठेविद्ध्यो[9] काण्ठेविद्धी। इत्यत्र[10] "दैवयज्ञि°" [८२] इत्यादिना वा ष्यः ॥ पक्षे सर्वत्र "नुर्जातेः" [२.४.७२] इति ङीः ॥

१ प सी डी °रप्र°. २ प सी डी °मुमास°. ३ डी °रु। सं°. ४ सी °तोरु। स°. ५ प सी °नार्थ इ°. ६ प सी डी °रे इति. ७ डी °ध्ये इ°. ८ डी °वृक्षी।. ९ प सी °विद्धे का°. १० वी °त्र देव°.

कौमुदगन्धीपतिः पुरोभूत्कौमुदगन्धीपुत्र आददेतः ।
कौमुदगन्ध्यापतिध्वजिन्यां कौमुदगन्धीबन्धुभिश्च वर्म ॥ ८६ ॥

८६. कौमुदगन्ध्या कुमुदगन्धेः कुमुदगन्धस्य वापत्यं स्त्री राज्ञी पतिः स्वामिनी यस्याः सा या ध्वजिनी चमूस्तस्यां कौमुदगन्धीपतिः कौमुदगन्ध्याया राज्ञ्या भर्ता पुरो प्राहारिसैन्यस्याग्रतो यतोभूदतोस्माद्धेतोः कौमुदगन्धीपुत्रः कौमुदगन्ध्याङ्गजो वर्माददे जग्राह । तथा कौमुदगन्ध्या राज्ञी बन्धुर्येषां तैश्च कर्तृभिर्वर्माददे गृहीतम् । आदद इत्यत्र कर्तरि कर्मणि चात्मनेपदम् । अत्र च ध्वजिन्या राज्ञश्च स्त्रीपतित्वोक्त्या पुत्रस्य मातृपुत्रत्वोक्त्या च स्त्रिया इवाग्रसैन्यस्य भावी पराजयो व्याप्ति ॥

कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । इत्यत्र "ष्या पुत्र°" [८३] इत्यादिनाबन्तष्य ईच् ॥ तत्पुरुष इति किम् । कौमुदगन्ध्यापतिध्वजिन्याम् ॥ कौमुदगन्धीबन्धुभिः । इत्यत्र "बन्धौ°" [८४] इत्यादिनाबन्तष्य ईच् ॥

सौगन्धीमात आत्तधन्वा पाङ्कजगन्धीमातृभिः सहाभूत् ।
सौगन्ध्यामातदर्शनाद्यत्पाङ्कजगन्ध्यामातरोत्यहृष्यन् ॥ ८७ ॥

८७. सौगन्ध्यामातदर्शनात्सौगन्ध्या माता येषां भटानां तद्दर्शनात्पाङ्कजगन्ध्या माता येषां ते पाङ्कजगन्ध्यामातरो भटा यद्यस्माद्धेतोरत्यहृष्यन्सहायिलाभात्तुष्टाः । अतो हेतोः सौगन्धीमातः सौगन्ध्याजननीको भट आत्तधन्वा सन्पाङ्कजगन्धीमातृभिः पाङ्कजगन्ध्याजननी-

---

१ ए सी °भूकोमु°. बी °भूत्कोमु°. २ डी °रोभ्यह°.

---

१ बी यस्या सा. २ ए सी °न्धीपुः कौ°. ३ डी °यो व्यजि. ४ डी °रम्यह°.

कैर्भटैः सह संयुक्तोभूत् । अत्र च भटाना मातृपुत्रत्वोक्त्या साहाय्यापेक्षोक्त्या च पराजेष्यमाणता व्यञ्जिता ॥

औद्गन्धीमातृकः पदे स्वे लघुमौद्गन्ध्यामातृकं निवेश्य ।
अद्रिचरीं व्यौहत द्विपालीं चलमत्सीनयनाप्सरोरिरंसुः ॥८८॥

८८. औद्गन्धीमातृको राजा स्व आत्मीये पदे स्थाने राज्ये लघुमौद्गन्ध्यामातृकं स्वानुजं निवेश्य संस्थाप्य द्विपालीं गजघटां व्यौहत युद्धाय व्यूहवतीं चक्रे । कीदृशीम् । अद्रौ चरत्यद्रिचरी तां विन्ध्याद्रिभवाम् । यतश्चलमत्सीवच्चञ्चलशफरीवल्लोलानि नयनानि यासां ता या अप्सरसस्ता रिरंसुः अन्तर्भूतण्यर्थत्वात्सकर्मकत्वे रमयितुमिच्छुः । "श्रिता-दिभिः" [३.१.६२] इति सः । रणे मरणाद्देवीबुभूषुरित्यर्थः ॥

सौगन्धीमातः सौगन्ध्यामात । पाङ्कजगन्धीमातृभिः पाङ्कजगन्ध्यामातरः । औद्गन्धीमातृकः औद्गन्ध्यामातृकम् । इत्यत्र "मात°" [८५] इत्यादिनावन्तव्यो वेच ॥

अद्रिचरीम् । इत्यत्र "अस्वं क्यां लुक्" [८६] इत्यस्य लुक् ॥ अस्वेति किम् । द्विपालीम् ॥

मत्सी । इत्यत्र "मत्स्यस्य यः" [८७] इति यस्य लुक् ॥

जलमनुषीकाद्रवेय्युदीक्ष्यः सौरीं सौरीयो नु भां दधानः ।
आगस्तीयो नु सिन्धुराजः संनद्धागस्त्यां दिशि स्थितो भात्
॥ ८९ ॥

८९. मनुष्यो नार्यः कद्रा अपत्यानि स्त्रियः शुभ्रादित्वात् [६.१.

---

१ ए सी °चरी व्यौ°. २ ए सी °रीं सूरी°. ३ ए °राजसं° सी °राज्यं जसं°. ४ ए सी °गस्त्यादिदि°.

---

१ बी °त्या सहा°. २ बी °पेक्ष्योत्त्या. ३ ए सी व्यञ्जता. ४ बी °त्मीयप°. ५ बी °ति समासः ।. ६ ए सी डी °मातः । पा°. ७ सी °स्य लुक् ॥ अ°.

७१.] एयणि काद्रवेय्यो नाग्यः । द्वन्द्वे । जलस्य या मनुषीकाद्रवेय्यस्ताभिरुदीक्ष्योस्तत्साम्ययमिति बुद्ध्योर्ध्वं विलोक्यः सिन्धुराजः समुद्राधिपत्वाद्यथार्थनामा सिन्धुराजाख्यो नृपः संनह्याभात् । कीदृक्सन् । सौरीं सौरीयो नु भां दधानः । यथा सूर्यो देवतास्य देवताणि सौर्यः । सौर्याय हितः "तस्मै हितः" [७.१.३५] इतीये सौरीयोर्कः । सौरीं सूर्यसत्कां भां तेजो धत्ते तथारिभिरसह्यत्वात्सौरीमिव सौरीं भां प्रतापं दधानः । तथागस्तीयो नु । अगस्त्यो देवतास्यागस्त्यस्तस्मै हितोगस्त्यर्षिः स इवागस्त्यामगस्तिसत्कायां दिशि दक्षिणस्यां सैन्यरचनाविशेषेण स्थितः । यमदिक्श्रयणोक्त्या चास्यावश्यंभावी पराजयः सूचितः । योपि सिन्धुराजो नदीपतिरब्धिः सोपि जलमानुषीकाद्रवेय्युदीक्ष्यः सौरीं सुरासंबन्धिनीं भां श्रियं सुरानुकारिनीरत्वात्सुराजनकत्वाद्वा दधान आगस्त्यां दिशि स्थितो भातीत्युक्तिः ॥

मनुषी । इत्यत्र "व्यञ्जनात्तद्धितस्य" [८८] इति यस्य लुक् ॥ व्यञ्जनादिति किम् । काद्रवेयी ॥

सौरीम् । सौरीयः । आगस्त्याम् । आगस्तीयः । अत्र "सूर्या°" [८९] इत्यादिना यलुक् ॥

ननु सैधमसैध्यमप्यदोहः पौषातैषाणां नृणां हि सिद्ध्यै ।
जल्पन् गैार्गीयतां यदूनामिति गार्गीभूतः ससज्ज लक्षः ॥९०॥

९०. लक्षः ससज्ज युद्धाय प्रगुण्यभूत् । कीदृक्सन् । जल्पन् । किमित्याह । नन्विति संबोधने । हे यदुभटा अदो रणसंबन्ध्यहर्दिनं

१ बी °सैधम°. २ पं सी गागीय°.

१ पं सी °स्मत्साम्य°. २ पं डी °रीं सोरी°. ३ पं सी °भानो सूर्योव°. डी °भानः सूर्योव°. ४ पं सी °थाभिरि°. ५ पं सी °सागंस्त्य°. ६ पं सी डी °सत्कायां. ७ बी °चनां वि°. ८ पं सी सुराः सं°.

सैधं सिध्यः पुष्यस्तेन चन्द्रयुक्तेन युक्तमसैध्यमपि[1] पुष्येण चन्द्रयुक्ते-नायुक्तमपि पौषातैषाणां पुष्ये जाता "भर्तुसंध्यादेरण्" [६.३.८९] इत्यणि पौषा एवं तिष्ये पुष्ये जातास्तैषा न तथातैषा द्वन्द्वे तेषां पुष्यजाता-नामपुष्यजातानां च नृणां सिद्ध्यै रणे मृता वै स्वर्गं यान्तीति स्मृतेः स्वर्गप्राप्तिरूपकार्यसिद्धये हि स्फुटं भवति। सैधं हि दिनं किल।

अपि द्वादशमे[3] चन्द्रे पुष्यः सर्वार्थसाधकः।

इतिवचनात्पौषाणामपौषाणां च नृणां सिद्ध्यै स्यादिदं त्वसैधमपी-त्यर्थ इति। केषाम्। यदूनां यादवभटानां पुरतः। यतो गार्गीयतां गर्गो गोत्रादिभूतो ब्राह्मणस्तस्यापत्यं वृद्धं गार्ग्यस्तमिच्छन्ति। क्यन्। तेषाम्। जयसिद्धिहेतुदिनपृच्छार्थं गार्ग्यब्राह्मणमिच्छतां यथा तथेदमहः सर्व-कार्यसिद्धिकरमिति किं ब्राह्मणपृच्छयेति यदूनामग्रे वदन्नित्यर्थः। अत एवं चागार्ग्यो गार्ग्यो भूतो गार्गीभूतो गार्ग्यब्राह्मणवत्पृच्छकानां यदूनां कार्यसिद्धिकरं दिनं वदन्नित्यर्थः। अमुना च जल्पेन लक्षस्य रणे भावी मृत्युः सूचितः॥

पौषातैषाणाम्। इत्यत्र "तिष्य०" [९०] इत्यादिना यलुक्॥ तिष्यपुष्य-योरिति किम्। असैध्यम्॥ अन्ये तु तिष्यपुष्ययोर्नक्षत्रे वर्तमानयोः सामा-न्येणि नित्यं सिध्यशब्दस्य तु विकल्पेन यलोपमिच्छन्ति। तन्मते तिष्यो देव-तास्य तैष्य(ष?)इत्यत्रापि प्राप्नोति। तथा सैधमसैध्यमित्यपि॥

गार्गीयताम्। गार्गीभूतः। अत्र "आपत्यस्य "क्यच्व्योः" [९१] इति यस्य लुक्॥

वात्स्यवात्सीयवात्स्यायनैर्बैल्वकै[1]र्वैणुकै[2]रागतं दैत्यराजन्यकम्।
शक्तिमानुष्यकं तत्सपद्माग्निभिर्मूलराजस्य विप्रैः शशंसे तदा॥९१॥

९१. तदा शक्ति प्रहरणान्वितं मानुष्यकं भटौघो यत्र तत्तथा दै-

१ सी °नैर्बैल्व°. २ ए बी सी डी °कैर्वेणु°.

१ डी °पि पौ°. २ ए सी जास्त°. ३ डी °दशे च°. ४ ए सी जयसि°. ५ बी °व गा°. ६ ए सी °षाणम्।. ७ सी °न लभ्य°. ८ डी °भूताः। अ°.

त्यराजन्यकं दानवराजन्यौघ आगतमस्य मूलराजस्याग्रे विप्रैः[1] शशंसे कथितम् । किंभूतैः । बिल्वाः सन्त्यस्यां[2] "नडादेः कीयः" [६.२.९२] इति कीये बिल्वकीया नाम नदी तत्र भवैस्ततो वागतैर्बिल्वकैरेवं[3] वैणु-[4] कैश्च । तथा स पञ्चाग्निभिः पञ्चाग्नाय्यो दक्षिणाहवनीयगार्हपत्यस-भ्यावसंथ्याख्यानां[5] पञ्चानामग्नीनां भार्या देवता येषां देवताणो लुपि पञ्चाग्नय[6] आहिताग्नयः सह तैर्ये तैस्तथा वत्सो गोत्रादिभूतो ब्राह्मणर्षि-स्तस्यापत्यं वृद्धं वात्स्यस्तत्र साधवो वात्स्यास्तथा वात्स्यस्येमे शिष्या वात्सीयास्तथा वात्स्यस्यापत्यानि युवानो वात्स्यायना विशेषणत्रयद्वन्द्वे तैः । स्रग्विणी छन्दः ॥

पञ्चरामत्रिरम्भोरुषड्ढोणिषट्सूचिषट्सप्तयूनां द्विषद्वाजिनाम् ।
हेषितं चाशृणोत्सोसिदण्डं दधत्षट्कुमारीं रिपुस्त्रीत्वदोथोत्थितः
॥ ९२ ॥

९२. द्विषद्वाजिनां शत्रवश्वानां हेषितं स मूलराजोशृणोच्च । चस्तु-ल्ययोगितार्थः । यदैव दैत्यराजन्यकमागतं विप्रैः शशंसे तदैव स हे-षितमशृणोदित्यर्थः[7] । किंभूतानाम् । पञ्चभी रामाभिर्नारीभेदैरर्थाद्वन्दीभिः[8] क्रीता इकणो "अनाम्न्यद्विः प्लुप्" [६.४.१४१] इति लुपि[9] पञ्चरामाः । एवं तिसृभी रम्भोरूभिः[10] कदलीस्तम्भनिभोरुभिर्बन्दीभिः षड्भिर्गोणीभिरर्था-न्मञ्जिष्ठादिक्रयाणकभृतैरावपनैः षड्भिः सूचीभिः पिशुनभार्याभिर्बन्दीभी रत्नसूचीभिर्वा षड्वा सप्त वा षट्सप्तास्ताभिर्युवतिभिस्तरुणीभिश्च बन्दीभिः क्रीतास्त्रिरम्भोरवः षड्गोण्यः[11] षट्सूचयः षट्सप्तयुवानः । विशेषणद्वन्द्वे । तेषाम् । अथ हेषितश्रवणानन्तरमुत्थितः । कीदृक्सन् । असिदण्डं खड्गं

१ प सी डी चासृणो°.

१ प सी विप्रैश°. २ प सी डी न्त्यस्या न°. ३ प बी सी °तैर्बिल्व° ४ प बी सी °वं वेणु°. ५ सी डी °सत्याख्या°. ६ प सी° श्वाग्नय°. ७ प सी डी °मसृणो°. ८ प °द्वन्दैभिः. सी डी °द्वन्दिभिः. ९ सी °दिप्लुपि प°. १० प सी °रूभिक°. ११ प सी °यण°.

दधत् । किंभूतम् । षट्कुमारीं वसिष्ठादन्यैः[1] षड्भिर्मुनिभिर्भर्तृभिः[2] परित्यक्तत्वेन महाब्रह्मचारिणीत्वात्कुमारीव कन्येवाचरन्ति क्विपि तल्लुपि च कुमार्यः कृत्तिकास्ततः षण्णां कुमारीणामयं षट्कुमार्यो देवता अस्येति वा कृत्तिकानक्षत्रकत्वात् "द्विगोः°" [ ७.१.१४४] इत्यादिनाणो लुपि षट्कुमारी तम् । खड्गस्य हि कृत्तिकानक्षत्रम् । यत्पुराणम् ।

असिर्विशसनः[3] खड्गस्तीक्ष्णधर्मा दुरासदः ।
श्रीगर्भो विजयश्चैव धर्माधारस्तथैव च ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि[4] वेधसा ।
नक्षत्रं कृत्तिका चैव स्वयं देवो महेश्वरः ॥ इति ।

अत एवारीणां क्लीत्वं[5] ददात्यरिक्लीत्वदः । असिग्रहणेनातिभयंकरत्वादरीन्क्लीरिवातिभीतान्कुर्वन्नित्यर्थः[6] ॥

वात्स्य । वात्सीय । इत्यत्र "तद्धित°" [९२] इत्यादिना यलुक् ॥ अजातीति किम् । वात्स्यायनैः[7] ॥

बैल्वकैः[8] । वैणुकैः । इत्यत्र "बिल्वकीयादेरीयस्य" [९३] इति यस्य लुक्[9] ॥

राजन्यकम् । मानुष्यकम् । इत्यत्र "न राजन्य°"[१४]इत्यादिना न यस्य लुक् ॥

पञ्चाग्निभिः । पञ्चराम । त्रिरम्भोरु । षड्गुसयूनाम् । इत्यत्र "क्यादेः°" [९५] इत्यादिना क्यादेर्लुक् ॥ अक्विप इति किम् । षट्कुमारीम्[11]॥ तद्धितलुकीति किम् । क्लीत्व ॥ अगोणीसूच्योरिति किम् । पञ्चगोणि । षट्सूचि[12] ॥ स्रग्विणी छन्दः ॥

---

१ ए सी डी वशिष्ठा°. २ बी °न्यैष°. ३ ए सी °सनः ख°. ४ ए सी डी स्वयमु°. ५ डी क्लीत्वदः । ६ ए सी °त्वादीन्क्ली°. ७ बी °नैः । बेल्व°. सी °नैः । खेल्व° ८ बी °कैः । वेणु°. ९ ए सी डी °क् । अक्वि°. १० बी °जन इ°. ११ सी डी °री । त°. १२ ए सी °चि स्रग्व°.

निस्तिरस्करिणिरादंदेनतिब्रह्मबन्धुरयमुष्णगुप्रभः ।
वर्म पेष्टुमरिमर्द्धपिप्पलीवन्नृपः सहमहीयसी भुवा ॥ ९३ ॥

९३. अयं नृपो मूलराजोर्धपिप्पलीवत् खण्डपिप्पलीमिवारिं प्राहारिं पेष्टुं हिंसितुं वर्मादंदे । कीदृक् । निस्तिरस्करिणिस्तिरस्करोतीत्येवंशीला णिनि बाहुलकाद्वृद्ध्यभावे तिरस्करिण्या जवन्या निष्क्रान्तः । तथानतिब्रह्मबन्धुर्ब्रह्मबन्ध्वो जातिमात्रेण ब्राह्मण्योतिधार्मिकत्वात्ता अपि नातिक्रान्तः । तथोष्णगुप्रभः प्रतापेनार्कसमोत एव भुवा भूम्या कृत्वा सह महीयस्यातिमहत्या वर्तते यः स सहमहीयसी । अतिमहाप्रमाणोर्वीक इत्यर्थः ॥

उष्णगुप्रभः । निस्तिरस्करिणिः । अनतिब्रह्मबन्धुः । इत्यत्र "गोस्त्रान्ते°" [९६]इत्यादिना ह्रस्वः ॥ अनंशिसमासे यो बहुव्रीहाविति किम् । अर्धपिप्पली । सहमहीयसी । रथोद्धता छन्दः ॥

स्फूर्जत्सारधि विप्रबन्धुसुहृदा तद्ब्रह्मबन्धूभियं
लक्ष्मीवल्लभलक्ष्मिपुत्रसदृशा तेनाशु सज्जीकृतम् ।
गार्गीपुत्रमहेन्द्रहूसुतयुतैः कारीषगन्धीपति-
प्रायैः श्रीसदनैर्नृपैः सह बलं भ्रूभङ्गभीमाननैः ॥ ९४ ॥

९४. तेन मूलराजेन तत्स्वकीयं बलमाशु सज्जीकृतं समाहितमित्यर्थः । किंभूतेन । लक्ष्मीवल्लभो विष्णुः लक्ष्मिपुत्रः कामः । ताभ्यां

---

१ ए सी °स्करणि°. २ ए सी नैनृपैः.

---

१ ए सी डी °वत्पिप्प°. २ सी °सिव°. ३ ए सी °स्करणि°. ४ ए सी °वण्या नि°. ५ डी निःक्रान्तः. ६ ए सी °स्करणिः।. ७ ए सी "गोस्त्रान्ते°. ८ ए सी रतोद्ध°. डी रतो च्छन्दः. ९ ए सी डी °पुत्रका°.

सदृशा । पराक्रमित्वप्रजापालकत्वरूपवत्त्वादिना तुल्येन । अत एव विप्रबन्ध्वो जातिमात्रेण ब्राह्मण्यस्तासामपि सुहृदा पालनया मित्रेण । कीदृग्बलम् । स्फूर्जन्ती स्फुरन्ती सारा स्थिरोत्कृष्टा वा धीर्युद्धविधिविषयं परिज्ञानं यस्य तत् । अत एव निश्चितदैत्यबलविनाशनेन ब्रह्मबन्धूप्रियं जातिमात्रब्राह्मणीनामपि वल्लभम् । तथा कारीषगन्धीपतिप्रायैः कारीषगन्ध्याख्यराज्ञीभर्तृप्रमुखैर्नृपैः सह सहितम् । किंभूतैः । गार्गीपुत्रा द्विजाः । प्रस्तावात्तेत्र मन्त्रिणः । तथा महेन्द्रं ह्वयति महेन्द्रहूर्नाम राजा । तस्य सुता महेन्द्रहूसुताः । द्वन्द्वे । तद्युतैः । तथा श्रीसदनैश्चतुरङ्गबलादिलक्ष्मीनिवासैः । तथा भ्रूभङ्गभीमाननैः कोपवशाद्भ्रुकुटीविधानरौद्रवक्त्रैः ॥

सारेधि । इत्यत्र "क्लीबे" [९७] इति ह्रस्वः ॥

लक्ष्मिपुत्र लक्ष्मीवल्लभ । विप्रबन्धुसुहृदा ब्रह्मबन्धूप्रियम् । इत्यत्र "वेदूत°" [९८] इत्यादिना वा ह्रस्वः ॥ अव्ययादिवर्जनं किम् । अव्यये । सज्जीकृतम् ॥ च्व्यन्त । महेन्द्रहूसुत ॥ ईयप् । कारीषगन्धीपति ॥ की । गार्गीपुत्र ॥ इयुव् । श्रीसदनैः । भ्रूभङ्ग ॥ शार्दूलविक्रीडितं छन्दः ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ चतुर्थः सर्गः संपूर्णः ॥

१ ए सी °तैगार्गी°. २ ए सी °नने को°. ३ ए सी °रयैस°. ४ बी सी °ह्मः । वि° ५ ए सी °य । सज्जी°. ६ सी °दनै भ्रू°.

## पञ्चमः सर्गः ।



शैलप्रस्थमहित्रातरेवतीमित्रभूभुजाम् ।
सैन्येभूत्तस्य पुंनाट्यनान्दीतूर्यं ध्वनद्धनुः ॥ १ ॥

१. तस्य मूलराजस्य सैन्ये । शिलानां प्रस्थमिव शिलप्रस्थं नाम पुरं तत्र भवः शैलप्रस्थः । मह्रीं त्रासीष्टासौ "तिक्कृतौ नाम्नि" [५.१.७१] इति के महित्रातो नाम । रेवती मित्रमस्य रेवतीमित्रो नाम । पदत्रयद्वन्द्वे ते ये भूभुजो मूलराजनृपास्तेषां ध्वनेज्र्याकर्षवशाच्छब्दायमानं धनुरभूत् । कीदृक् । नान्दी पूर्वरङ्गाङ्गं द्वादशतूर्याणां निर्घोषः । तानि चेमानि ।

भम्भा-मुकुन्द-मद्दल-कडम्ब-झल्लरि-हुडुक्क-कंसाला ।
काहल-तिलिमा सङ्खो वंसो पणवो य बारसमो ॥

तूर्यं तूरम् । नान्दी च तत्तूर्यं च नान्दीतूर्यम् । पुंसां पौरुषोपेतानां महावीराणां नाट्याय नृत्ताय नान्दीतूर्यमिव । महाभटा हि धनुर्ध्वनिश्रवणैर्नृत्यन्तीव ॥

मित्रे रेवतिमित्रस्य रणायोत्तस्थतुस्तदा ।
गङ्गाद्वारपती गङ्गमहगङ्गामहानुजौ ॥ २ ॥

२. तदा गङ्गमहगङ्गामहानुजौ गङ्गमहाख्यस्तल्लघुभ्राता च मूलराजनृपौ रणायोत्तस्थतुः । किंभूतौ । गङ्गाद्वारपती गङ्गाया द्वारं यत्र तद्गङ्गा-

---

१ बी °त्रस्य°. २ ए सी °नज्र्याक°. ३ बी °हुडक°. ४ ए पणमो य वा सम्मे । सी पणेमा य वा सम्मे ।. ५ डी °वो दुवालस°. ६ ए सी नादीतू°. ७ ए सी नादीतू°. ८ सी °ङ्गाम.

द्वारं नाम पुरं देशो वा तत्स्वामिनौ। तथा रेवतिमित्रस्यैवंनाम्नो[1] नृपस्य मित्रे ॥

महिद्यौत। शैलप्रस्थ। इत्यत्र "ङ्यापः०" [९९] इत्यादिना ह्रस्वः ॥ बहु-लवचनात्कचिद्विकल्पः। रेवतिमित्रस्य रेवतीमित्र। गङ्गमहे गङ्गामह। क-चित्र। नान्दीतूर्यम्। गङ्गाद्वार ॥

रोहिणित्वमजत्वं च नृपैर्दातुं प्रतिश्रुतम्।
भयस्पृशे रोहिणीत्वमजात्वमभयस्पृशे ॥ ३ ॥

३. नृपैर्मूलराजसत्कभूपै रोहिणित्वं गोत्वमजत्वं च छागीत्वं च दातुं प्रतिश्रुतं प्रतिज्ञातम्। सामान्येनोक्त्वा विशेषेणाह। भयेत्यादि। भयस्पृशे कातराय रोहिणीत्वं दातुं प्रतिश्रुतम्। गौर्ह्यवध्येति भर्तॄणामवध्यत्वमङ्गीकृतमित्यर्थः। अभयस्पृशे शूरायाजात्वम्। अजा हि वध्येति शूरा एवास्माभिर्हन्तव्या इति प्रतिज्ञातमित्यर्थः। एतेन नृपाणां क्षात्रो धर्म उक्तः ॥

रोहिणित्वम् रोहिणीत्वम्। अजत्वम् अजात्वम्। इत्यत्र "त्वे" [१००] इति बहुलं ह्रस्वः ॥

भटा भटेषु भ्रुकुटिं भ्रुकुंसा नर्तकीष्विव।
दधुर्भ्रुकुंसकौन्तेयभ्रुकुटीभृद्यमोपमाः ॥ ४ ॥

४. भटा मूलराजयोधा भटेष्वरियोधेषु विषये भ्रुकुटिं सकोपभ्रू-विकारं दधुः। यथा भ्रुकुंसाः स्त्रीवेषधारिणो नटा नर्तकीषु विषये

१ बी °भजत्व°. २ बी °धुर्भ्रुकुं°. ३ बी °कौतेय°.

१ बी °म्नो मित्रस्य. २ ए सी डी °भ्रातः। शै°. ३ ए सी °ह्रुव°. ४ ए सी °ह। क°. ५ ए सी डी °तूर्य। ग°. ६ ए सी °णां क्षेमाय°. डी °णां क्षत्रध°.

स्खलितादौ[1] भ्रुकुटिं दधति । कीदृशाः । भ्रुवौ कुंसयति लिहाद्यचि [५.१.५०] भ्रकुंसः स्त्रीवेषधारी नटो यः कौन्तेयः[2] कुन्त्या अपत्यं "द्विस्वरादनद्याः"[3] [६.१.७१] इत्येयण् । अर्जुनो विराट्गृहे[4] छद्मना नाट्याचार्योसावभूदिति प्रसिद्धिः । अत एवास्य बृहन्नट इत्याख्या । तद्वद्भ्रुकुटीभृतः सकोपभ्रूविकारधारिणोत एव रौद्रत्वाद्यमोपमा मृत्युतुल्याः । विशेषणकर्मधारयः[5] ॥

भ्रूकुंसभ्रूकुटीचापा मेनिरे मालभारिणः ।
इषीकतूलवद्योधाः पक्वेष्टकचितोऽपि ॥ ५ ॥

५. योधा मूलराजभटाः पक्वा या ईष्टका[6] मृद्विकारास्ताभिश्चितं खचितं यद्गृहादि तद्वद्यद्दुर्गं बलिष्ठं भटादि तदपि मेनिरे । कीदृशम् । महाबलतयेषीकतूलवत् । इषीका कूचिका तस्यास्तूलमनस्थि कर्पासादि तद्वदसारम् । इषीकाया मुखे[7] तूलमपि स्यात् । कीदृशाः[8] । भ्रूकुंसभ्रूकुटीचापा नर्तकोपाध्यायभ्रूकुटिवत्कुटिलकार्मुकाः । तथा मालभारिणः पुष्पमालाधारिणः ॥

भ्रुकुंसाः । भ्रकुंस । भ्रुकुटिम् । भ्रकुटी । इत्यत्र "भ्रुवोऽच°" [१०१] इत्यादिना ह्रस्वो[9]ऽत्र[10] ॥ भ्रूकुंसभ्रूकुटीशब्दावपीच्छन्त्यन्ये ॥

मालभारिणः । इषीकतूलवत्[11] । इष्टकचित । इत्यत्र "मालेषी°"[12] [१०२] इत्यादिना ह्रस्वः ॥

---

१ प सी डी °दौ भ्रकु°. २ बी °न्तेयकु°. ३ प सी डी इत्यण्।. ४ प सी °टसदे ५ प सी °शेषेण°. ६ बी इष्टिका. ७ बी °खे मूल°. ८ प सी °शाः । भ्रुकुं°. ९ बी °कुटव°. १० प °च । भ्रुकुं°. सी °च । भ्रुकु°. ११ प सी °षीकुतूहल°. १२ बी °षीक° इ°.

गोणिं बाणौघमर्यस्रपकं कर्कन्धुकाधनुः ।
पट्टिका भिल्लचमुकाधाद्धर्तुं रिपुलक्ष्मिकाम् ॥ ६ ॥

६. पट्टिकाज्ञाता धनुर्विद्यादिषु कुशला भिल्लचमुका मूलराजसत्का नीचजातित्वात्कुत्सिता भेदसेना रिपुलक्ष्मिकां शत्रूणामन्यायार्जितत्वात्कुत्सितां लक्ष्मीं हर्तुं बाणौघमधाद्धारयत् । किंभूतम् । गोणिं गोण्या[1] मितं[2] यावता[3] गोणी भ्रियते तावन्तमित्यर्थः । तथा सुतीक्ष्णत्वेनारीणामस्रं रक्तं पिबति विच्[4] अर्यस्रपा अज्ञातोऽर्यस्रपा अर्यस्रपकस्तम् । तथा कर्कन्धुकाधनुश्चाज्ञातं बदरीचापं चाधात् । भिल्ला हि प्रायः सुप्रापत्वाद्बदरीधनुरतिलघुहस्तत्वाद्बहून्बाणांश्च[5] बिभ्रति ॥

गोणिम् । इत्यत्र "गोण्या मेये" [१०३] इति ह्रस्वः ॥

पट्टिका[6] । अर्यस्रपकम् । लक्ष्मिकाम् । चमुका । कर्कन्धुका । इत्यत्र "ड्यापीदूतः के" [१०४] इति ह्रस्वः ॥

सुलक्ष्मीकाः सुशक्तीकाचमूकाः कुरवोऽभ्रमन् ।
जितास्रपाकाः खारीकातूणाकानर्घ्यतूणकाः ॥ ७ ॥

७. कुरवः कुरुराजस्यापत्यानि भटा मूलराजसेवका[7] अभ्रमन् युद्धार्थं व्यचरन् । किंभूताः । सुलक्ष्मीकाः[8] शोभनबलादिसंपदः । तथा सुशक्तीकाः शोभनशक्तिशस्त्राश्चम्वः सेना येषां ते सुशक्तीकाचमूकाः "तद्धिताक°" [३.२.५४] इत्यादिना पुंवत्त्वनिषेधः । तथा जिता अस्रपा रुधिरपायिनो दैत्या यैः "शेषाद्वा" [७.३.१७५] इति कचि जितास्रपाका दैत्यरणेष्वनेकशो लब्धजयपताका इत्यर्थः । तथा खारीकाः खार्या

१ डी °म् । गोण्या. २ ए सी मियतं. ३ सी °वन्ता गो°. ४ ए सी डी °ज्ञाव°. ५ डी °त्वाद्वाणां°. ६ ए सी °ट्टिकाः । अ°. ७ बी °काश्च°. ८ ए सी °य विच°. ९ बी °क्ष्मीका शो°.

क्रीताः "खारीकाकणीभ्यः कच्" [६.४.१४९] इति कच्। तूणा निषङ्गा येषां ते। तथानर्घ्याः स्वर्णमण्यादिविच्छुरितत्वेन निर्मूल्यास्तूणा येषां ते तथा। ततो द्वन्द्वः। केचित्खारीकातूर्णाकाः केचिच्चानर्घ्यतूणका इत्यर्थः॥

सुलक्ष्मीकाः। जितालपाकाः। सुशक्तीकाचमूकाः। खारीका। इत्यत्र "न कचि" [१०५] इति ह्रस्वो न॥

खारीकातूणाकानर्घ्यतूणकाः। इत्यत्र "न वापः" [१०६] इति वा ह्रस्वः॥

जेतुं द्विट्सैनिकां स्कन्दसेनका इव भूभुजाम्।
सेनाकाः कृत्स्निकाश्चक्रुर्दुर्गकाधिष्ठितास्त्वराम्॥ ८॥

८. कृत्स्निका अज्ञाताः सर्वा भूभुजां मूलराजनृपाणां सेनाका विशेषस्वामिसंबन्धित्वानवगमेनाज्ञाताँश्चम्वो द्विट्सैनिकां द्विषो ग्राहारेः कुत्सितां सेनां जेतुं त्वरां वेगं चक्रुः। कीदृश्यः सत्यः। दुर्गकाधिष्ठिताः "ते लुग्वा" [३.२.१०८] इति देवीशब्दस्योत्तरपदस्य लोपे सकललोकवल्लभत्वेनानुकम्पिता दुर्गा "लुक्युत्तर°" [७.३.३८.] इत्यादिना कप्रि(पि?) दुर्गका चामुण्डा। तयाधिष्ठिता अधिष्ठायकत्वेनाश्रिताः। स्कन्दसेनका इवेति स्कन्दस्य प्रियत्वादनुकम्पिताः सेना यथा द्विट्सैनिकां तारकदैत्यसेनां जेतुं त्वरां चक्रुः॥

सेनिकाम्। सैनकाः। सेनाकाः। इत्यत्र "इच्च°" [१०७] इत्यादिनेकारो ह्रस्वश्च वा॥ अपुंस इति किम्। कृत्स्निकाः। अनिदिति किम्। दुर्गका॥

स्विका मृत्योः सुरेभस्य स्वकागर्जज्जयस्विका।
ओजःस्वका गजघटा ज्ञिका युद्धे यते ज्ञका॥ ९॥

९. मूलराजीया गजघटागर्जद्दुर्लुलारवं चक्रे। एतेन राज्ञो भावी

१ बी °णाका के°. २ ए बी सी सुशक्तीका। जितालपाकाः। सुलक्ष्मीकाः। सुशक्तीका च°. ३ बी ताश्चाम्वो. ४ बी °ष्ठायिकात्वे°. ५ डी सेना°. ६ बी °डुगुल°. डी °डुगुडुटार°.

विजयः सूचितः शुभनिमित्तत्वात् । कीदृशी । युद्धे रणकर्मणि ज्ञिका-ज्ञातपण्डिता तथा यते निषादिनां पादकर्मणि ज्ञका तथौजो बलं तेजो वा तदेव स्वं धनं यस्याः सात एव जय एव स्वं धनं यस्याः सात एवं सुरेभस्यैरावणस्य स्वकाज्ञातज्ञातिरिव तथानेकजन्तुसंहारित्वाद्रौद्राकारत्वाच्च मृत्योर्यमस्य स्विका ॥

अजिकाचर्मपर्याणारिं हन्तुमजकामिव ।
तत्वरेश्वचमूः सेषुभस्त्रिका साम्बुभस्त्रका ॥ १० ॥

१०. अश्वचमूर्मूलराजीयाश्वसेनारिमजकामिव कुत्सितां छागीमिव हन्तुं तत्वरे रयेणाचलत् । कीदृशी । अज्ञाता छाग्यजिका तस्याश्चर्मणा पर्याणं पल्ययनं यस्याः सा । तथा सेषवो बाणभृता भस्त्रास्तूणा यस्यां सा । तथा सहाम्बुभस्त्रया जलदृतिना वर्तते या सा । तथाज्ञाता साम्बुभस्त्रा साम्बुभस्त्रका ॥

क्षत्रियिकाः क्षत्रियकापुत्रांश्चटकिकाश्चटौ ।
द्विषच्चटककाश्येनानूचुः सुनयिका युधि ॥ ११ ॥

११. क्षत्रियिका अज्ञातक्षत्रियस्त्रियो द्विषच्चटककाश्येनान् शत्रुकुत्सितचटकासु श्येनतुल्यान् क्षत्रियकापुत्रान्क्षत्रियान्युधि युद्धार्थमूचुः युद्धं क्रियतामित्यूचुरित्यर्थः । कीदृश्यः सत्यः । अज्ञाताः सुनयाः सुनयिकाः शोभननीतिज्ञा अत एव चटौ चाटुवचने विषये चटकिका अज्ञातचटकातुल्याश्चाटुकारिण्यः । एतेन मूलराजीयक्षत्रियस्त्रीणामपि युद्धविषय उत्साह उक्तः ॥

---

१ बी °स्त्रकाः ॥ २ ए सी युधिः ॥

---

१ सी युधेर°. २ ए सी तेजे वा. ३ बी °व च सु°. ४ ए सी °ज्ञारितिव. ५ ए सी °न्तुसहा°. ६ ए सी °कारित्वा°. ७ ए बी सी डी °भस्त्रिका°. ८ ए सी डी पल्य°. ९ डी °टका°. १० बी युक्तार्थ°. ११ बी °ज्ञात°.

निःशङ्किकैक्षिष्ट रणामात्यिका पत्तिसंहतिः ।
द्विके युत्सूतिके तूणे द्वके श्रीसूतके भुजे ॥ १२ ॥

१२. पत्तिसंहतिर्मूलराजपदातिपङ्क्तिर्युत्सूतिके युधो युद्धस्य सूतिके अज्ञाते सूते जननीतुल्ये जनितयुद्धे इत्यर्थः । द्विके अमेयशरभृतत्वेनाज्ञाते द्वे तूणे तूणीरौ । तथा श्रीसूतके विजयलक्ष्मीजनन्यौ द्वके अमेयबल-त्वेनाज्ञाते द्वे भुजे बाहू चैक्षिष्ट । यतो निःशङ्किकाज्ञाता निर्भया शूरेत्यर्थः । तथा रणामात्यिका युद्धविषयेऽज्ञाता मन्त्रिणी । यथा राजादिरमात्यिकाभि-प्रायेण प्रवर्तत एवं रणकर्मप्रवीणत्वाद्यदभिप्रायेण रणं प्रवर्तत इत्यर्थः ॥

एषिका पुत्रिका मृत्योरेषका नासिपुत्रका[1] ।
वृन्दारिका वृन्दारकापतिदेत्याददे भटैः ॥ १३ ॥

१३. भटैराददे गृहीतासिपुत्रकैव । हेतुमाह । एषका प्रत्यक्षा । कृत्रिमः पुत्रः सूनुः "°पुत्राणु°" [७.३.२३] इति के पुत्रकः । स्त्री चेत्पु-त्रका । असेः पुत्रकेवासिपुत्रका क्षुरिका । नासिपुत्रका न क्षुरिका । असिपुत्रकाशब्दः पुनरावर्त्यते । किं तर्हि । एषिका मृत्योर्यमस्य पुत्रिका । यतो वृन्दारकापतीन्देवीनाथान्देवानपि द्यति खण्डयति । यद्वा । वृन्दारकाभ्यो देवीभ्यः पतिं ददाति या । अनया हि हताः सन्तोऽप्सरोभिर्व्रियन्त इति । सा मृत्युहेतुरित्यर्थः । ईदृश्यपि कुत इत्याह । यतो वृन्दारिकातितैक्ष्ण्यचन्द्रिकाधिष्ठितत्वादिना प्रशस्येति ॥

स्विका स्वका । जयस्विका ओजःस्वका । ज्ञिका ज्ञका । अजिका अजकाम् । सेतुभस्त्रिका साम्भुभस्त्रका ॥ यकार । क्षत्रियिकाः क्षत्रियका ॥ ककार ।

---

१ ए °त्रकाः । वृ°.

---

१ सी °रभूत°. २ ए सी डी °पुत्रिके°. ३ ए बी सी डी °न्दारिका°. ४ ए बी सी डी °न्दारिका°. ५ ए सी °रोभिं म्रिय°. ६ बी °चण्डिका. ७ ए सी डी °यिका । क्ष°.

चटकिका: चटकका । इत्यत्र "स्वज्ञाज°" [१०८] इत्यादिना वेकारः ॥ धातुत्यवर्जनं किम् । सुनयिका: । निःशङ्किका । अमात्यिका ॥

द्विके द्वके । एषिका एषका । सूतिके सूतके । पुत्रिका पुत्रका । वृन्दारिका वृन्दारका । इत्यत्र "अेष°" [१०९] इत्यादिना वेकारः ॥

द्विड्भ्यो हर्तुं श्रियं श्येनी वर्तकाभ्यो नु वार्तिकाम् ।
युद्वार्तिका जटिलिकोत्तस्थौ मर्वीशबन्धुता ॥ १४ ॥

१४. युद्वार्तिका रणकृत्सती मर्वीशबन्धुता मूलराजसेवकमरुदेशाधिपबन्धुसमूहो द्विड्भ्यः सकाशाच्छ्रियं जयलक्ष्मीं हर्तुमुत्तस्थावुद्यताभूत् । कीदृशी । जटाः संश्लिष्टकेशाः क्षेप्याः सन्त्यस्या जटिलीज्ञाता जटिला जटिलिका लोमशा । स्वरूपविशेषणमिदम् । यथा श्येनी पत्रिणी वर्तकाभ्यश्चटकाभ्यः सकाशाद्वार्तिकां चटकां हर्तुमुत्तिष्ठति ॥

नन्दका वः सकास्तु द्विड्क्षिपका ध्रुवका यका ।
भुजेति नरिकामूचुर्मामिकासीत्यहंयवः ॥ १५ ॥

१५. नरानर्थान्भटान्कायति वर्णयति नरिका तां वृद्धस्त्रियं भट्टिनीं वा मामिकासि मदीया त्वमित्यहंयवोहंकृता मूलराजयोधा ऊचुस्तव योगक्षेमौ वयं करिष्याम इति बहु मेनिर इत्यर्थः । कथं नरान्कायतीत्याह । सकाज्ञाता सा वो युष्माकं भुजानन्दकारिजयोद्भुद्धिहेतुरस्त्वर्थाल्लोकानाम् । यकाज्ञाता या ध्रुवका दृढा सती द्विड्क्षु शत्रुषु क्षिपके-

१ ए सी डी जटलि°. २ ए सी °स्थौ मुर्वी°. ३ ए सी °का ध्रुव°.

१ ए सी डी °किका । च°. २ ए सी डी स्वजाज°. ३ ए डी °यिका । नि°. सी यिका । अ°. ४ ए सी °का । वृन्दिका । वृ°. ५ बी इत्यत्र. ६ ए सी °स्थावय°. ७ ए सी जटासं°. ८ ए सी डी °का जटिलि°. ९ ए सी डी वर्तिका°. १० बी वृद्धिकि°. ११ ए सी °या वृद्धि°.

वापभेद इव द्विट्क्षिपका । यद्वा । द्विडर्थं या क्षिपका तस्या ध्रुवके-
वावपनभेद इव द्विट्क्षिपका ध्रुवकारिवधार्थं क्षिपकाभूदस्तीत्यर्थ इति ॥

वर्तिकाम् वर्तकाभ्यः । इत्यत्र "वौ वर्तिका" [११०] इतीत्वं वा निपात्यम् ॥

वाविति किम् । युद्धर्तिका ॥

जैहिलिका । इत्यत्र "अस्यायत्°" [१११] इत्यादिनेकारः ॥ अनिर्स्कीत्येव ।

नन्दका । आशिष्यकन् ॥ यतक्षिपकादिवर्जनं किम् । यका । सका । क्षिपका ।

ध्रुवका ॥

नरिकाम् । मामिका । इत्यत्र "नरिका मामिका" [११२] इतीत्वं निपात्यम् ॥

तारकातारिकास्त्वविड्वर्णकावर्णिका दिवः ।
जयेष्टकाप्रतिज्ञानां कीर्तेः खार्यष्टिका न्वभात् ॥ १६ ॥

१६. तारकातारिका नक्षत्रवद्दीप्रा सत्यकात्विट् शत्रप्रभाभात् ।
कीदृशी । दिवो व्योम्नः कर्मणो वर्णकावर्णिका । वर्णयति वर्णका
तान्तवः पटविशेषस्तयेव कृत्वा वर्णिका श्वेतवर्णीकारिकातिसान्द्रत्वा-
द्वर्णका पटयेव यां श्वेतयन्तीत्यर्थः । यद्वा । दिवः सबन्धित्वेन वर्ण-
कानां पटभेदानां वर्णिकेव लेश इव । तथा जयेरिविजये सत्यष्टकायाः
पितृदैवत्यकर्मणः प्रतिज्ञाभ्युपगमो येषां तेषां मूलराजसैनिकानां संब-
न्धिन्याः कीर्तेः सत्काष्टिकाष्टद्रोणप्रमाणा खारी नु । अत्रात्विट् सितत्वा-
द्बहुलत्वाच्चैवमाशङ्किता । अष्टद्रोणामपि खारीं केचिदिच्छन्ति ॥

तारका । वर्णका । अष्टका । इत्येते "तारका°" [११३] इत्यादिना नि-
पात्याः ॥ अन्यत्र । तारिका । वर्णिका । अष्टिका खारी ॥

अष्टमः पादः समर्थितः ॥

१ ए सी डी जटलि°. २ ए बी सी °निस्कीले°. ३ बी °नं य°. ४ सी °काम् । मा°. ५ बी मामकेति इति नि°. ६ बी °ट् शात्र°. ७ सी °पां । तथा मू°.

मूर्धाभिषिक्ता प्राहारैः प्रणिघ्नन्तोथ ताश्चमूः ।
आगुरध्युपलम्भाय जयस्येषुसुसिक्तखाः ॥ १७ ॥

१७. अथ मूलराजसैन्यस्य युद्धोपक्रमानन्तरं प्राहारै[1]र्मूर्धाभिषिक्ता नृपा जयस्यो[2]ध्युपलम्भाय प्राप्त्यायागुः । किंभू[3]ताः सन्तः । इषुसुसि[4]क्तखाः शरैः सुष्ठु व्याप्ता[5]काशा अत एव ता मूलराजीया युद्धायोद्यताश्चमूः प्रणिघ्नन्तः प्रहरन्तः ॥

शरौघैरतिसिश्चन्तः पर्यानिन्युर्दिशोन्धताम् ।
अति[2] स्थित्वोररीकृत्योरीकृत्यानि धनूंषि ते ॥ १८ ॥

१८. शरौघैः कृत्वा दिशोतिसिश्चन्तोतिव्याप्नुवन्तस्ते मूर्धाभिषिक्ता दिश एवान्धतां विलो[6]काभावाद्विच्छाय[7]त्वाच्चान्धा इवान्धास्तद्भावं पर्यानिन्युः प्रापयन् । किं कृत्वा । अति स्थित्वातिक्रमार्थोत्रातिः । शत्र्वतिक्रमेणाली[8]ढादिस्थानं कृत्वा तथोरीकृत्यान्यङ्गीकर्तुं योग्यानि धनूंष्युररीकृत्याङ्गीकृत्य ॥

दैत्यैः पटपटाकृत्य घुट्कृत्य स्वीकृतासिभिः ।
प्रसृत्य कारिकाकृत्य पत्तीन्सत्कृत्य दध्वने ॥ १९ ॥

१९. स्वीकृतासिभिर्गृहीतखड्गैर्दैत्यैर्दानवनृपैः कर्तृभिर्दध्वने सिंहनादः कृतः । किं कृत्वा । पटपटाकृत्य त्वरया पादन्यासैः पटत्पटच्छब्दं कृत्वा घुट्कृत्य च शत्रुष्ववज्ञया घुडिति शब्दं कृत्वा च । तथा

---

१ सी °रध्याप°. २ प सी °ति स्थत्वो°.

---

१ प सी °रेमूर्धा°. २ सी °स्याध्याप°. ३ प सी °भूता स°. ४ बी °सिक्ताखा°. ५ सी °साबराशा. ६ डी °लोकमा°. ७ बी °च्छायित्वा°. ८ सी °लीतादि°. ९ डी °ला × × च । त°.

प्रसृत्य रणाङ्गणे विस्तीर्य । तथा कारिकाकृत्य रणे स्थितिं यत्नं क्रियां वा कृत्वेत्यर्थः[2] । तथा पत्तीन्सत्कृत्याधुना युष्माकं हस्तैर्जेष्यत इति वचनैर्वस्त्रद्रव्यदानादिना च बहु मानयित्वा ॥

भग्नं कुन्तमसत्कृत्यालंकृत्यासिं च पाणिना ।

अदःकृत्यान्तर्हत्यैकः कणेहत्य पयः पपौ[1] ॥ २० ॥

२०. एकः कश्चिद्दैत्यभटः कणेहत्य पयः पपौ । शत्रुवधेनातिसंतुष्टत्वाद्यावत्तृप्तस्तावज्जलं पीतवानित्यर्थः । किं कृत्वा । भग्नं शत्रुप्रहारेण कुटितं कुन्तमसत्कृत्यानादृत्य । तथासिं च पाणिनालंकृत्य गाढं मुष्टिग्रहणेन भूषयित्वा गृहीत्वेत्यर्थः । तथादःकृत्यावश्यं मया शत्रुर्घात्य इति चिन्तयित्वा तथान्तर्हत्यारिं मध्ये हिंसित्वा च ॥

यशः पिबन्मनोहत्यारेः पुरस्कृत्य विक्रमम् ।

अस्तंनीयारिमच्छेत्याच्छोद्य कोप्यनमत्प्रभुम् ॥ २१ ॥

२१. कोपि दैत्यभटः प्रभुमनमत् । यतोरेर्यशो मनोहत्य पिबन्यावत्तृप्तस्तावत्पिबन्नत्यन्तं स्वीकुर्वन्नित्यर्थः । किं कृत्वा । विक्रमं शौर्यं पुरस्कृत्याग्रेकृत्वा । ततोच्छेत्य । अच्छेत्यभ्यर्थे दृढार्थे वा । अभिमुखं दृढं वा गत्वा । तथाच्छोद्याभिमुखं दृढं वोक्त्वा । एतेन च्छलपरिहार उक्तः । ततोरिमस्तंनीय क्षयं नीत्वा । जित्वा हि भटाः संतोषोत्पादनाय प्रभुं प्रणमन्ति ॥

प्रणिम्नन्तः । अभिषिक्ताः । उपलम्भाय । इत्यत्र "धातोः पूजार्थ°" [१]

¹१ डी °पौ × × × शत्रु°.

१ सी डी यत्नक्रि°. २ प °र्थः था. ३ प सी °तुष्टात्वा°. ४ बी °ण क्रुटि°. ५ डी कुण्ठितं. ६ सी °त्यान्याद्द°. ७ सी गाढमु°. ८ बी °त्यभ्य°. ९ डी °ढं वो°. १० सी क्षयनी°.

इत्यादिना प्रादिरुपसर्गसंज्ञः प्राक्च धातोः ॥ एषूपसर्गसंज्ञायां णत्वषत्व-मागमाः सिद्धाः ॥ पूजार्थस्वत्यादिवर्जनं किम् । पूजार्थौ स्वती । सुसिक्त । अतिसिक्तन्तः । अत्रोपसर्गसंज्ञाया अभावे षत्वं न ॥ गतार्थावधिपरी । अभ्यु-पक्रम्याय । पर्यानिन्युः । अधिकभावः सर्वतोभावश्च प्रकरणादेः प्रतीयत इति गतार्थत्वम् ॥ अत्र प्राक्त्वनियमाभावः । ततश्चोपक्रम्यायाधिनिन्युः । परीत्यपि स्वयमभ्यूह्यम् । पर्यानिन्युरित्यत्रानुपसर्गत्वाण्णत्वं न स्यात् ॥ अतिक्रमार्थौ[3]ऽतिः । अति सिक्त्वा । अत्र षत्वं न स्यात् ॥

ऊर्यादि । ऊरीकृत्यानि । उररीकृत्य ॥ अनुकरण । खुट्कृत्य ॥ च्व्यन्त । स्वीकृत ॥ डाजन्त । पटपटाकृत्य ॥ चकारादुपसर्ग । प्रसृत्य । इत्यत्र "ऊर्यादि°" [२] इत्यादिना गतिसंज्ञा धातोः प्राक्त्वं च ॥ गतित्वात् "गतिः" [१.१.३६] इत्यव्ययत्वम् । "गतिकु°" [३.१.४२] इत्यादिना समासश्च फलम् । एवमग्रेपि ज्ञेयम् ॥

कारिकाकृत्य । इत्यत्र "कारिका°" [३] इत्यादिना गतिः प्राक् ॥

अलंकृत्य । सत्कृत्य । असत्कृत्य । इत्यत्र "भूषादर°" [४] इत्यादिना गतिः[6] प्राक् ॥

अन्तर्हत्य । अदःकृत्य । इत्यत्र "अग्रह°" [५] इत्यादिना गतिः प्राक् ॥

कणेहत्य । मनोहत्य । इत्यत्र "कणे°" [६] इत्यादिना गतिः प्राक् ॥

पुरस्कृत्य । अस्तंनीय । इत्यत्र "पुर°" [७] इत्यादिना गतिः प्राक् ॥

अच्छेत्य । अच्छोद्य । इत्यत्र "गत्यर्थ°" [८] इत्यादिना गतिः प्राक् ॥

१ सी अध्याप°. २ सी °णादे प्र°. ३ बी °र्थौतिः ।. ४ बी °णम् । पु°. ५ ए सी डी प्रात्कः । अ°. ६ ए सी डी गति प्रा°. ७ सी °त्य "पु°. ८ सी डी अच्छो°. ९ सी डी °नातिः.

वल्गन्कोप्यतिरोभूयाङ्गं तिरस्कृत्य वर्मणा ।
चर्मणांसं तिरःकृत्वा मध्येकृत्येभमप्यहन् ॥ २२ ॥

२२. कोपि दैत्यभटो वल्गन्नृत्यन्सन्निभमपि । आस्तां पर्यश्वादि । महाबलं गजमप्यहन् । किं कृत्वा । अतिरोभूयाभयेनानिलीय रणाङ्गणे प्रकटीभूयेत्यर्थः । तथा वर्मणाङ्गं तिरस्कृत्याच्छाद्य तथांसं स्कन्धं चर्मणा स्फरकेण तिरःकृत्वापिधाय तथा मध्येकृत्य चिन्तयित्वार्थात्प्रहारप्रस्तावम् ॥

मध्ये कृत्वा नृपांस्तर्जन्पदेकृत्यापरो हयम् ।
पदे कृत्वा निवचनेकृत्य वाचाजयत्परान् ॥ २३ ॥

२३. अपरोन्यदैत्यभटो नृपान्मध्ये कृत्वान्तर्भाव्य नृपैः सहेत्यर्थः । परान् शत्रुभटांस्तर्जन्भिर्भर्त्सयन्सन् वाचैव न तु प्रहारेणाजयत् । किं कृत्वा । हयमश्वं पदेकृत्याहो अश्वरत्नमित्यादिकेस्त्वाद्यन्तके पदे कृत्वा श्लाघित्वेत्यर्थः । ततः पदे कृत्वा पादयोः कृत्वा युद्धार्थं चालयित्वेत्यर्थः । ततः परान्वाचा साक्षेपगिरा निवचनेकृत्य संक्षोभोत्पादनेन निर्वचनान्कृत्वा ॥

कश्चिन्निवचने कृत्वेशाज्ञां मनसिकृत्य च ।
यशो मनसि कृत्वोरसिकृत्य जयमुत्थितः ॥ २४ ॥

२४. कश्चिद्दैत्यो रणायोत्थितः किं कृत्वा । निवचने कृत्वा मौनं कृत्वा । ईशाज्ञां युद्धविधिविषयं स्वाम्यादेशं मनसिकृत्य च चित्ते धृत्वा

१ सी °शाज्ञाम°.

१ ए सी डी °स्यश्व्यादि°. २ बी सी °भूय भ°. ३ सी °र्थां प्रहा°. ४ बी °रोन्यो दै°. ५ ए सी पदेः कृ°. ६ सी °चकृ°. ७ सी °क्षोभ्योत्पा°.

च । यशो रिपुजयोत्थकीर्तिं[1] मनसि कृत्वा च । जयमुरसिकृत्य च चित्ते कृत्वा च । चः सर्वत्र[2] क्त्वान्तेषु योज्यः ॥

स्वकानुरसि कृत्वान्य उपाजेकृत्य सादिनः ।
पत्तीनुपाजकृत्वान्वाजे कृत्लेभानयुध्यत[1] ॥ २५ ॥

२५. अन्यो दैत्यनृपोयुध्यत । किं कृत्वा । स्वकाञ्ज्ञातीनुरसि कृत्वा स्वहृदयाग्रे कृत्वा । तथा सादिन उपाजेकृत्य । पत्तीनुपाजे कृत्वा । इभानन्वाजे कृत्वा[3] । दुर्बलानां भग्नानां वाश्वारोहपदातिहस्तिनां[4] बलाधानं कृत्वा ॥

अन्वाजेकृत्य पुत्रं स्वे पदे कोप्यधिकृत्य च ।
सैन्ये स्वमधि कृत्वाभात्साक्षात्कृत्यास्त्रदेवताः ॥ २६ ॥

१६. कोपि दैत्यनृपोभाद्दिदीपे । किं कृत्वा । पुत्रमन्वाजेकृत्य दुर्बलस्य भग्नस्य वा बलाधानं कृत्वा । तथा[5] स्व आत्मीये पदे राज्येधिकृत्य च स्वामिनं कृत्वा च । तथा सैन्ये स्वमात्मानमधि कृत्वा स्वामीकृत्य । तथास्त्रदेवताः शस्त्राधिष्ठायिका दुर्गाद्याः साक्षात्कृत्य च पूजाबलिमन्त्रस्मरणादिना प्रत्यक्षीकृत्य ॥

साक्षात्कृत्वासिकृत्यां स्वमभिथ्याकृत्य दोर्बलम् ।
मिथ्या कृत्वा खलान्कीर्तिं हस्तेकृत्यापरोनदत् ॥ २७ ॥

२७. अपरो दैत्योनदज्जगर्जे । किं कृत्वा । असिरेवारिमृत्युहेतुत्वात्कृत्या मारिदेवता तां साक्षात्कृत्वा प्रत्यक्षीकृत्य । तथा स्वमात्मीयं

---

१ ए बी सी डी °कृत्येभा°.

---

१ ए सी °कीर्ति म°. २ बी सर्वे: क्त्वा°. ३ ए बी सी डी °कृत्य । दु°. ४ ए सी डी °रोपप°. ५ ए सी °था मे आ°.

दोर्बल[1]ममिथ्याकृत्य शत्रुवधेन सत्यीकृत्यात एव खलान् गेहेशूरेणामुना रणे न किंचिन्नि[2]ष्पाद्यत इत्यसत्यभाषिणैः पिशुनान्मिथ्या कृत्वा । तथा कीर्तिं जयोत्थं यशो हस्तेकृत्य भार्यां कृत्वा ॥

पाणौकृत्य रिपोर्लक्ष्मीं प्राध्वंकृत्यापरः परम् ।
स्वाम्याज्ञां जीविकाकृत्योपनिषत्कृत्य चाययौ ॥ २८ ॥

२८. अपरो दैत्य आययौ स्वामिसमीपमागतः । किं कृत्वा । परं शत्रुं प्राध्वंकृत्य बन्धनेनानुकूलं कृत्वा बद्ध्वा वा । तथा रिपोर्लक्ष्मीं हस्त्यश्वादिकां पाणौकृत्य भार्यां कृत्वा गृहीत्वेत्यर्थः । तथा स्वाम्याज्ञां जीविकाकृत्य जीविकामिव कृत्वा यथा जीवनोपायः सर्वादरेण क्रियते तथा कृत्वेत्यर्थः । उपनिषत्कृत्य चोपनिषदमिव कृत्वा च । यथा रहस्यं सर्वादरेण पाल्यते तथा पालयित्वेत्यर्थः ॥

अतिरोभूय । इत्यत्र "तिरोन्तर्द्धौ" [९] इति गतिः प्राक् ॥

तिरस्कृत्य तिरः कृत्वा । इत्यत्र "कृगो न वा"[१०] इति वा गतिः प्राक् ॥

मध्येकृत्य मध्ये कृत्वा । पदेकृत्य पदे कृत्वा । निवचनेकृत्य निवचने कृत्वा । मनसिकृत्य मनसि कृत्वा । उरसिकृत्य उरसि कृत्वा । इत्यत्र "मध्ये पदे°" [११] इत्यादिना वा गतिः प्राक् ॥

उपाजेकृत्य उपाजे कृत्वा । अन्वाजेकृत्य अन्वाजे कृत्वा । इत्यत्र "उपाजेऽन्वाजे" [१२] इति वा गतिः प्राक् ॥

अधिकृत्य अधि कृत्वा । इत्यत्र "स्वाम्येधिः" [१३] इति वा गतिः प्राक् ॥

साक्षात्कृत्य साक्षात्कृत्वा । अमिथ्याकृत्य मिथ्या कृत्वा । इत्यत्र "साक्षाद्°" [१४] इत्यादिना वा गतिः प्राक् ॥

---

१ बी बलं म°. २ डी °कृत्वा°. ३ बी डी °निष्पद्य°. ४ ए सी °णः. पशु°. डी णः पशुमान्मि°. ५ ए सी डी° क्षादिना.

हस्तेकृत्य । पाणौकृत्य । इत्यत्र "नित्यं°" [१५] इत्यादिना गतिः प्राक् ॥

प्राध्वंकृत्य । इत्यत्र "प्राध्वं बन्धे" [१६] इति गतिः प्राक् ॥

जीविकाकृत्य । उपनिषत्कृत्य । इत्यत्र "जीविका°" [१७] इत्यादिना गतिः प्राक् ॥

समासे नाम नाम्नेव शस्त्रं शस्त्रेण युध्यथ ।
ऐकार्थ्येयोजि विस्पष्टपटुभिर्गूर्जरैर्भटैः ॥ २९ ॥

२. अथैवं दैत्यैर्युद्धस्य प्रारम्भानन्तरं युधि रणे समासे मिथः संबन्धे सत्यैकार्थ्ये । निमित्तसप्तम्यत्र । विजयलक्षणैककार्येण हेतुना विस्पष्टपटुभिः प्रकटं शस्त्रविद्यानिपुणैर्गूर्जरैर्भटैः शस्त्रं खड्गादि शस्त्रेणारिप्रहरणेन सहायोजि मीलितम् । यथैकार्थ्ये सामानाधिकरण्ये सति यः समासः ऐकपद्यं तस्मिन्नाम नाम्ना सह विस्पष्टपटुभिः प्रकटं शब्दविद्याचतुरैर्योज्यते ॥

समासे नाम नाम्नैकार्थ्ये इत्युपमया "नाम नाम्ना°" [१८] इत्यादि समाससंज्ञासूत्रं ज्ञापितम् । लक्षणं चेदमधिकारश्च । तेन बहुव्रीह्यादिविशेषसंज्ञाभावे यत्रैकार्थता दृश्यते तत्रानेनैव समाससंज्ञा स्यात् । यथा विस्पष्टपटुभिरित्यत्र गुणविशेषणस्य गुणवचनेन समासः ॥

त्रिदशारिषु ते द्वित्रानासन्नत्रानदूरषान् ।
अधिकाष्टानध्यर्धषान्युगपद्वृष्टुः शरान् ॥ ३० ॥

३०. ते गूर्जरभटास्त्रिदशारिषु त्रिर्दश त्रिदशा देवाः "प्रमाणीसंख्याड्डः" [७.३.१२८.] इति डः । त्रिंशद्देता देवतास्त्रयस्त्रिंशद्देता देवतास्त्रिं-

---

१ सी हस्तत्र. २ बी °कृत्त । इ°. ३ ए सी °कात्यत्र उ°. ४ बी °त्कृत । इ°. ५ ए सी °त्यैक्यार्थे । नि°. ६ डी यत्समा°. ७ सी डी °मासे ऐ°. ८ ए सी डी °सन्नं सं°. ९ बी विशिष्ट°. १० ए सी त्रिदश त्रिर्दशा.

शदक्षरा विराडिति श्रुतेः । तेषामरिषु दैत्येषु शरान्युगपदेककालं ववृषुर्मुमुचुः । कतिसंख्यान् । आसन्नास्त्रयो येषां तांश्चतुरः । तथादूरे षड् येषां तान्पञ्च सप्त वा । तथाधिका अष्टौ येभ्यो येषु वा तान्दशादीन् । अधिकत्वं चाष्टानामेकाद्यपेक्षम् । अवयवेन विग्रहः । समुदायः समासार्थः । तथाधिकमर्धं येषु तेध्यर्धाः षड् येषां तानध्यर्धषान्नव च ॥

अर्धपञ्चमविंशान्केप्यश्वानुपदशा अपि ।
आरूढसुभटाञ्जघ्रुर्द्विट्सैन्ये मत्तबह्विभे ॥ ३१ ॥

३१. मत्तबह्विभे मदोत्कटानेकहस्तिके द्विट्सैन्ये वर्तमानान्केपि गूर्जरभटा अश्वाञ्जघ्नुः । कीदृशान् । आरूढाः सुभटा यांस्तान् । तथार्धपञ्चमी विंशतिर्यासु ता अर्धपञ्चमा विंशतयो येषां तान्नवतिमित्यर्थः । कीदृशाः । उप समीपे दश येषां तेपि नवाप्येकादशापि वा स्तोका अपीत्यर्थः ॥

उच्चैर्मुखानुष्ट्रमुखान्वृषस्कन्धान्सनन्दनान् ।
सौजा दक्षिणपूर्वास्थोदहत्कोप्यग्निवत्परान् ॥ ३२ ॥

३२. दक्षिणपूर्वास्थो दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वाग्नेयी दिक्तत्रस्थः सौजा विद्यमानप्रतापः कोपि गूर्जरभटोग्निवद्वह्निदेवतेव परानदहत्तीव्रप्रहारैः संतापितवान् । किंभूतान् । उच्चैःस्थाने मुखं येषां तान् । तथोष्ट्रमुखानुष्ट्रमुखवद्बीभत्सवक्त्रान् । तथा वृषस्कन्धान्वृषभस्कन्धवत्पीनस्कन्धान्बलिष्ठानित्यर्थः । तथा सनन्दनान्पुत्रोपेतान् । अग्निरपि दक्षिणपूर्वदिगधिपत्वात्तत्रस्थः सतेजस्कश्च स्यात् ॥

---

१ सी मन्यब°.

---

१ सी °दृश उ°. २ सी °वत्पीन°.

त्रिदश । द्विगान् । इत्यत्र "सुज्वार्थे°" [१९] इत्यादिना बहुव्रीहिः ॥[1]

आसन्नग्रान् । अदूरषान् । अधिकाष्टान् । अध्यर्धषान् । अर्धपञ्चमविंशान् । इत्यत्र "आसन्नादूर°" [२०] इत्यादिना बहुव्रीहिः ॥

उपदशाः । इत्यत्र "अव्ययम्" [२१] इति बहुव्रीहिः ॥

आरूढसुभटान् ॥ अनेकं च । मत्तबहिभे ॥ अव्ययम् । उच्चैर्मुखान् । इत्यत्र "एकार्थं च°" [२२] इत्यादिना बहुव्रीहिः ॥

उष्ट्रमुखान् । वृषस्कन्धान् । इत्येतौ "उष्ट्रमुखादयः" [२३] इति बहुकं निपात्यौ ॥

तुल्ययोगे । सनन्दनान् ॥ विद्यमानार्थे । सौजाः । इत्यत्र "सहस्तेन" [२४] इति बहुव्रीहिः ॥

दक्षिणपूर्वा । इत्यत्र "दिशो रूढ्या°" [२५] इत्यादिना बहुव्रीहिः ॥

केषुचिद्विदधानेषु कुन्ताकुन्ति कचाकचि ।
भूमिर्लोहितगङ्गं नु रक्तैः पञ्चनदं न्वभूत् ॥ ३३ ॥

३३. केषुचिद्भटेषु कुन्ताकुन्ति कुन्तैश्च कुन्तैश्च मिथः प्रहृत्य कृतं युद्धं केषुचिच्च कचाकचि कचेषु च कचेषु च मिथो गृहीत्वा कृतं युद्धं विदधानेषु सत्सु भूमी रणाङ्गणमभूत् । कीदृशम् । रक्तैर्लोहितैः कृत्वा लौहित्याल्लोहितगङ्गं नु लोहिता गङ्गा यत्र देशे स इव । तथा रक्तातिबाहुल्यात्पञ्चनदं नु पञ्चानां नदीनां समाहार इव ॥

द्विगोदावरि मेनेऽन्योथ त्रिगोदावरं रणम् ।
एकमुनि धनुर्वेदं द्विमुन्यस्य च दर्शयन् ॥ ३४ ॥

३४. अन्यो गूर्जरो रणं द्विगोदावरि द्वयोर्गोदावर्योः समाहारमेवं

१ प सी डी °कुतिक°.

१ सी °ग्रीद्दे । आ°. २ बीरूढ्योत्ता°. ३ बी °त्तकुन्तयु°. ४ बी °षु क°. ५ बी °षु मि°. ६ बी °त्याल्लोहि°. ७ प डी सी °वर्यो स°.

त्रिगोदावरं च मेने । प्राणत्यागेन स्वर्गफलत्वाद्विगोदावरित्रिगोदावर-तीर्थयोस्तुल्यं मेन इत्यर्थः । लोके हि द्विगोदावरि त्रिगोदावरं च तत्र प्राणत्यागिनां स्वर्गहेतू महातीर्थे प्रसिद्धे । कीदृक्सन् । एको मुनिर्वंश्य आद्यः कारणपुरुषोस्य तदेकमुनि धनुर्वेदं धनुर्विद्याशास्त्रं दर्शयन्सद्-भ्यस्तधनुर्विद्यत्वेनालीढादिस्थानानि सम्यक्सत्यापयन् । तथास्य धनु-र्वेदस्य द्विमुनि च द्वौ मुनी वंश्यौ च दर्शयन् द्विमुनिकृतधनुर्वेदोक्त-धनुःकलानां सम्यक्सत्यापनेन द्वौ मुनी साक्षादिव दर्शयन् ॥

सप्तकाशि स्वराज्यस्य गङ्गापारपतिः स्मरन् ।
पारेरिचमु मध्येश्वमिभमध्येर्दयन्ययौ ॥ ३५ ॥

३५. गङ्गापारपतिर्गङ्गातीराधिपो मूलराजसेवकः काशिदेशराजः पारेरिचमुं शत्रुसेनापारं ययौ । कीदृक्सन् । स्वराज्यस्य सप्तकाशि स-प्तकाशीन्काशिदेशाधिपान्स्ववंश्यान्स्मरन् सप्तापि स्वानि कुलानि रण-पारगतादिगुणोपेतानि परिभावयन्नित्यर्थः । अत एव मध्येश्वं तुरङ्ग-चमूमध्य इभमध्ये हस्तिचमूमध्येर्दयन्नरिचमूं घ्नन् ॥

कोप्यन्तर्धनुराज्यन्तः कराग्रेग्रेधिपं शरान् ।
यावद्रिपु परिक्लीबमपार्तं चाजयं न्यधात् ॥ ३६ ॥

३६. कोपि गूर्जर आज्यन्ता रणमध्येग्रेधिपं स्वस्वाम्यग्रे वर्तमा-नोन्तर्धनुश्चापमध्यभागे कराग्र आकर्णान्तमाकृष्टत्वाद्धस्तयोरग्रभागे च वर्तमानान् शरान्यधाच्छत्रुष्वक्षिपत् । कथम् । परिक्लीबं निःसत्वा-

१ ए सी °कासि स्म°. २ ए सी °पति स्म°.

१ बी °वरीती°. २ ए सी °शास्त्रद°. ३ बी च तु द°. ४ ए सी °मु सिनु°. ५ डी °मध्ये इ°.

न्वर्जयित्वापार्तं च प्रहारादिना पीडितांश्च वर्जयित्वा । तथा यावद्रिपु यावन्तो रिपवस्तावंत इत्यर्थः । तथा आजयं विजयं मर्यादीकृत्य ॥

सेना प्रागर्बुदं राज्ञां बहिर्व्यूहं[1] प्रतिद्विपम् ।
अभ्यश्वं च प्रसृत्यानुजम्बुमालि स्थिता बभौ ॥ ३७ ॥

३७. प्रागर्बुदमर्बुदाद्रेः प्राक्पूर्वदिग्वासिनां राज्ञां मूलराजनृपाणां सेना बभौ । कीदृक्सती । बहिर्व्यूहं मूलराजीयाच्चक्रगरुडादेर्व्यूहाद्बहिर्भूता । तथा प्रतिद्विपमभ्यश्वं च प्रसृत्य रिपूणां द्विपानश्वांश्च लक्ष्यीकृत्याभिमुखं विस्तीर्यानुजम्बुमालि स्थितातिबहुत्वाज्जम्बूमाल्या लक्षणभूताया आयामेनावस्थिता । अर्बुदसेनातिशूरत्वाद्व्यूहान्निर्गत्य युद्धार्थं शत्रूनभि प्रसृतेत्यर्थः ॥

कचाकचि । कुन्ताकुन्ति । इत्यत्र "तत्रादाय°" [२६] इत्यादिनाव्ययीभावः ॥

लोहितगङ्गम् । इत्यत्र "नदीभिर्नाम्नि" [२७] इत्यव्ययीभावः ॥

पञ्चनदम् । त्रिगोदावरम् । इत्यत्र "संख्या°" [२८] इत्यादिनाव्ययीभावः ॥ अन्ये तु पूर्वपदप्राधान्येऽव्ययीभावो गोदावरीणां त्रित्वं त्रिगोदावरम् । समाहारे तु द्विगुरेवेत्याहुः । द्वयोर्गोदावर्योः समाहारो द्विगोदावरि ॥

द्विमुन्यस्य । सप्तकाशि स्वराज्यस्य । इत्यत्र "वंश्येन°" [२९] इत्यादिनाव्ययीभावः ॥ यदा तु विद्यातद्वतामभेदविवक्षा तदैकमुनि धनुर्वेदमित्यादि सामानाधिकरण्यं स्यात् ॥

---

१ सी °हं मूलराजी°.

---

१ प सी च प्राह°. २ प सी डी °वन्त इ°. ३ प सी डी लक्षीकृ°. ४ सी डी °क्षणाभू°.

पारेरिवमु गङ्गापारं । मध्येऽश्वमु इभमध्ये । अग्रेधिपम् कराग्रे । अन्तर्धेनुः आज्यन्तः । इत्यत्र "पारे°" [३०] इत्यादिना वाव्ययीभावः ॥

यावद्विपु । इत्यत्र "यावदियत्त्वे" [३१] इत्यव्ययीभावः ॥

परिद्वीवम् । अपार्तम् । आजयम् । बहिर्व्यूहम् । प्रागर्बुदम् । इत्यत्र "पर्यपाङ्°" [३२] इत्यादिनाव्ययीभावः ॥

अभ्यश्वम् । प्रतिद्विपं प्रसृत्य । इत्यत्र "लक्षणेन°" [३३] इत्यादिनाव्ययीभावः ॥

अनुजम्बुमालि स्थिता । इत्यत्र "दैर्घ्येऽनुः" [३४] इत्यव्ययीभावः ॥

अनुस्वाम्यनु नद्यास्ते तिष्ठद्गु पि वहद्ग्विव ।
युध्यमाना अमन्यन्त धारयन्तः श्रमप्रति ॥ ३८ ॥

३८. युध्यमानाः शत्रुषु प्रहरन्तस्तेऽर्बुदात्प्राच्या नृपास्तिष्ठन्ति गावो यस्मिन्काले दोहाय वत्सेभ्यो निवासाय जलपानार्थं वा तत्तिष्ठद्गु पि संध्याकालमप्यमन्यन्ताज्ञासिषुः । कीदृशम् । वहन्ति गावो यत्र चरणाय जलपानाय वा तद्वहद्ग्विव प्रभातमिव संजातघटिकाद्वयप्रमाणदिनमिव । यतः श्रमप्रति खेदाल्पत्वं धारयन्तः । कुत एतदित्याह । यतोनुस्वामि[६] स्वामिनः समीपे नद्या जम्बूमाल्या अनु समीपे च वर्तमानाः । समीपस्थे स्वामिनि श्लाघादि कुर्वाणे नादेयशीतलजललवोन्मिश्रवायुसंपर्के च श्रमो ह्यल्पीयान्स्यात् । एतेनैषामत्यन्तं युद्धरसिकत्वमुक्तम् ॥

अनुस्वामि । अत्र "समीपे" [३५] इत्यव्ययीभावः ॥ अनोरव्ययत्वाद्

---

१ ए सी °न्यन्तं धा°.

---

१ डी °श्वम् अ°. २ बी °धेनु आ°. ३ ए सी "पर्युपा°. ४ सी °द्गुवे । व°. ५ ए सी °द्ग्विव. ६ सी °मिनः स°. ७ सी °तेनेषा°.

"विभक्तिसमीप°" [३९] इत्यादिनैव समासे सिद्धे विकल्पार्थं वचनम् । तेन वाक्यमपि । अनु नद्याः ॥

तिष्ठद्गु । वहद्गु । इत्यत्र "तिष्ठद्गु°" [३६] इत्यादिनाव्ययीभावः ॥

समप्रति । इत्यत्र "नित्यं°" [३७] इत्यादिनाव्ययीभावः ॥

शलाकापर्यक्षपरि द्विपरीवाजयैः परैः ।
तेऽध्याज्युपनदि क्षुण्णैः सुभिक्षं रक्षसां व्यधुः ॥ ३९ ॥

३९. परैः शत्रुभिः कृत्वा तेर्बुदात्प्राच्या नृपा रक्षसां सुभिक्षं भिक्षाणां समृद्धिं व्यधुरनेके शत्रवो हता इत्यर्थः । किंभूतैः । अजयैर्निःप(ष्प)राक्रमित्वाज्जयरहितैः । शलाकापर्यक्षपरि द्विपरीवेति । एकया शलाकया द्विधाकृतमञ्जकवंशादिमय्या तथैकेनाक्षेण पाशकेन तथा द्वाभ्यामक्षाभ्यां शलाकाभ्यां वा न तथा वृत्तं यथा पूर्वंजय इति विग्रहः । सर्वत्र सप्तम्या लुक् । इवशब्दः प्रत्येकं संबध्यते । पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा स्यात् । तत्र यदा सर्वे उत्ताना अवाञ्चो वा पतन्ति तदा पातयितुर्जयोन्यथों पाते पराजयस्ततोयमर्थः । यथा पञ्चिकाद्यूत एकया शलाकयैकेनाक्षेण वा द्वाभ्यां शलाकाभ्यामक्षाभ्यां वान्यथापाते द्यूतकारा अजया जयरहिताः स्युः । अत एवाध्याजि रण उपनदि जम्बुमालीसमीपे क्षुण्णैर्विदारितैः ॥

दुःसुराष्ट्रं निःसुराष्ट्रमतिम्लेच्छं विधायिषु ।
तेष्वत्यल्लं ब्रुवन्तोनुद्विपं जग्मुर्द्विषद्भटाः ॥ ४० ॥

४०. अनुद्विपं हस्तिनां पश्चाद् द्विषद्भटा दैत्या जग्मुः । प्राणरक्षार्थं

१ बी नद्या ॥. २ ए सी डी °छ्गु°" इ°. ३ ए सी °र्यक्षिप°. ४ बी पूर्वे ज°. ५ सी °धाते. ६ ए सी °ते जप°. ७ ए सी °ध्यारिजि.

निलीना इत्यर्थः । किंभूताः सन्तः । अत्यक्षं शस्त्राणां ग्रहणे प्रस्तावाभावं ब्रुवन्तः । केषु सत्सु । तेष्वर्बुदात्प्राच्येषु नृपेषु । कीदृक्षु । दुःसुराष्ट्रं सुराष्ट्राणां सुराष्ट्रदेशस्थभटानां छत्रपातनादिना ऋद्धेर्विगमं निःसुराष्ट्रं सुराष्ट्रभटानामभावमतिम्लेच्छं म्लेच्छानां भिल्लादीनामतीतत्वं सतामेवातिक्रमं च विधायिषु ॥

नानुज्येष्ठमयुध्यन्तेतिमूलराजमिच्छवः ।
सचक्रं धेहि[1] सकुलं कुर्वित्यन्योन्यवादिनः ॥ ४१ ॥

४१. अर्बुदात्प्राच्या नृपा अनुज्येष्ठं ज्येष्ठानुक्रमेण नायुध्यन्त क्रमं मुक्त्वाहमहमिकया युयुधिर इत्यर्थः । कीदृशाः सन्तः । इतिमूलराजं मूलराजशब्दस्य लोके जयोत्थां ख्यातिमिच्छवोत एव सचक्रं धेहि सकुलं कुर्वित्यन्योन्यवादिनश्चक्राख्येण सहैककालं खड्गादिकं धारय चक्राणि वा युगपद्धारय । तथोत्कृष्टयुद्धेन कुलस्य सदृशं कुर्विति मिथो भाषिणः ॥

सकीर्ति सार्णवं भर्तुर्भूयादित्यर्बुदेश्वरः ।
सनामारीनहन्प्रत्यर्यनुरूपं[2] कृतायुधः ॥ ४२ ॥

४२. भर्तुर्मूलराजस्य सकीर्ति कीर्तेः[4] संपत्सार्णवमर्णवसाकल्येन सकलेष्वर्णवेष्वित्यर्थः । यद्वार्णवपर्यन्तं यथा स्यादेवं भूयादिति हेतोरर्बुदेश्वरोरीनहन् । कीदृक्सन् । प्रत्यर्यरिमरिं प्रत्यनुरूपं रूपस्य स्वाकृतेर्योग्यं यथा स्यादेवं कृतायुधो व्यापारितास्त्रः । कथमहन् । सनाम

१ सी °हि संकु°. २ सी °रूपकृ°.

१ डी °राष्ट्र°. २ ए सी निःपुरा°. ३ ए सी °च्छाभि°. ४ सी कीर्तिः सं°. ५ बी °वसा°. ६ सी °पस्या स्वा°.

नाम्ना सह यशःपर्यन्तं नामधेयपर्यन्तं वा यशःसाकल्येन नामधेयसाकल्येन वा यशो नामधेयं वा यथा पश्चान्न स्थितमेवमित्यर्थः ॥

प्रहरन्स यथाधर्मं सद्रोणं धनुषा वहन् ।
त्रायमाणो यथात्रस्तं तथा रेजे यथार्जुनः[1] ॥ ४३ ॥

४३. यथार्जुनो रेजे तथा सोर्बुदेश्वरो रेजे यतो यथाधर्मं क्षात्रधर्मस्यानतिक्रमेण प्रहरंस्तथा धनुषा धनुःकर्मणा कृत्वा सद्रोणं द्रोणाचार्यसादृश्यं वहंस्तथा यथात्रस्तं येये भीतास्तांस्त्रायमाणो रक्षन् ॥

द्विपरि । अक्षपरि । शलाकापरि । इत्यत्र "संख्याक्ष°" [३८] इत्यादिनाव्ययीभावः ॥

अभ्याजि[1] । उपनदि । सुभिक्षम् । दुःसुराष्ट्रम् । निःसुराष्ट्रम् । अतिम्लेच्छम् । अतपकम् । अनुद्विपम् । अनुज्येष्ठम् । इतिमूलराजम् । सचक्रम् । सकुलम् । सकीर्ति ॥ साकल्येन्ते च । सार्णवम् । सनाम । इत्यत्र "विभक्ति°" [३९] इत्यादिनाव्ययीभावः ॥

अनुरूपम् । प्रत्यरि । यथाधर्मम् । सद्रोणम् । इत्यत्र "योग्यता°" [४०] इत्यादिनाव्ययीभावः ॥

यथात्रस्तम् । इत्यत्र "यथाथा" [४१] इत्यव्ययीभावः ॥ अथा इति किम् । यथार्जुनः ॥

स्वीकृत्याकुञ्ज्यकं धन्वोत्क्षेप्तुं कुतृणवत्परान् ।
सोदुष्कृतजयश्चक्रे सुराजा शरदुर्दिनम् ॥ ४४ ॥

४४. सुराजा न्यायित्वात्पूजितो नृपोर्बुदेश्वरः परान्कुतृणवदसार-

---

१ सी °र्जुनो रे°.

---

१ प सी अज्याजि ।.

तृणानीवोत्क्षेप्तुमुत्पाटयितुं[1] शरदुर्दिनं शरैः कृत्वा प्रकाशाभावेन निन्दितं दिवसं चक्रे । किं कृत्वा । असती कुत्सिता ज्या यत्र तदकुज्यकं श्रेष्ठप्रत्यञ्चं धन्व धनुः स्वीकृत्य । येतः कीदृक् । अदुष्कृतो महाशूरत्वादकृच्छ्रेण विहितो जयोनेकारिपराभवो येन सः । अनेकरणेषु लब्धजयपताक इत्यर्थः ॥

स्वीकृत्य । कुतृणवत् । इत्यत्र "गतिकु°" [४२] इत्यादिना तत्पुरुषः ॥ अन्य इति किम् । अकुज्यकम् । अत्र बहुव्रीहित्वात्कप् स्यात् ॥

दुर्दिनम् । दुष्कृत । इत्यत्र "दुर्°" [४३] इत्यादिना तत्पुरुषः ॥

सुराजा । इत्यत्र "सुः पूजायाम्" [४४] इति तत्पुरुषः ॥

श्रीमालस्यातिराजातिसिञ्चन्नाताम्रदृक् शरैः ।
विपक्षप्रभटान्व्याप्रोदतिवेल इवार्णवः ॥ ४५ ॥

४५. श्रीमालस्य भिल्लमालापरनाम्नः पुरस्यातिराजा न्यायपालनेन पूजितोधिपोर्बुदेश्वरो विरुद्धाः पक्षा विपक्षाः शत्रवो ये प्रभटाः प्रकृष्टा भटास्तान् शरैर्व्याप्रोदाच्छादयत् । कीदृक्सन् । आताम्रदृक्कोपेनारक्ताक्षोत एव शरैरतिसिञ्चन् रणाङ्गणमतिक्रमेण व्याप्नुवन्नत एव चोत्प्रेक्ष्यते । अतिवेलो निर्मर्यादोर्णव इव ॥

प्रतिलोमान्यवेभानि संवर्माणि बलानि सः ।
उद्रणः परियुद्धानि निर्युद्धान्यपभीर्व्यधात्[1] ॥ ४६ ॥

४६. सोर्बुदेश्वरोपभीरपगतो भियोत एवोद्रणो रणायोद्युक्तः सन्व-

---

१ ए सी डी °भीव्यधा°.

---

१ सी °नीवाक्षेप्तु°. २ ए सी डी यतो की°. ३ ए सी °पक्षाश°. ४ बी °भटाप्र°. ५ डी °रक्षाक्षो°. ६ बी °रैरिति.

लानि शत्रुसैन्यानि परियुद्धानि युद्धाय परिग्लानानि निर्युद्धानि युद्धान्निष्क्रान्तानि च व्यधात् । कीदृंशि सन्ति । प्रतिलोमानि लोमानि प्रतिगतानि प्रतिकूलं गतानीति व्युत्पत्तिमात्रं लक्षणया द्विषन्ति । तथावेभानीभैरवकुष्टानि गजबृंहितोपेतानीत्यर्थः । तथा संवर्माणि वर्मणा संनद्धानि ॥

अतिक्रमे । अतिसिद्धन् ॥ पूजायाम् । अतिराजा । इत्यत्र "अतिर्॰" [४५] इत्यादिना तत्पुरुषः ॥

आताम्र । इत्यत्र "आल्पे" [४६] इति तत्पुरुषः ॥

प्रादयः । प्रभटान् । विपक्ष ॥ अत्यादयः । अतिवेलः । प्रतिलोमानि ॥ अवादयः । अवेभानि । संवर्माणि ॥ पर्यादयः । परियुद्धानि । उद्व्रणः ॥ निरादयः । निर्युद्धानि । अपभीः । इत्यत्र "प्रात्यव॰" [४७] इत्यादिना तत्पुरुषः ॥

पुनःप्रवृद्धरोमाञ्चपुनरुत्स्यूतकञ्चुकः ।
परमारः सोसिघातं शल्याघातं द्विषोक्षिपत् ॥ ४७ ॥

४७. पराञ् शत्रून्मारयति "कर्मणोण्" [५.१.७२] इत्यणि परमारः । परमारः क्षत्रियविशेषजातिः । सोर्बुदेश्वरोसिघातं खड्गेन हत्वा शल्याघातं क्षुरिकया हत्वा च द्विषोक्षिपन्निराकरोत् । कीदृक्सन् । पुनः प्रवृद्धा वीररसोत्कर्षाद्भूयः स्फीतीभूता ये रोमाञ्चास्तैः पुनरुत्स्यूतो भूयस्त्रुटितः कञ्चुको वर्म यस्य स तथा ॥

पुनःप्रवृद्ध । पुनरुत्स्यूत । इत्यत्र "अव्ययम्॰" [४८] इत्यादिना तत्पुरुषः ॥

परमारः । इत्यत्र "ङस्युक्तं कृता" [४९] इति तत्पुरुषः ॥

---

१ ए सी युधाय. २ ए सी °निर्युं°. डी °नि यु°. ३ सी °नि प्रति प्र°. ४ बी संबद्धा°. ५ ए सी डी °षः ॥ अता°. ६ ए सी °दय । अ°. ७ ए बी सी °मारक्ष°. ८ सी पुष्ट°. ९ बी °वृद्धः । पु°.

कृष्णावतारेण केश्यादिदैत्यवधार्थं भ्रान्तः । यथोचैः केशिनं केशिसं-ज्ञमश्वरूपं दैत्यं जेरिथ मुखमध्ये स्वबाहुप्रवेशेन विनाशितवान् । तथा यत्र देशे मथुरायां कंसं दैत्यमुज्जजरिथापि च । तथा यत्र देशे शोणितपुरेभिबालि बलिदैत्यं लक्ष्मीकृत्याभिमुखं भ्रेमिथ वामनरूपेण बलिबन्धनाय भ्रान्तः । तथा यत्र देशे क्षीरसमुद्रोपकण्ठे वेदानृग्यजुःसामाख्यान्वेमिथ मत्स्यरूपेणोद्गीर्णवान् । पुरा हि किल चतुर्दशभुवनप्रलये हरिर्नाभिपद्मे ब्रह्माणं निर्ममौ । स च वेदानस्मार्षीन्मानसानृषींश्च निर्ममौ । तस्य च वेदान्स्मरतो जृम्भायामागतायां मुखे विवृते-कस्माच्छङ्खाख्यो दैत्यः प्रविश्य वेदानाहृत्य क्षीराब्धौ प्रविष्टस्ततश्च ज्ञानवैकल्येन ब्रह्मा शून्योभून्मानसर्षिभिश्चामुं शून्यतावृत्तान्तं विज्ञपितो हरिर्दिव्यचक्षुषा ज्ञातपरमार्थो मत्स्यरूपेण क्षीराब्धौ प्रविश्य शङ्खं हत्वा वेदानाहृत्य ब्रह्मणो मुखे वान्तवानित्यैतिह्यम् । तथा यत्र देशे मिथिलोपवने तैत्तिरीं तित्तिरेरिमां शाखां यजुर्वेदांश्च ववमिथापि च याज्ञवल्क्यरूपेणोद्गीर्णवांश्च । अत्र किल कस्यापि नृपतेः प्रणयिन्या निरपत्यतादुःखमपनेतुमाशिषं दातुं शाकल्यगुरोरादेशेन शान्तवेषाकारा विनेयाः सदा ययुः । कदाचिदन्येषामसंनिहिततया गुरुर्याज्ञवल्क्यमेव प्राहिणोत्तं च नववयस्तया रचितचारुवेषाकारं सविकारमिवाशिषं दातुमुद्यतं दृष्ट्वाहो अस्य महर्षेराशिषः प्रभावः स्थाणुमपि पल्लवयतीति राज्ञी सविस्मयमुपजहास । स च क्रुद्धस्तत्पुरः स्थाणुमेव सप्रभावतया तैरेव स्वैरक्षतैः पल्लवयित्वा गुरोः समीपमाययौ । सा च संभ्रान्ता तमानेतुं नृपेण गुरुमर्थयामास । नृपानुरोधाद्गुरुणा निर्बध्यमानोपि स यदा न ययौ तदा गुरुणा क्रुद्धेन स्वयमध्यापि-

---

१ सी °शिसं°. २ ए लक्षीकृ°. ३ सी °नादय. ४ ए °नवानृ°. ५ ए °सात्सङ्गा°. ६ बी °श्च तान°. ७ बी विज्ञापि°. ८ ए यजुर्वे°. ९ सी °क्यस्तपे°. १० ए °र्याश्चव°. ११ बी °त्पुरस्था° सी °त्पुरंस्था°. १२ ए °व प्र°.

तानि तैत्तिरीयाणि यजूंषि प्रतीपं याचितः संस्तानि मूर्तानि तित्तिरिरूपाणि योगप्रभावाद्वमति स्म । वमनानन्तरं महर्षिणा तित्तिरीभूय[1] ग्रसित्वा तेषां च यजुषां शिष्येभ्यः प्रतिपादनाद्यजुर्वेदप्रसिद्धा तैत्तिरी शाखा जज्ञे । तस्याश्च याज्ञ[3]वल्[4]क्येन वान्तानि तित्तिरिरूपाणि यजूंषि कारणमिति कार्यकारणयोरभेदोपचाराद्ववमिथापि च शाखामित्युपपन्नं स्यात् । याज्ञवल्क्यस्य विष्णुत्वेनोपवर्णनं महाप्रभावत्वात् । यदुक्तम् ।

यद्यद्विभूतिमत्सत्त्वं प्रभावोत्कटमेव वा ।
तत्तदेवावगच्छेस्त्वं मम तेजोंशसंभवम् ॥ इति ॥

तथा यत्र दे[6]शेषु यमुनातटेष्वर्भककेल्या गेन्दुकशङ्कुलाक्रीडादिकया बालक्रीडया हेतुना फेणिथ गोपबालकैः सह गतः । तथापफणिथागतश्च । तथेषन्मनाक् त्रेसिथ गेन्दुकादिप्रहाराशङ्कया भीतः । तथोचैरभितत्रसिथ चाभिमुख्येन भीतश्च । विष्णुर्हि कृष्णावतारे कंसभयेन बालकाले यमुनातटस्थेषु नन्द[7]गोकुलेषु गोपरूपेणोषित इत्यागमिकाः । तथा यत्र देशे यमुनात[8]टे वृन्दावने वा गोषु धेनुषु मध्ये रेजिथ गोरक्षाद्यर्थं गोवर्ध[9]नाद्युद्धरणाद्यवदातैः शोभितः । तथा गोपैः परिवारभूतैर्गोपालैः कृत्वा रराजिथ । तथा स्येमिथापि सिण्टाशब्दांश्चकर्थ च न च सस्यमि[10]थंप्यन्यकार्यव्यग्रतायां सिण्टाशब्दान्न चकर्थ च । गोपा हि जातिस्वभावेनान्यकार्याव्यग्रता[11]यां सि[12]ण्टाशब्दान्कुर्वन्ति । केशिकंसवधादीनि वृत्तानि लोकप्रसिद्धान्येवेत्यत्र नोक्तानि ॥

१ बी °री भ°. २ ए °यजुर्वे°. ३ ए बी सी याज्ञव°. ४ बी सी °वल्केन. ५ सी डी °व च । त°. ६ सी डी °शेय°. ७ सी डी °न्दकु°. ८ ए °टे वन्दा°. ९ सी डी °नाम्युद्ध°. १० डी °थाकार्येप्यन्यव्य° सी °थाकार्यप्यन्यव्य°. ११ बी °यां शण्टा°. १२ ए सिण्ढाश°.

स्वेनुरेषु पफणुस्तव सूताः सस्वनुस्तव गुणांश्च विफेणुः।
तत्रसुः स्वविषये न हि यद्वत्रेसुरत्र न चरा अपि तद्वत् ॥ ४५ ॥

४५. हे राजंस्तव सूता भट्टा एषु पूर्वोक्तेषु वृन्दावनादिविषयेषु पफणुर्जग्मुः । तथा विफेणुर्भयाभावेन स्वेच्छाचारित्वाद्विशिष्टं जग्मुः । तथा स्वेनुस्त्वदाशीर्वादाद्यूचुः । तथा तव गुणान्सस्वनुश्चाकीर्तयंश्च । तथा तव चरा अपि हेरिका अपि । किं पुनः सूतादय इत्यप्यर्थः । यद्वद्यथा स्वविषये निजदेशे गूर्जरत्रायां न हि नैव तत्रसुर्बिभ्युस्तद्वत्तथात्रैषु देशेषु वृन्दावनादिषु न त्रेसुः ॥

सस्यमुर्यदलयो यदु हंसाः स्येमुराः कुरुषु तन्न रराजे ।
रेज ईश तव कीर्तनमावभ्राज इन्द्रसुतवर्णनकं वा ॥ ४६ ॥

४६. उ हे ईश स्वामिन्नलयो भृङ्गा यत्सस्यमुः शब्दायिता यच्च हंसाः स्येमुस्तत्स्यमनम् । आ इति खेदे । कुरुषु देशेषु न रराजे सुखदं नाभूदित्यर्थः । खेदश्च तच्छब्दानां मधुरत्वेन सुखदानामप्यसुखकत्वात् । तर्हि किं रराज इत्याह । तव कीर्तनं वर्णनकं कुरुषु रेजे । वा यद्वा। इन्द्रसुतवर्णनकमर्जुनवर्णनावभ्राजे कर्णाह्लादकमभूदित्यर्थः ॥

भ्रेज ऐल इति राघव आबभ्रास ईश्वरगणः परिभ्रेसे ।
भ्लेस आर्किरजभूपतिराबभ्लास इत्यनुदिशं त्वयि वादाः ॥४७॥

४७. इत्येवंविधा वादास्त्वयि विषयेनुदिशं प्रतिदिशमभूवन् । के

१ बी कीर्तिन°.

१ सी डी °नुस्त्वदा°. २ सी °नुश्चकी°. ३ बी °मन् मा इ°. ४ ए शे न°.

त इत्याह। यथा न्यायित्वादिना प्रकारेण त्वं भ्राजसे तथेत्यर्थः । ऐलः पुरूरवा भ्रेजे । तथेति राघवो रामचन्द्र आबभ्रासे शुशुभे । तथेतीश्वरगण ईश्वरस्य हरस्यान्तरङ्गभक्त्याराधकत्वाद्गणः श्वेताख्यो राजा बाणो वा परिभ्रेसे । तथेत्यार्किरर्कस्यापत्यं कर्णो मनुर्वा भ्लेसे शुशुभे तथेत्यजभूपती रघुपुत्र आबभ्लासे। इत्यैलाद्या आद्यनृपाः स्वगुणैस्त्वया नृणां स्मार्यन्त इत्यर्थः । परिभ्रेस इत्यत्र रसंयोगे ह्रस्वस्य गुरुत्वाभावाच्छन्दोभङ्गः । यदुक्तम् । "ह्क्षपविसर्गानुस्वारव्यञ्जनाह्रादिसंयोगे" । जिह्वामूलीय उपध्मानीये विसर्जनीयेनुस्वारे व्यञ्जने ह्रादिवर्जिते संयोगे च परे ह्रस्वोपि गुरुः स्यात् । अह्रादीति समस्तव्यस्तसंग्रहात् ह्रसंयोगे हसंयोगे रसंयोगे च न गुरुः । आदिशब्दाद्यथादर्शनं क्लादिसंयोगे च । एष्वतीव्रप्रयत्नत्वं संयोगस्य गुरुत्वाभावे हेतुस्तीव्रप्रयत्ने तु स्यादेव गुरुः ॥

तेरिव । अवतेरिथ । त्रेपिरे । प्रफेलतुः । फेलिथ । भेजतुः । विभेजिथ । इत्यत्र "तॄत्रप°" [२५] इत्यादिनैत्वं च द्विः ॥

जेरुः जजरुः । जेरिथ जजरिथ । भ्रेमुः बभ्रमुः । भ्रेमिथ बभ्रमिथ । वेमुः ववमुः । वेमिथ ववमिथ । त्रेसुः तत्रसुः । त्रेसिथ अभितत्रसिथ । विफेणुः पफणुः । फेणिथ आपफेणिथ । स्येमुः सस्यमुः । स्येमिथ सस्यमिथ । स्वेनुः सस्वनुः । स्वेनिथ सस्वनिथ । रेजे रराजे । [ रेजिथ रराजिथ । ] भ्रेजे आबभ्राजे । परिभ्रेसे आबभ्रासे । भ्लेसे आबभ्लासे । अत्र "जॄभ्रम°" [२६] इत्यादिना वैत्वं न च द्विः ॥

---

१ सी °था ज्ञायि° २ सी °श्वरास्य. ३ डी राजबा°. ४ ए त्यं वर्णो. ५ बी भाद्या नृ°. ६ सी नृगा सा°. ७ बी °न्दो भागः । य°. ८ ई °नं क्तादि.° ९ बी °भावहे° १० ए °रिथः । अ° डी °रिथ । अ°. ११ ए °मुः वे°. १२ सी °मिथः व°. १३ ए °फलिथ. १४ सी °णिथः स्ये°. १५ ए °थ स्वे°. १६ सी° निथः स°. १७ ए सी डी ई °द्विः ॥ स्रेथि°.

श्रेथिथ श्लथमिमं किमु हारं[1] श्रेथुरेवमपरेप्यथ न त्वम् ।
ग्रेथिथे[2]ति परिभर्त्स्य वधूः श[3]श्रन्थुरन्ध्रनरपा भवदर्थम् ॥ ४८ ॥

४८. अन्ध्रनरपा अन्ध्रदेशराजा[1] भवदर्थं हारं श[2]श्रन्थुः स्वयं गुम्फितवन्तः । किं कृत्वा । वधूः स्वभार्याः परि[3]भर्त्स्य प्रत्येकं संत[4]र्ज्य । कथमित्याह । इमं हारं कि[5]मु किमिति श्लथं शिथिलं त्वं[6] श्रेथिथ गुम्फितवती । अ[7]थाथ वा न त्वमेव हारमेवं श्लथं ग्रेथिथ । गुम्फितवती किं तर्ह्यपरेप्यन्ये मन्त्र्यादयोपि हारं श्लथं[8] श्रेथुरिति । अनेनैषां भीम आदरातिशय उक्तः ॥

ग्रेथुरग्र्यमितिहासमथो जग्रन्थुरद्भुतकथाश्चरितैस्ते ।
मागधा न खलु देभुरतः शश्रन्थिथ स्वकगुणैः कतमं नो ॥४९॥

४९. मगधस्य राज्ञ इमे मागधा मगधराजलोकास्ते तव चरितैः कृत्वाग्र्यं प्रधानमितिहासम् । इतिहासो यथावृत्तम् । तत्प्रधा[9]नः प्रबन्धोप्युपचारादितिहासः । तं वर्णनाविरहेण पुरावृत्तप्रतिबद्धं प्रबन्धभेदं ग्रेथुररचयन् । तथाद्भुतकथा अद्भुता रसालंकारैराश्चर्यकारिण्यो याः कथा धीरशान्तनायका गद्यबन्धाः पद्यबन्धा वा सर्वभाषावर्णनारूपाः प्रबन्धभेदां[10]स्तांश्च जग्रन्थुः । खलु निश्चयेन न देभुर्न द[11]म्भं चक्रुरान्तरभक्त्या चक्रुरित्यर्थः । अतो हेतोः स्वकगुणैः स्वका गुणाः शौर्यादय एव गुणा र[12]ज्जवस्तैः कृत्वा कतमं नरं नो शश्रन्थिथ न बद्धवान् किं तु सर्वमपि वशीचकर्थेत्यर्थः ॥

---

१ डी °रं श्लेथु°. २ ए °थेथि प°. ३ ई शस्रन्थु°.

१ डी °जानो भ°. २ ई शस्रन्थुः.° ३ सी °रिभ्रर्त्स्य प्र°. ४ सी डी °तर्य । क°. ५ सी किमि°. ६ डी त्वं श्लेथि°. ७ सी डी अथ. ८ बी सी डी °थं श्लेथु°. ९ सी डी °धानप्र°. १० बी सी °दास्ताश्च. ११ ए दम्भ च°. १२ ए सी डी रज्जव°.

नो न देभिथ ददम्भिथ नो जग्रन्थिथार्जवमिवाच्युतगोपः ।
सोसि[1] देम्भिथ पुनः किमिति त्वां संदिशन्ति यमुनातटघोषाः॥५०॥

५०. यमुनातटघोषाः कालिन्दीतटगोकुलस्थलोकास्त्वां संदिशन्ति । कथमित्याह । हे राजन् । इवो भिन्नक्रमे । अच्युतगोप इवाच्युतो विष्णुर्यो गोपो गोधुक्स यथा गोपगोप्यादिषु[1] दम्भं चक्रे न चार्जवं चकारैवं[2] त्वं नो न देभिथ न नच्छद्माकार्षीः[3] किं तु ददम्भिथ । प्रथममयोगव्यवच्छेदे वाक्यम् । दम्भेन सहायोगो व्यवच्छिद्यते । द्वितीयं त्वन्ययोगव्यवच्छेदे । अन्यस्यापि दम्भो घटते । परं त्वमेव ददम्भिथेत्यन्यस्य[4] दम्भेन योगो व्यवच्छिद्यते । त्वमेव शत्रुष्वनेकधा छलं चकर्थेवेत्यर्थः । दम्भवानप्ययं[5] कदाचिदार्जवमपि[6] कृतवान्भविष्यति नेत्याह । न जग्रन्थिथार्जवं मायाविष्णुः[7] कदाचिदपि सरलस्वभावं[8] नो चकर्थेत्यर्थः । यद्येवं ततः किमित्याह । असि त्वं सोच्युतगोपः । किमिति पुनः किमर्थं पुनर्देम्भिथान्यादृशरूपप्रकाशनेनाच्युतगोपो[9] नास्मीति मायां चकर्थेत्यर्थ[10] इति । एतेन यमुनातटघोषाणामच्युत इव भीमे भक्त्यतिशय उक्तः[11] ॥

श्रेन्थिथोच्चिचयिथापि[2] न पुष्पं ग्रेन्थिथ स्रज इहाखिलदिक्षु ।
कीर्तिभिः शशसिथाशु[3] तमिस्रं[4] दूरगान्ववणिथेव पुरस्तात् ॥ ५१ ॥

५१. हे राजंस्त्वं पुष्पं[12] कुसुमजातिं नोच्चिचयिथ[13] नोच्चितवान्न[14] श्रेन्थिथापि[15] न[16] ग्रथितवांश्च । परमिह जगत्यखिलदिक्षु कीर्तिभिः कृत्वा

१ बी सी डी °सि देभि°. २ ए श्रेथिथो°. ३ ए °थाश्रु त°. ४ ए बी सी डी मिश्रं दू°.

१ सी °गोपादि°. २ बी °रैव त्वं°. ३ डी °कार्षी किं. ४ डी °त्यस्य. ५ बी ई दम्भुवनप्य°. ६ सी °मपि कृ°. ७ बी डी ई °विषु क°. ८ बी ई °वं न च°. ९ सी डी °नर्देभि°. १० सी °र्थे इ°. ११ बी °क्तः ॥ श्रन्थि.° १२ बी पुष्पं कु°. १३ ए °चियथ. १४ बी °न्न श्रन्थि°. १५ सी श्रेथिथा°. १६ डी ग्रन्थित°.

स्रजः पुष्पमालो[1] ग्रेन्थिथ[2] गुम्फितवान् । श्वेतत्वात्सौरभ्याच्च पुष्पमालातुल्याः कीर्तीर्दिशि[3] दिशि प्रसारितवानित्यर्थः । तथा कीर्तिभिर्दिक्ष्वाशु तमिस्रमन्धकारं[4] शशसिथ[5] व्यनाशयो दिशो निर्मलीचकर्थेत्यर्थः[6] । तथा कीर्तिभिर्दूरगान्दूरदेशस्था[7]ञ्जनान्पुरस्तादिवाग्रेस्थितानिव[8] ववणिथावोच[9] इव । निकटस्थैरिव दूरस्थैरपि त्वं गीतकीर्तिरित्यर्थः ॥

त्वद्यशः शशसतुर्ददाते चायशः शशरतुश्च गुणांस्ते ।
ईर्ष्यया[1] ववणतुस्त्वयि दोषान्सिन्धुचेदिनृपती इह दृप्तौ ॥५२॥

५२. हे राजन्निह पृथ्व्यां सिन्धुचेदिनृपती सिन्धुदेशचेदिदेशराजौ दृप्तौ दर्पिष्ठौ सन्तावीर्ष्यया त्वत्संपत्तौ चेतसो व्यारोषेण त्वद्यशः शशसतुर्जघ्नतुः[10] । ते तवायशोवर्णवादं ददाते च । तथा ते गुणाञ् शशरतुश्च । तथा त्वयि विषये दोषान्ववणतुश्च[11] । चोत्रापि योज्यः ॥

श्रेथुः शश्रन्थुः । श्रेथिथ शश्रन्थिथ । ग्रेथुः जग्रन्थुः । ग्रेथिथ[12] जग्रन्थिथ । इत्यत्र "वा श्रन्थ°" [२७] इत्यादिना वैत् । एतत्संनियोगे नस्य लुप्न च द्विः ॥

देभुः । अत्र "दम्भः" [२८] इत्येत्वस्य लुप्न च द्विः ॥

देभिथ ददम्भिथ । इत्यत्र "थे वा" [२९] इति वैत्तत्संनियोगे च नस्य लुप्न च द्विः ॥ अन्ये तु श्रन्थिग्रन्थिदम्भीनां नलोपे सति नित्यमेत्वमिच्छन्ति[13] । नलोपं त्ववित्परोक्षायां[14] नित्यमेव[15] । तेन श्रेथुः[16] । ग्रेथुः । देभुः ॥ नलोपाभावे

---

१ डी ईर्ष्यया.

---

१ बी पुष्पमा°. २ सी °ला ग्रन्थि°. ३ सी ई °शि प्र°. ४ ए बी सी डी °मिश्रम°. ५ ए °रं शिशसि°. ६ ए °चकार्थे°. ७ सी °र्तिभूर्दूरदे°. ८ ए °रस्थादि°. ९ ए °वणि°. १० ए शसःतु°. ११ ई °श्च च यो° १२ ए °थिथः ज°. १३ डी °मेवैत्व°. १४ डी °विति परो°. १५ सी °व श्रे°. १६ डी श्रेथतुः । ग्रेथतुः । देभतुः ॥ न°.

तु शश्रन्थिथ । अग्रन्थिथ । ददम्भिथ । इत्येव स्यात् ॥ अन्यस्त्ववित्परोक्षासेट्थ-वोर्नित्यमेत्वमिच्छति नलोपं त्ववित्परोक्षायामेव । तेन श्रेथुः । ग्रेथुः । देभुः ॥ नलोपाभावेपि । श्रेन्थिथ । ग्रेन्थिथ । देम्भिथ । इत्येवेच्छति ॥

शशासतुः । शशसिथ । ददराते । ववणतुः । ववणिथ । शशरतुः । उच्चिचयिथ । इत्यत्र "न शस°" [ ३० ] इत्यादिना नैत् ॥

देहि चाच्छलमथो अवधेहि श्रूयतां व्यधित सिन्धुपतिर्यत् ।
दिग्य इष्टसुरकोशमपीप्यत्त्वज्जिघांसुसुभटान्प्रजिघाय ॥ ५३ ॥

५३. हे राजन्नच्छलं छलस्याभावं देहि वितर । यद्वापि अत्यर्थं वितर वा । आवयोर्वदतोः स्खलितं न गणनीयमित्यर्थः । चः पूर्ववाक्यार्थापेक्षया समुच्चये । अथो अनन्तरमवधेह्यवधानं कुरु । तथा सिन्धुपतिर्यद्व्यधिताकृत यत्तदोर्नित्याभिसंबन्धात्तच्छ्रूयताम् । तदेवाहतुः । त्वज्जिघांसुसुभटांस्तव घातुकान्भटान्सिन्धुपतिर्दिग्ये भूरिद्रव्यादिदानेन पालितवान् । तथेष्टः समभावत्वेनाभिमतो यः सुरो मरुचण्डीशादिस्तस्य कोशं दिव्यजलमपीप्यत् । वयं भीमं हनिष्याम एवेति तद्वचसि स्वप्रत्ययोत्पादनायेष्टदेवतां संकल्प्य तान्स्नानजलं पायितवानित्यर्थः । तथा प्रजिघाय त्वत्पार्श्वे प्राहिणोत् ॥

---

१ ए °धे श्रू°. २ सी डी °प्यस्त्वांजि°.

---

१ बी °थो नित्य°. २ ए °मेवे । ते°. ३ डी °वे । श्रे°. ४ सी °थ । ग्रन्थि°. ५ सी °थ । दम्भि°. ६ ए इत्यवे°. ७ ए °णतु । व°. ८ ए °रतु । उ°. ९ ए ई शश इ°. १० ए स्खललि°. ११ सी डी °न्धाच्छू°. १२ सी डी °देवहेतुः. १३ ए °ज्जिघासुः सुभ°. १४ ए °र्दिग्ये भू°. १५ सी °स्त को°.

तं [1]जिगाय शिवशाणपतिं प्राजीहयत्स्वकटके स च दूतैः ।
यं जिगीषति न कोपि चिकीर्षुं[2] वाजिभिर्युधि न चापचि[3]काय ॥५४॥

५४. तं शिवशाणपतिं शिवशाणदेशाधिपं स सिन्धुपतिर्जिगायाभिभूतवान्दूतैः[1] कर्तृभिः स्वकटके प्राजीहयच्चा[2]नाययच्च । चो भिन्नक्रमे[3] । जित्वा सदा स्वसेवकं चकारेत्यर्थः । एतेनास्य प्रभुत्वशक्तिरुक्ता । प्रभुराश्वसाधनत्वाद्वाजिभिरश्वैश्चिकीषुमु[4]पचेतुमिच्छन्तं यं न कोपि युधि जिगीषति । तथा यं कोपि न चापचिकाय नापचितं क्षीणबलं चक्रे ॥

निश्चिका(चा)य बलमस्य न कश्चिन्निश्चिचीषति न चाशयमस्य ।
दुर्मतिस्त्वयि यदेष इयेषोवोष नः स तदियर्त्यनलत्वम् ॥ ५५ ॥

५५. अस्य सिन्धुपतेर्बलं पराक्रमं न कश्चिद्बलि[5]ष्ठोपि[6] निश्चिका(चा)येतावदिति[7] निर्णीतवान्[8] । एतेनोत्साहशक्तिरुक्ता । तथातिगूढहृदयत्वादस्याशयं चित्तं न कश्चिन्निश्चिचीषतीदृशमिदमिति न[9] निर्णिनीषति । एतेन तु मन्त्रशक्तिः । अत एवैष दुर्मतिर्दुष्टाशयः संस्त्वयि विषये यद्धिंसादिकमियेषैच्छत्तन्नोस्मानुवोष ददाह । अत एव तन्नोस्माकमनलत्वमग्नितामियर्ति स्म जगामाग्नितुल्यमभूदित्यर्थः ॥

---

१ ए जिघाय. २ ए °कीपु वा°. सी °कीर्पुं वा°. ३ ए °चिघाय.

---

१ सी °वान्तैः क°. २ बी °च्चानायच्च. ३ ई °क्रमो जि°. ४ सी डी °कीर्पुमु°. ५ ए °श्चिद्विलि°. ६ ए बी °लिष्टोपि. ७ डी ई °ति न नि°. ८ ए °वानेनो°. ९ ए न निर्णि°.

यस्तवारिररियर्ति तमेषोर्यर्ति तांस्त्वदुदयं न य ईषुः।

ताञ्जहार विदुधाव चखानादिद्युतत्परिजगुर्य इह त्वाम् ॥५६॥

५६. यस्तवारिस्तमेष सिन्धुपतिरररियर्त्यत्यर्थं[1] गच्छति त्वद्वैरं मित्रीकरोतीत्यर्थः। तथा येन्यायिनश्चरटाद्यास्त्वदुदयं तवोन्नतिं स्वा-विनाशाशङ्कया नेषुस्तानर्यर्ति। तथा तांस्त्वन्मित्रादीनसौ जहार सर्व-स्वापहारेणालुण्टयद्विदुधावेतस्ततो[2] व्यक्षिपच्चखान व्यदारयत्[3]। य इह सिन्धुदेशे त्वां परिजगुर्गुणग्रहणेनाकीर्तयन्नत एवादिद्युतन्प्रकटीचक्रुः ॥

देहि। अवधेहि। इत्यत्र "हौ दः" [ ३१ ] इत्येव चायं द्विः॥ न च द्विरि-त्युक्तेः कृतमपि द्वित्वं निवर्तते। तेन यङ्लुप्यपि देहीति स्यात्[4]॥

दिग्ये। अत्र "देर्दिगिः°" [ ३२ ] इत्यादिना दिग्यादेशः॥

अपीप्यत्। इत्यत्र[5] "के पिबः पीप्य्" [ ३३ ] इति पीप्य्॥

प्रजिघाय[6]। जिघांसु। इत्यत्र "अङे हि°" [ ३४ ] इत्यादिना[7] मूलहस्य घः॥ अङ इति किम्। प्राजीहयत्॥

जिगीषति। जिगाय। इत्यत्र "जेर्गिः°" [ ३५ ] इत्यादिना गिः॥

चिकीषुं[8] निश्चिचीषति। अपचिकाय निश्चिचाय। इत्यत्र "चेः किर्वा" [ ३६ ] इति वा[9] किः॥

इयेष। उवोष। इयर्ति। इत्यत्र "पूर्वस्य°" [ ३७ ] इत्यादिना—इयुवौ॥ अर्तेर्यङ्लुपि द्वित्वे पूर्वस्याकारे[10] "रिरौ च लुपि" [४.१.५६] इति रिरी—आगमे तदिवर्णस्य[11] चेयूभावे सति अरियर्ति। एके त्वत्रेयं नेच्छन्ति। अर्यर्ति[12]। तन्मत-

१ प °रियर्त्य°. २ प °दिगुधा°. ३ ई सी व्यक्षेप°. ४ सी °त्र दे पि°. ५ प पीप्य॥. ६ बी प्रतिजि°. ७ डी °ना पूर्वह°. ८ बी °कीर्षु नि°. ९ सी वा दिः॥ इ°. १० सी °र्वत्याका°. ११ बी चेयभा°. १२ डी °र्यंति। त°.

संग्रहार्थं पूर्वस्येति योः समानाधिकरणं विशेषणं तेनेकारोकारमात्रस्यैव पूर्वस्ये-युवौ ॥ अस्य इति किम् । ईषुः ॥

जहार । इत्यत्र "ऋतोत्" [ ३८ ]इति[2] ऋतोत् ॥

परिजगुः । विदुधाव । इत्यत्र "ह्रस्वः" [ ३९ ] इति ह्रस्वः[3] ॥

परिजगुः । जहार । इत्यत्र "गहोर्जः" [ ४० ] इति जः ॥

अदिद्युतन् । इत्यत्र "द्युतेरिः" [ ४१ ] इति-इः ॥

चखान । विदुधाव । इत्यत्र "द्वितीय°" [४२ ] इत्यादिनाद्यतृतीयौ ॥

नो ऋतिच्छिषति सामनि तिष्ठेवाभ्यृचिच्छिषति किं तु स दण्डे ।
छीचकार स यदा परिटिष्ठेवाथ जीव जुहुवे नृपचक्रम् ॥ ५७ ॥

५७. स सिन्धुपतिरुद्धतत्वात्सामनि सान्त्वनोपाये नो ऋतिच्छिषति । न जिगमिषति । ऋच्छ[4] गतावप्यन्ये । तथा सामन्येव विषये तिष्ठेवावज्ञया थूत्कार । तर्हि क जिगमिषतीत्याह । किं तु दण्डेन्त्योपायेभ्यृचि-[5]च्छिषत्याभिमुख्येन यियासति । अत एव स सिन्धुपतिर्यदा छीत्कार चुक्षावाथाथ वा यदा परिटिष्ठेव थूत्कृतवांस्तदा नृपचक्रं जीव जुहुवे बभाषे । जीवेति कर्मपदमनुकरणम् । अनुकार्यानुकरणयोरभेदविव-क्षया द्वितीयाया अभावः । यद्वात्रेति शब्दोगम्यः । जीवेत्युवाचेत्यर्थः ॥

तिष्ठेव टिष्ठेव । इत्यत्र "तिर्वा ष्ठिवः" [ ४३ ] इति वा तिः ॥ केचित्तु "स्वरेभ्यः" [ १.३.३० ] इति द्विरुक्तस्य छस्य द्वित्वे सति पूर्वस्य त्यादेश-मिच्छन्ति । तन्मते ऋतिच्छिषति इति स्यात् ॥

---

१ बहुषु पुस्तकेषु ष्ठिव् इति धातो रूपाणां स्थानेषु ठू इत्यत्र ट्ट इति दृश्यते ।

---

१ डी °त्रस्ये°. २ सी °ति रितो°. ३ ए हस्व ॥. ४ सी डी °च्छत् ग°. ५ ए °येभ्यचि°.

अभ्यृचिच्छिषति[1] । इत्यत्र "व्यञ्जनस्य°" [ ४४ ] इत्यादिना पूर्वस्य व्यञ्जनस्यानादेर्लुक्[2] ॥

तिष्ठेव[3] । इत्यत्र "अघोषे[4] शिटः" [ ४५] इति शिटो लुक्[5] ॥

छीवकार । शुक्रुवे । अत्र "कङश्चञ्" [ ४६ ] इति चञौ[6] ॥

**चोकवीषि किमु चीनपते कोकूयसे किमिति बर्बरराज ।**
**कोकवीषि किमु तेजनृपेत्थं वावदीति नृपतीन्ब्रुवतोसौ ॥ ५८ ॥**

५८. यदा नृपास्तं प्रसादनाय स्तुवन्ति तदासौ लक्ष्म्यादिमदेनावहेलया रे चीनबर्बरतेजदेशाधिपाः किमिति पूत्कुरुथे[7]ति निर्भर्त्सयतीत्यर्थः । वृत्तद्वयेनामुनास्यानेके नृपा दासभूताः सन्तीति दुःसाध्यत्वोक्तिः ॥

**बेभिदीति स जहेति वनीवञ्चीति भेद्यपरिहेयसमर्थान् ।**
**जात्वनाकुलमतिर्न सनीस्रंसीति[1] चोन्नतमनोरथशैलात् ॥ ५९ ॥**

५९. स सिन्धुपतिर्भेद्यपरिहेयसमर्थान् भेद्यानुपजापार्हान्नृपान्बेभिदीत्युभयवेतननरव्यापारणादिनात्यर्थमुपजपति । तथा परिहेयान्महादुर्गाद्याश्रितत्वेन बहुआयाससाध्यत्वात्साधनेप्यल्पफलत्वात्परित्याज्यान्नृपाञ्जहेत्यत्यर्थं त्यजति । तथा समर्थानधिकबलान्नृपान्वनीवञ्चीति कुटिलं याति । अन्यदिगभिमुखं यात्राकरणेन समर्थान्विश्वास्य तेष्वज्ञायमानेश्छलेन पततीत्यर्थः । अत एव शत्रुभयाभावा-

---

१ ए बी °नीसंस्रीति.

---

१ डी °च्छिष्यति. २ डी °क् न ॥. ३ ई° व । टिष्टेव । इ°. ४ सी °षे शटः. ५ डी लुक ॥. ६ ए चङौ ॥. ७ ए °त्कुथे°. ८ बी वहया°. ९ बी °ल्पत्वा°. १० ए °त्याजान्नृ°. ११ ए °पान्वनी. १२ बी °नच्छले°. सी डी °नस्थले°.

दनाकुलमतिर्निश्रिन्तः सन्नुन्नतमनोरथशैलाज्जातु न सनीस्रंसीति च नात्यर्थं पतति च । चः पूर्ववाक्यार्थापेक्षया समुच्चये । एतेनास्य नीतिशास्त्रोक्तानुसारित्वाद्दुर्जेयतोक्ता ॥

द्राक्कनीकसति दिक्षु दनीध्वस्यन्त आपदि पनीपतति स्म ।
आपनीपदति मङ्क्षु चनीस्कन्दत्यमुष्य कटकेम्बुधिभूपाः ॥ ६० ॥

६०. अमुष्य सिन्धुपतेः कटके मङ्क्षु शीघ्रप्रयाणैश्चनीस्कन्दति-च्छलचारित्वेन यियासितदिग्विशेषगोपनाय कुटिलं गच्छति आपनीपदति च कुटिलमायाति चेतस्ततो भ्राम्यति सतीत्यर्थः । अम्बुधिभूपा द्वीपवासिनृपा द्राक् दिक्षु चनीकसति स्म मा स्मेदमस्मासुच्छलेन पप्तदिति भयेन कुटिलं गच्छन्ति स्म । अत एव दनीध्वस्यन्ते स्म सैन्यादिनात्यर्थं क्षीणाः । अत एव चापदि विपत्तौ पनीपतति स्मात्यर्थं पेतुः । एतेनास्य सैन्ये चलिते महादुर्गस्था अपि भयान्न सुखेन शेरत इत्युक्तम् ॥

जङ्गमीति च बलैः स बनीभ्रश्यन्त उच्चशिखराणि गिरीणाम् ।
जञ्जभत्यहिपतौ परिबम्भञ्जीति जीर्णकमठोपि च पृष्ठम् ॥ ६१ ॥

६१. स सिन्धुपतिर्बलैर्जङ्गमीति दिग्जयायच्छलचारित्वात्कुटिलं गच्छति । ततश्च गिरीणामुच्चशिखराण्युन्नतशृङ्गाणि बनीभ्रश्यन्ते चानन्तबलसंमर्देन गिरीणां कम्प्यमानत्वादत्यर्थमधः पतन्ति

१ ए डी द्राकनी°. २ ए सी डी °मुष्यक°. ३ सी डी स वनी°. ४ बी °भ्रस्यन्त. ५ डी °बम्भ्रञ्जी°. ६ ए बी पृष्टम्.

१ सी ई °श्रितः. २ बी °नीभ्रंसी°. ३ ए बी सी ई °ति छल°. ४ सी कुल°. ५ ए बी सी डी पतदि°. ६ ए °पति वलै°. ७ ए दिग्गया°. ८ ए डी °णि वनी°. ९ सी °नीभृश्य°. १० बी °भ्रसन्ते. ११ ए °त्यर्थः म°.

च। चो भिन्नक्रमे। तथाहिपतौ शेषराजे जञ्भति बलभारेणातिखिन्नत्वाद्गर्हितं गात्रं विनमयति सति जीर्णकमठोप्यादिकूर्मोपि पृष्ठं परिबम्भञ्जीति चात्यर्थं मोटयति[1] च ॥

ये हि दन्दहति दन्दशति[1] द्राक्पंपशत्यपि च तान्किल मन्त्रान् ।
जञ्जपीत्यनयचञ्चुरितासौ पम्फुलीति च समीहितचूर्त्या ॥६२॥

६२. हि[2] स्फुटं ये मन्त्रा दन्दहत्यभिरूपविधानेन गर्हितं दहन्ति द्राग्दन्दशति सर्पादिरूपविधानाद्गर्ह्यं दशन्ति पंम्पशत्यपि[3] च। पंशिति सौत्रो धातुः। पंषी बाधनस्पर्शनयोः। पंषीस्थाने[4] पशीति केचित्। शिलावृष्टिनागपाशबन्धादिविधानेनात्यर्थं पशन्ति बाधन्ते च। तान्मन्त्रान्किलेति सत्ये। अनयचञ्चुरितान्याये गर्ह्यं चरणशीलोसौ सिन्धुपतिर्जञ्जपीति गर्ह्यं जपति हिंसाभिप्रायेण जापाज्जापस्य गर्ह्यता। तथा समीहितचूर्त्या वाञ्छितक्रियया पम्फुलीति चात्यन्तं फलयुंक्तश्च स्यान्मन्त्रजापोस्य न निष्फल इत्यर्थः। एतेनास्य देवतोपासनशक्त्युक्तिः ॥

कोकूयते। अत्र "न कवतेर्यङः" [ ४७ ] इति पूर्वस्य नं चः ॥ शंवूनिर्देशः कौतिकुवत्योर्निवृत्त्यर्थः। यङ्लुपि च निषेधो न स्यात्। चोकवीषि ॥ अन्ये तु यङ्लुप्यपि प्रतिषेधयन्ति कोकवीषि ॥

१ सी °ति XXX द्राग्दन्दशति. २ ए °क्पंशपत्य°.

१ सी °ति ॥. २ ई हि स्फटं. ३ बी °म्पश्यत्य°. ४ डी पशति. ५ ई पषी बा°. ६ ई पषीस्थानीप°. ७ ए °नाशग° ८ ई °धन्ति च. ९ सी °नयं च°. १० ए ई °युक्तः स्या°. ११ बी सी डी °स्य देव°. १२ सी °तासश°. १३ बी सी डी ई °यते। अ°. १४ ए °यंन: इ°. १५ सी डी न च ॥. १६ बी सी डी शवनि°. १७ ए °निवृत्त्य°. १८ डी °वीति ॥ अ°. १९ डी वीति ॥ वा°.

वावदीति । वेभिदीति[1] । इत्यत्र "आगुणावन्यादेः" [ ४८ ] इत्यागुणौ ॥ अन्यादेरिति किम् । वनीवञ्चीति ॥

जहेति । इत्यत्र "न हाको लुपि" [ ४९ ] इति पूर्वस्य नात् ॥

वनीवञ्चीति । सनीस्रंसीति । दनीध्वस्यन्ते[2] । बनीभ्रश्यन्ते[3] । चनीकसति । पनीपतति । आपनीपदति । चनीस्कन्दति । इत्यत्र "वञ्चस्रंस०" [ ५० ] इत्यादिना नीरन्तः ॥

जङ्गमीति[4] । इत्यत्र "मुरतः०" [ ५१ ] इत्यादिना मुरन्तः ॥

जञ्जपीति[5] । जञ्जभति । दन्दहति । दन्दशति । परिबम्भञ्जीति । पम्पशति । इत्यत्र "जप०" [ ५२ ] इत्यादिना मुरन्तः ॥

चञ्चुरिता । पम्फुलीति । इत्यत्र "चरफलाम्" [ ५३ ] इति[6] मुरन्तः ॥

चञ्चुरिता । चूर्त्या[7] । पम्फुलीति । इत्यत्र "ति च०" [ ५४ ] इत्यादिनात उः ।

**नाधिचेदि च वचांसि नरीनृत्यन्त आशु न च धीर्नरिनर्ति ।**
**नर्नृतीति यदसौ भुजदर्पो दिग्नरीनृतदवारितसेनः ॥ ६३ ॥**

६३. यद्यस्माद्धेतोरसौ चेदिर्भुजदर्पो नर्नृतीत्यत्यर्थं नृत्यति । कीदृक्सन् । दिक्षु नरीनृतत्यो[8] जैत्रत्वेन दर्पोद्धुरत्वादतिशयेन[9] वल्गन्त्योत एवावारिता:[10] केनाप्यनिषिद्धा:[11] सेना[12] यस्य सः । तस्मादधिचेदि च चेदिराजविषये च न केवलं सिन्धुपताविति चार्थः । वचांस्येतावन्मात्रदर्पोसावित्यावयोर्वचनान्याशु[13] शीघ्रं स्तोककाले न नरीनृत्यन्ते नात्यर्थं प्रसरन्ति । धीश्चैतद्दर्पमानविषया बुद्धिश्चाशु न नरिनर्ति । एतद्दर्पो[14] बंहीयस्त्वाद्दसदादिभिर्बहुकालेन[15] ज्ञेयो वाच्यश्चेत्यर्थः ॥

१ डी ई °दील°. २ डी °नीध्वंसयते । चनीक°. ३ सी ई °भ्रस्यन्ते. ४ सी डी °मील°. ५ ए बी सी डी °अपति. ६ ए °ति मुर°. ७ सी डी °र्त्या । पुम्फली°. ८ बी °नृत्यतो जै°. ९ ए ई °शयव°. १० ए °वावारि°. ११ सी डी °रिता के° १२ सी डी °षिद्धा से°. १३ बी °त्यादीनि वच°. १४ बी सी डी °पों बही°. १५ बी °दस्मादा°.

नेरीनृत्यन्ते । अत्र "ऋमतांरी(रीः) [५५] इति रीः ॥

नरिनर्ति । नर्नृतीति । नरीनृतत् । इत्यत्र "रिरौ च लुपि" [५६] इति रिरौ रीश्च ॥

**क्ष्मामनेनिजुरवेविषुरिन्दोर्न ह्यवेविजुरिहेश यशांसि ।**
**यानि तेन स पिपर्ति बिभर्तीयर्ति तान्यहह सीम जिहीते ॥६४॥**

६४. हे ईश ते तव यानि यशांसि क्ष्मामनेनिजुर्निर्मलीचक्रुरवेविषुर्व्योमुवन्नत एवेन्दोश्चन्द्रान्न ह्यवेविजुर्नैव पृथगभवन्निन्दुतुल्यानीत्यर्थः । तानि स चेदिर्न पिपर्ति त्वदरिभिर्विलुप्यमानानि न रक्षति न बिभर्ति गानेन न पोषयति न धारयति वा नेयर्ति न याति नाश्रयतीत्यर्थः । अतश्चाहहेति खेदे कष्टं सीम सकलभूमण्डलव्याप्तिलक्षणा त्वद्यशोमर्यादा जिहीते याति भ्रश्यतीत्यर्थः ॥

**अम्बुधिं प्रसृतिभिः स मिमीते यो मिमासति तदश्वरथेभम् ।**
**तं जिजावयिषुरत्र न कालोप्यस्य संयियविषुर्युधि कोन्यः ॥६५॥**

६५. यो नरस्तदश्वरथेभं तस्य चेदेरश्वान्रथान् गजांश्च मिमासति संख्यातुमिच्छति सोम्बुधिं प्रसृतिभिश्चुलुकैर्मिमीते संख्याति । तथात्र युधि कालोपि यमोपि तं चेदिं न जिजावयिषुरस्यातिशूरत्वेन स्वमरणाशङ्कया नात्मानं गमयितुमिच्छुस्ततो युधि कोन्योस्य संयियविषुः संबद्धीभवितुमिच्छुः ॥

१ डी विभर्ती॰.

१ सी नरिनार्ति । नरी॰. २ ए ॰तां रीः ॥ न॰. ३ ए बी सी डी ॰नृत्यत्. ४ सी ॰निर्मे॰. ५ ए ॰क्रुरवेविषु॰. ६ सी स चिदि॰. ७ ए ई ॰न पो॰. ८ सी ॰त्यर्थोतत॰. ९ सी ॰व्याधिल॰. १० सी त्वद्योशो॰. ११ सी योन्यर॰. १२ बी प्रभृति॰. १३ सी डी ॰भिश्चलु॰. १४ ए नात्मं ग॰. १५ ए संनिवि॰ १६ ए ॰विमि॰.

क्ष्मां रिरावयिषता कटकेनारीँल्लिलावयिषतीह सहेलम् ।
को विभावयिषति स्म न सख्यं कः शुशावयिषति स्म न भक्तिम् ॥ ६६ ॥

६६. कः सख्यं चेदिना सह मैत्रीं न विभावयिषति स्म भावयितुमिच्छाति स्म। सर्वोपि मृत्युभयात्सख्यं चिकीर्षति स्मेत्यर्थः । तथा[1] को भक्तिं न शुशावयिषति स्म नाविवर्धयिषत्[3] । क सति । इह चेदौ । किंभूते । क्ष्मां रिरावयिषता पादाघातैः[4] शब्दायमानां प्रयोक्तुमिच्छता कटकेन कर्त्रा सहेलं[5] लीलयैवारीँल्लिलावयिषति[6] छेदयितुमिच्छति । एतेन यात्रारम्भिण्यप्यस्मिन्सर्वेपि नृपा वशीभूता इत्युक्तम् ॥

अनेनिजुः । अवेविजुः[8] । अवेविषुः । अत्र "निजां शिलेत्[9]" [५७] इति पूर्वस्यैत्[10] ॥

पिपर्ति । इयर्ति । बिभर्ति । मिमीते । जिहीते । अत्र "पृभृ०" [ ५८ ] इत्यादिना पूर्वस्य-इः ॥

मिमासति । इत्यत्र "सन्यस्य[11]" [ ५९ ] इति-इः ॥

जिजावयिषुः[12] । संयियविषुः । रिरावयिषता । लिलावयिषति । बिभावयिषति । इत्यत्र[13] "ओर्जान्तस्था०" [ ६० ] इत्यादिना-इः ॥ ननु ण्यन्तानां वृद्ध्यावादेशयोः कृतयोर्द्वित्वे सति पूर्वस्योकारान्तता न संभवति । तत्र "सन्यस्य" [ ५९ ] इत्यनेनैव सिद्धे किं गुरुणा सूत्रेण । एतावत्तु विधेयम् । ओः पयेवर्णे इति । पिपविषते । यियविषतीत्यत्र पूर्वस्योकारान्तस्येत्वं यथा स्यात् । सत्यम् । णौ यत्कृतं कार्यं तत्सर्वं[14] स्थानिवदिति न्यायज्ञापनार्थम् । तेन शुशावयिषतीत्यादि सिद्धम् ॥

१ प शुभाव°.

१ सी डी °था भक्तिं को न. २ प शुभावायि°. ३ प बी °त् । इ°. ४ सी पादघा°. ५ प °हे लील°. ६ प °वारीह्लि°. ७ सी डी °यितु°. ८ प °विषुः । अ°. ९ प °जां सत्ये°. बी °जां शेत्ये°. १० बी °स्यैतत्. ११ बी सनस्य. १२ सी °यिषु । सं°. १३ प °त्र ऊर्जा°. १४ सी ततत्स°.

अन्यभूमिपतिनाम सदा शिश्रावयिष्यत इहास्य न कैश्चित् ।
एक एव हि भवान्नृपतिः शुश्रावयिष्यत इदं स्म समग्रैः ॥ ६७ ॥

६७. इह पृथ्व्यामन्यभूमिपतिनाम सदा न कैश्चित्कैरपि नृपादिभिः शिश्रावयिष्यतेहं[1]युत्वेनान्यनृपनाम्नोप्यसहिष्णुत्वादस्य न संभालयितुमिष्यते किं तु हे चेदिपते हि स्फुटमेक एव भवान्नृपतिरिदमस्य समग्रैः सर्वैः[2] शुश्रावयिष्यते स्म । इदमिति भिन्नक्रमे । अस्येत्यस्य व्याप्यत्वेपि संबन्धविवक्षया षष्ठी । एतेनायं त्वन्नामापि न सहत इत्युक्तम् ॥

तैरनेन वसु दण्डपदे सिस्रावयिष्यत[1] इलापतिवर्गैः ।
यैः किलोद्भटभुजैरभितोसुस्रावयिष्यत धनं धनदेन ॥६८॥

६८. तैरिलापतिवर्गै राजौघैः[3] कर्तृभिरनेन चेदिना हेतुकर्त्रा[4] दण्डपदे दण्डस्थाने वसु द्रव्यं सिस्रावयिष्यते क्षारयितुमिष्यते । किलेति सत्ये । उद्भटभुजैर्बलिष्ठबाहुभिर्यैर्हेतुकर्तृभिरभितः सार्मस्त्येन[5][6][7][8] धनदेन प्रयोज्यकर्त्रा धनमसुस्रावयिष्यत[9] भुजाबलेन[10] यैर्धनदोपि दण्डं जिघृक्षित[11] इत्यर्थः । एतेनास्य कोशसंपदतिशयोक्तिः ॥

अस्य कोपकठिनं हृदयं दिद्रावयिष्ववरिकुलं चटु वक्ति ।
भक्तिवाग्भिरमुना खलु नादुद्रावयिष्यत जनः पुनरन्यः ॥६९॥

६९. अस्य चेदेः कोपकठिनं[12] हृदयं दिद्रावयिषु प्रसिसादयिष्वि-

---

1 ए सिस्राव°. बी सिश्राव°.

---

1 ए °युक्तेना°. 2 ए सर्वैंषु: श्रा°. 3 डी राजोघैः 4 ए हेतुः क°. 5 ए बी °लिष्ठबा°. 6 बी °बाहुभि°. 7 ए भियैहेतु°. 8 ई °मस्तेन. 9 बी °सुश्राव°. 10 सी डी भुजब°. 11 ए °क्षत. 12 ई °नं दि°.

त्यर्थः । अरिकुलं चटु चाटुकारान्वक्ति । अमुना चेदिना पुनरन्यो जनः[1] शत्रुलक्षणः खलु निश्चयेन भक्तिवाग्भिर्भक्तिप्रधानवचनैर्नाद्रुद्रावयिष्यत[2] । एतेनामुनारीणां[3] मानो भग्नो न तस्य केनापीत्युक्तम् ॥

**अस्य चाश्वबलमुद्भटमुत्पिप्रावयिष्विव रयादधिरूढान् ।**

**वीक्ष्य सप्ततुरगी ध्रुवमुत्पुप्रावयिष्यत इनेन न सापि ॥ ७० ॥**

७०. ध्रुवं सापि सकलाश्वोत्कृष्टतया प्रसिद्धापि सप्ततुरगीनेन रविणा नोत्पुप्रावयिष्यते[4][5] नोर्ध्वं गमयितुमिष्यते । किं कृत्वास्य[6] चेदेरश्वबलं वीक्ष्य । किंभूतम् । उद्भटमश्वेषूत्कृष्टमत एव रयाद्वेगादधिरूढानश्ववारानुत्पिप्रावयिष्विवोर्ध्वं[7] गमयितुमिच्छुिव । उद्भटत्वादधिरूढानां रयेणोत्पिप्रावयिषुर्वाश्वैतदश्वबलं[8] मत्कां सप्ताश्वीमुपरि यान्तीं मा भिषिषेणादित्याशङ्कयार्केण नैतदूर्ध्वं गमयिष्यत इति संभावयामीत्यर्थः ॥

**पर्वतप्रतिममस्य महीं पिप्लावयिष्विभकुलं मदपूरैः ।**

**चिन्तयन्स नियतं न मुदापुप्लावयिष्यत हरिः स्वगजेन ॥ ७१ ॥**

७१. स ऐरावणवाहनत्वेन सर्वत्र प्रसिद्धो हरिरिन्द्रोपि नियतं निश्चितं मुदा हेतुना स्वगजेनैरावणेन हेतुकर्त्रा नापुप्लावयिष्यतं[10] मुदा प्लवमानो हर्षावस्थां प्राप्नुवन्हरिः स्वगजेन प्रयोक्तुं नैष्यततेत्यर्थः । कीदृक्सन् । अस्य चेदेरिभकुलं चिन्तयन्परिभावयन् । किंभूतं पर्वतप्रतिमं तथा मदपूरैर्महीं[11] पिप्लावयिषु[12][13] । वृत्तद्वयेनामुनार्यमुत्कृष्टाश्वेभसंपदा[14] दुर्जेय इत्युक्तम् ॥

---

१ सी जन श°. २ प °ष्यथ। ए° ३ सी डी °णां मदो भ°. ४ प नोपुप्रा°. ५ प °ष्यति नो°. ६ सी °त्वा चे°. ७ प बी °वोर्द्ध ग°. ८ प °त्वाचेत°. ९ ई मम स°. १० सी °ष्यते मु°. ११ प सी °मैही पि°. १२ सी पिप्लव°. १३ सी °यिष्ट। इ°. १४ प °ययत्कृ°.

**राजभिर्बहुभिरप्यसक्तौ चिच्यावयिष्यत उदग्रतरः कैः ।**
**येन सोपि किल दर्पजुषा चुच्यावयिष्यत इनस्त्रिदशानाम् ॥७२॥**

७२. येन चेदिना दर्पजुषा सता सं[1] शौर्यादिगुणैः प्रसिद्धस्त्रिदशानामिनोपि शक्रोपि चुच्यावयिष्यत इन्द्रपदाद्भ्रंशयितुमिष्यते[2]सक्तौ चैद्य उदग्रतरः पूर्वोक्तबला[3]दिसंपदोद्भटतरो बहुभिरपि राजभिः कैश्चिच्च्यावयिष्यते । एतेन त्वां विना त्वन्नृपैर्बहुभिरप्यसौ न साध्य इत्युक्तम् ॥

शिश्रावयिष्यते शुश्रावयिष्यते । सि[4]स्रावयिष्यते [5]असुस्रावयि[6]ष्यत । दिद्रावयिषु अदुद्रावयिष्यत । उत्पिप्रावयिषु उत्पुप्रावयिष्यते । पिप्लावयिषु अपुप्लावयिष्यं[7]त । चिच्यावयिष्यते चुच्यावयिष्यते । अ[8]त्र "श्रुस्रु°" [ ६१ ] इत्यादिना पूर्वोत इर्वा ॥

**दीर्घनिद्रमथ सो[1]रिगणं सुष्वापयिष्वसिकरोचकथत्तत् ।**
**मन्त्रिणां बलमचीकरदग्रे केतुभिर्ग[2]गनमौर्णुनवद्यत् ॥ ७३ ॥**

७३. अथैवं चरोक्त्यनन्तरं स भीमस्तच्चरवचनं मन्त्रिणामचकथ[9]त्तैः सहामन्त्रयदित्यर्थः । कीदृक्सन् । दीर्घा कदाचिदप्यजागरणेन प्रलम्बा निद्रा मृत्युरूपा यत्र तद्यथास्यादेवमरिगणं सुष्वापयि[10]षुः शाययितुमिच्छु[11]रसिः करे यस्य सः । [12]कोपावेशाच्छत्रूं[13]श्छेदायात्तखड्ग इत्यर्थः ।

---

१ सी °रिमण सु°. २ बी °गमन°.

---

१ बी सी डी स सौर्या°. २ ए °तेशक्तौ. ३ ए °लालिसं°. ४ सी सिश्राव°. ५ ए असुश्राव. ६ बी ष्यते । दि°. ७ सी °ष्यते । चि°. ८ ए °त्र स्रुस्रु इ°. ९ ए °थत्ते स°. १० डी °षुः स्वापयि°. ११ सी °रसि क°. १२ डी कोपवे°. १३ सी °त्रूख°.

सापेक्षत्वेप्यत्र समासो नित्यसापेक्षत्वात् । तथा यद्बलं केतुभिर्ध्वजैः कर्तृभिर्गगनमौर्णुनेवद्बृंहीयस्त्वेनाच्छादयत्तद्बलमग्रे स्वस्याग्रतोचीकरत् । शत्रवभिषेणनायासंख्यं सैन्यमग्रे कृत्वा चचालेत्यर्थः ॥

सुष्वापयिषु । इत्यत्र "स्वपो णावुः" [ ६२ ] इति पूर्वस्योत् ॥

अचीकरत् । इत्यत्र "असमान°" [ ६३ ] इत्यादिना पूर्वस्य सनीव कार्यम्॥ असमानलोप इति किम् । अचकथत् ॥

अचीकरत् । इत्यत्र "लघोर्°" [ ६४ ] इत्यादिना दीर्घः ॥ अस्वरादेरिति किम् । और्णुनवत् ॥

तं स सिन्धुवहमाप महीं योतस्तरत्क्षितिभृतोददरच्च ।
नोत्तितीर्षुमुदतत्वरदब्धिं द्रागसस्मरदपारपयोभिः ॥ ७४ ॥

७४. स भीमस्तं सिन्धुवहं पञ्चनदाख्यं वहनमाप प्राप यो वहो महीमपारपयोभिरपर्यन्तजलैः कृत्वातस्तरत्प्लावितवान्क्षितिभृतोद्रीनददरच्च जलाघातैर्व्यदारयच्च । अत एव द्रागब्धिमसस्मरत्स्मरयामासार्थादब्धिं दृष्टपूर्विणो लोकान् । अत एव चोत्तितीर्षुमुत्तरीतुमिच्छुं नरं नोदतत्वरद्दुस्तरत्वाशङ्कया नोत्सुकमकार्षीत् ॥

द्यामपस्पशदपप्रथदम्भोमम्रदत्तटतरूंश्च तरङ्गैः ।
यस्तटानि मकरैरववेष्टद्दाविवेष्टदथ कं न भयेन ॥ ७५ ॥

७५. यो वहस्तरङ्गैः कर्तृभिर्द्यां व्योमापस्पशत्स्पर्शितवान् । तथाम्भोपप्रथत्प्रस्तारयत् । तथा तटतरूनमम्रदच्चोन्मूलयामास च । तथा

१ ए °दाधिवे.°

१ सी °त्सशापे°. २ डी °वद्दही°. बी ई °वदंही°. ३ सी °संख्यसै°. ४ सी कार्ये ॥ अ°. ५ सी °दाख्यव°. ६ सी ददार°. ७ सी डी ई °रत्स्मार°. ८ डी त्तिरीर्षुं°.

यः कूलंकषत्वेन मकरैर्मत्स्यैः कर्तृभिस्तटान्यववेष्टव्यापयामास । अथैवं सति यो भीष्मत्वाद्भयेन कर्त्रा कं नरं नाविवेष्टत्[1] ॥

योम्बुधिर्नु जलदानचचेष्टत्स्वर्वधूः सुरसरिन्न्वचिचेष्टत् ।
न त्ववाजगणदत्र जनोयं कण्ठभूषणमजीगणदुर्व्याः ॥ ७६ ॥

७६. यो वहोम्बुधिर्नु जलदानेचचेष्टज्जलग्रहणाय व्यापारितवान् । तथा यो निर्मलजलत्वेन सुरसरिन्नु व्योमगङ्गेव स्वर्वधूर्देवीर्[3]विचेष्टज्जलक्रीडार्थं व्यापारयत् । अत एवात्र पृथ्व्यां यं वहं जनो न त्ववाजगणदल्पीयान्निष्फलश्चायमिति नैवावज्ञातवान् । किं तु यं जन उर्व्याः पृथ्वीरमण्याः कण्ठभूषणं ग्रैवेयकमेतदाकारत्वादजीगणज्ज्ञातवान् ॥

असस्मरत्[6] । अददरत् । उदतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् । अत्र "स्मृदृत्वर°" [ ६५ ] इत्यादिना पूर्वस्यात् ॥

अववेष्टत्[8] आविवेष्टत् । अचचेष्टत् । अचिचेष्टत् । इत्यत्र "वा वेष्टचेष्टः" [६६] इति वात् ॥

अजीगणत् । अवाजगणत् । इत्यत्र "°ईच्च गणः" [ ६७ ] इति-ईदच्च ॥

आदुरानृधुरथानशिरे चानश्नुराञ्छुरभितोपि यदापः ।
वाञ्छलेन गिरिराड्किमिहानाञ्छेति येन च बभूव वितर्कः ॥७७॥

७७. येन वहेन हेतुना वितर्कोर्थान्नृणां बभूव च । कथमित्याह । यद्यस्माद्धेतोरापोभितः समन्तादूर्ध्वं तिर्यग्दिक्षु चानृधुर्ववृधिरे । अथ वृद्ध्यनन्तरमभित आनशिरे व्यापुस्तथाभित आनश्नुश्च ग्रक्षयामासुरार्द्री[11]चक्रुश्चेत्यर्थः[12] । चो भिन्नक्रमे । आञ्छुरपि दीर्घीबभूवुश्च । अपिः[13] समु-

१ बी °विचेष्ट°. २ ए °नववेष्ट°. ३ ए °रविचे°. ४ सी डी °निफल°. ५ ए °षणग्रै°. ६ डी °त् । उ°. ७ ई °पश्यश°. ८ बी अचचेष्ट°. ९ डी °त् अवि°. १० ए बी ईच ग°. ११ बी सी डी °मुश्चार्द्री°. १२ ए °र्थश्चो- भिन्न°. १३ ए सी अपि स°.

ह्ययार्थो भिन्नक्रमे। अत एवाभित आदुरिव सामस्त्येन भुक्ता इव। ये हि यथाकामं भुक्ताः स्युस्ते ह्यङ्गेन वर्धन्ते। ततः स्थौल्यादिशो व्याप्नुवन्ति स्निग्धाङ्ग[1]त्वचा म्रक्षिता इव च स्युर्दीर्घी[2]भवन्ति चेति। अतश्च वा[3]श्छलेनैवं प्रवृद्धव्यापकदीर्घीभूतजलव्याजेनेह सिन्धुदेशे किं गिरिराड्हिमालय आनाञ्छ दीर्घीबभूवेति॥

किं बभूव इह चन्द्रमसा सुष्वाप किं हरिरिहेह बुभूवे[1]।
किं श्रिया भृगुसुतः किममुं विव्याध चेति जनता यमनूचे॥७८॥

७८. यं वहमनु लक्ष्यीकृत्य जनतोचे। कथमित्याह। चन्द्रमसा किमिह वहे बभूव उत्पन्नम्। तथा हरिर्विष्णुः किमिह वहे सुष्वाप तथेह वहे[4] किं श्रिया[5] बुभूवे तथा भृगुसुतः पर[6]शुराम[7]ः किममुं वहं विव्याध च शरेणाताडयच्चेति। समुद्रे हि किल चन्द्रश्रियावुत्पन्ने हरिश्च सुष्वाप रामश्च समुद्रपर्यन्तायां भूमौ विप्रेभ्यो दत्तायां स्वावासभूम्यर्थमब्धिं शरेणाताडयादिति प्रसिद्धिः। अयं वहो महाप्रमाणत्वेनाब्धितुल्य इति जनतात्रैवमाशङ्कतेत्यर्थः॥

वर्त्म विव्ययिथ जिज्यि[2]थ सीमां किं नु विव्यचिथ वारिधिरेव।
को भ्रमादिदमुवाद न यस्मिन्विव्यथे च हृदि को न तितीर्षुः॥ ७९॥

७९. भ्रमात्समुद्रभ्रान्तेर्यस्मिन्वहविषय इदं को[8] नोवाद नावदत्[9]। किमित्याह। वर्त्म विव्ययिथातिदीर्घत्वेनाच्छादितवान्रुद्धवानित्यर्थः। तथातिविस्तीर्णत्वात्सीमामियत्प्रमाणोयमिति मर्यादां जिज्यिथ तत्य-

---

१ सी बुभुवे. २ सी °ज्यिव सी°.

---

१ सी डी °ङ्गत्वाच्चाम्र°. २ ए स्युर्दीर्घी°. ३ बी वाछले°. डी वा स्वले°. ४ सी °हे कं श्रि°. ५ ए सी °या बभू°. ६ सी डी, पर्शुरा°. ७ ए °मः किम° सी °मः केम°. ८ सी को नावा°. ९ बी °दत। कि°.

कथाप्रमाण इत्यर्थः । अतो नु[1] इति वितर्के । संभावयेहं[2] त्वं वारिधिरेवं[3] तर्त्कि विव्यचिथ वह्नोहं[5] न तु वारिधिरिति व्याजं किमिति चकर्थ[6] । तथा तितीर्षुस्तरीतुमिच्छुः को हृदि न विव्यथे कथमयं तरिष्यैत[7] इति चित्ते सर्वोपि तितीर्षुः पीडित इत्यर्थः ॥

आदुः । अत्र "अस्यादेर्°" [ ६८ ] इत्यादिना पूर्वस्यात् ॥

आनृधुः । आनशिरे । आनशुः । अत्र "अनातः°" [ ६९ ] इत्यादिना–आ नश्चान्तः ॥ अनात इति किम् । आञ्छुः । कश्चिदन्नापीच्छति । आनाञ्छ[8] ॥

बभूव[9] । बभूवे । सुष्वाप । इत्यत्र "भूस्वपोरदुतौ°" [ ७० ] इत्यदुतौ ॥ केचित्तु कर्तर्येव भुवोकारमिच्छन्ति न भावकर्मणोः । तेन[10] बुभूवे श्रिया ॥

जिज्यिथ । विव्ययिथ । विव्याध । विव्यचिथ । विव्यथे । अत्र "ज्याव्ये°" [ ७१ ] इत्यादिना[11]–इः ॥

किं न्वियाज किमुवाश तरङ्गैर्द्यामुवाच नु च यः स्वमगाधम् ।
ऊयुरभ्रपटली[1] मिहिकास्ता यत्र याः परिववौ पवमानः ॥ ८० ॥

८०. यो वह्नो द्यामाकाशं तरङ्गैः कृत्वा किं न्वियाज । किं न्विति वितर्के । तरङ्गाणामूर्ध्वगामित्वेनोत्क्षिप्यमाणार्घोञ्जलितुल्यत्वात्किमानर्चे । किं किं वा तरङ्गैर्द्यामुवाश तरङ्गाणां द्योभिमुखोच्छलितत्वात्साभिलाषोत्क्षिप्तभ्रूतुल्यत्वाच्चाभिललाष । नु च किं वा तर-

---

१ सी °टलीमि°.

---

१ ए नु वि°. २ सी डी °हं वा°. ३ ए बी °वारधि°. ४ सी डी °व च त°. ५ सी °मि च°. ६ सी डी °थमियं. ७ ई °ष्यते चि°. ८ बी सी डी आनश्चा°. ९ सी डी °भूवे । शुष्वा°. १० ए न बुभू°. ११ बी सी °ना—इ ॥.

र्न्नैद्यां[1] स्वमात्मानमगाधमतलस्पर्शमुवाच । तरङ्गाणां द्योसमीपगतत्वात्सशब्दत्वाच्च तैर्घोरभ्रे स्वमगाधं किमुवाचेत्यर्थः । तथा यत्र वहे ता मिहिका[2] नीहारा अभ्रपटलीं धूमरीमूयुः संतेनुर्यां[3] मिहिकाः पवमानो वायुः परिववौ मेलितवान् ॥

न ह्युवाय ववतुर्न नं चोवुः[1] कोपि कावपि च केपि च यद्धि ।
वेधसा तदुपवाय परिज्यायाभ्यदर्शि वसनं नु य उर्व्याः ॥८१॥

८१. यद्वसनं हि स्फुटं न हि नैव कोपि तन्तुवायादिरुवार्ये[4] व्युतवान् कावपि[5] च न ववतुः केपि च न चोवुरुर्व्या भूरमण्याः संबन्धि तद्वसनं नु वस्त्रमिव यो वहो वेधसाभ्यदर्शि ज्ञापितमर्थान्नृणां[6] यद्वोर्व्या अभ्यदर्शि[7] दर्शितं दत्तमित्यर्थः । किं कृत्वा परिज्याय स्वस्य हानिं कृत्वा कष्टं कृत्वेत्यर्थः । तयोपवार्य व्युत्य[8] ॥

इयाज । उवाय । उवाश । उवाच । इत्यत्र "यजादि°" [७२] इत्यादिना पूर्वस्य सस्वरान्तस्था य्वृत्[9] ॥

ऊयुः । अत्र "न वयोय्" [७३] इति वयेर्यो[10] य्वृत्र ॥

परिववौ[11] । इत्यत्र "वेरयः" [७४] इति य्वृत्र ॥ अय इति किम् । उवाय ॥

ववतुः ऊवुः । अत्र "अविति वा[12]" [७५] इति वा य्वृत्र ॥ अय इत्येव । ऊयुः ॥

परिज्याय । उपवाय । इत्यत्र "ज्यश्च यपि" [७६] इतिय्वृत्र ॥

---

१ ए न वोवुः.

---

१ डी °र्यां स्वमा°. २ सी मिहका. ३ ए ई °र्यामहि°. ४ ई °य व्यूत°. ५ बी °पि न. ६ बी °र्थानृणां. ७ ए °दशि द°. ८ ई °य व्यूत्य ॥. ९ सी डी य्वृतः ॥ ऊ°. १० ए वर्यो. ११ सी °वनो । इ°. १२ सी वा य्वृ°.

सर्वतोपि हि सरांसि किमु प्रव्याय[1] किं नु परिवीय नदान्[2]वा ।
किं[3] तु सर्वसरितोपि परिव्याय स्थितो य उदकैः प्रतिभाति ॥८२॥

८२. यो वह उदकैः कृत्वा प्रतिभाति[1] मम मनसि प्रतिभासते । कीदृक् । स्थितः । किं कृत्वा । हि स्फुटं सर्वतोपि सरांसि किमु प्रव्यायात्मनि प्रक्षेपात्संवृत्याच्छाद्य वा किं[2] नु किं वा नदान्वा[3] । वा समुच्चये । वहांश्च परिवीय संवृत्य किं[4] नु किं वा सर्वसरितोपि सर्वनदीश्च परिव्याय संवृत्य । अतिमात्रजलत्वात्कवेरित्याशङ्का ॥

इज्यते जलनिधिं किल संवीय स्थितः कलशभूः स मुधैव ।
उह्यते यदमुनैष न संव्यायेति यत्र नृभिरुच्यत उच्चैः॥ ८३ ॥

८३. यत्र वहविषये नृभिरुच्चै[6]रुच्यते । कथमित्याह । किलेत्यागमे । जल[5]निधिं संवीय पानेन संवृत्य स्थितः स प्रसिद्धः कलशभूरगस्त्यो मुधैवेज्यते । अब्धिः पीतोनेनेत्यचिन्त्यवैभवतयां लोकैर्यदयं पूज्यते तन्निरर्थकमित्यर्थः । यद्यस्माद्धेतोरेष वहः संव्याय पानेन संवृत्यामुना कलशभुवा नोह्यते स्वात्मनि न धार्यते । वहेत्रापीतेब्धिः पीतोप्यपीत इति भावार्थ इति ॥

प्रव्याय[7] । इत्यत्र "व्यः" [ ७७ ] इति य्वृश ॥

संव्याय संवीय । परिव्याय परिवीय । इत्यत्र "संपरेर्वा" [ ७८ ] इति वा य्वृश ॥

इज्यते । उह्यते । उच्यते । अत्र "यजादिवचेः किति" [ ७९ ] इति य्वृत्[8] ॥

---

१ बी सी डी किं तु प°. २ ए °दान्वाः । किं. ३ ई किं नु स°.

---

१ बी °भासि म°. २ बी सी डी किं तु किं. ३ सी °न्वा स°. ४ बी सी डी किं तु किं. ५ ए °निधिसं°. ६ ई °या कै°. ७ बी °व्याज। इ°. ८ सी य्वृत ॥ डी य्वृतः ॥.

सोषुपी[1]त्यहिगणोनुतटं सास्वप्ति नक्रनिचयोपि च यस्य ।
पर्यसुप्यत यमेन नु नासोषुप्यत क्षणमसूषुपदन्यः ॥ ८४ ॥

८४. यस्य वहस्यानुतटं तटसमीपेहिगणः सोषुपीति निरुपद्रवत्वादत्यर्थं शेते । तथा नक्रनिचयोपि च सास्वप्ति । एतयोश्च मृत्युहेतुत्वादुत्प्रेक्ष्यते । यमेन न्वनुतटं पर्यसुप्यत शयितम् । अत एवान्योहिनक्रेभ्य इतरो नरादिर्यस्यानुतटं क्षणं क्षणमात्रमपि नासोषुप्यत मृत्युभयेन नात्यर्थमशेत । तथान्यो नासूषुपन्न च कं चन स्वापयामास ॥

सिन्धुराडसुषुपद्भयजीनो दुर्गमं यमजिनन्द्विडविद्धः ।
आशु विध्यति च विद्विष उग्रोरुव्यचा नु विचिता विचति स्म ॥ ८५ ॥

८५. सिन्धुराडसुषुपत्स्वापमकार्षीत् । कीदृक्सन् । दुर्गमं दुःखेन गम्यं यं वहमजिनन्नत्यजन्नत एव द्विडविद्धो द्विड्भिरविद्धः पराभवेनापीडितोत एव भयजीनो भयरहितः । तथोग्रोरुव्यचा नु यथा प्रचण्डो वृश्चिको विद्विषः पदादिघटनेन स्वशत्रून्कण्टकेनातर्कितमेव विध्यति तथायं विद्विष आश्वतर्कितं विध्यति च तीव्रप्रहारादिना पीडयति च । तथा विचिता । अत्र तृन् । श्वस्तन्यास्ता वा । वञ्चयते वञ्चयिष्यते वा । विचति स्मच्छलितवान् । एतद्दुर्गबलेनायं स्वयं सुखेन तिष्ठति शत्रूंश्च पराभवतीत्यर्थः ॥

असोषुप्यत । सोषुपीति । असूषुपत् । पर्यसुप्यत । इत्यत्र "स्वपेर्यङ्के च" [ ८० ] इति ञ्वृत् ॥ यङ्लुपि नेच्छन्त्यन्ये । सास्वप्ति ॥ यजन्तादपि केचिदिच्छन्ति । असुषुपत् ॥

---

१ सी °पी × × × ति निरु°. २ ए °स्वप्ति न°.

---

१ ए °मेव न्व°. २ ए गम्य यं. ३ ए °भवेना°. ४ बी सी डी °षः पादा°. ५ सी °त्रूनकण्ट°. ६ बी °न् । स्वस्त°.

जीनः । अजिनन् । अविद्धः । विध्यति । इत्यत्र "ज्याव्यधः क्ङिति" [ ८१ ] इति ह्रस्वृत् ।

विचिता । विचति । इत्यत्र "व्यचोनसि" [ ८२ ] इति ह्रस्वृत् ॥ अनसीति किम् । उरुव्यचाः ॥

यद्युशन्ति पवना गरुडो वावश्यतेनुशितमन्यजनेन ।
लङ्घितुं यमगृहीतपयोन्तं संजिघृक्षुमिव सागरलक्ष्मीम् ॥ ८६ ॥

८६. यदीति संभावने । यदि परं पवना वाता अतिवेगत्वाद्यं वह्नं लङ्घितुमुशन्तीच्छन्ति । गरुडो वा वावश्यतेत्यर्थं वाञ्छति । यतोगृहीतपयोन्तमपर्यन्तजलमत एव सागरलक्ष्मीमब्धेरनन्ताम्भोरूपां श्रियं संजिघृक्षुमिव संग्रहीतुमिच्छुमिवाब्धितुल्यमित्यर्थः । अतएवान्यजनेन लङ्घितुमनुशितमवाञ्छितम् ॥

वृक्णमेव परिवृश्चति भृष्टं भृज्जतीह परिपृच्छति पृष्टम् ।
विश्रुतं जगति गौरवमावाव्यक्ति यस्य समुदाहरमाणः ॥ ८७ ॥

८७. यस्य गौरवं महत्त्वं समुदाहरमाणः कथयन्नरो वृक्णमेव च्छिन्नमेव परिवृश्चतिच्छिनत्ति भृष्टमेव पक्वमेव भृज्जति पृष्टमेव परिपृच्छति । यत आवाव्यक्ति वाव्यच्यादित्याशास्यमानः तिकि वाव्यक्तिरेवंनामा कश्चिज्जनमात्रम् । आङा मर्यादार्थेनाव्ययीभावः । जनमात्रस्यापीत्यर्थः । जगति विश्रुतम् । यथा छिन्नादेश्छेदनादि निरर्थकमेवमेतद्गौरवस्य जगत्त्रयेपि प्रसिद्धत्वात्कथनं निरर्थकमेवेत्यर्थः ॥

---

१ सी वृक्णमे°. २ ए भृग्रती°.

---

१ सी डी °नत् । अ°. २ सी डी °द्धः । व्यध्य°. ३ ए °धः जिति. ४ ए °त्र वाचो°. ५ सी °व्यचा ॥. ६ ए वाव°. ७ ई °तजलपर्यन्तम. ८ ई संगृही°. ९ बी °म् ॥ विक्ण°. १० सी °रवम°. ११ सी °नरा वृ°. १२ ई °व प°. १३ सी °र्यांमा°. १४ ई °द्धस्य कथ°.

विव्यधुस्तटमहीरपवेवित्त्यंह्रिपांश्च विविधुर्यत आपः।
वेवयीति[1] नु नभः ककुभो वेवीयते[2] नु य उदूर्मिकराग्रः ॥८८॥

८८. यतो यस्मिन्वहृ आध[यादि ?]त्वात्तस्। आपस्तटमहीर्विव्य-धुरभ्रंशयन्नित्यर्थः। तथा व्यचेर्यङ्लुपि वेविच्यं[1]ादित्याशास्यमानः तिकि वेविक्तिर्नाम कश्चिन्नरोपगतो[2]ह्रिपाणामद्भिरुन्मूल्यमानत्वान्नष्टो वेविक्ति-[3]र्येभ्यस्ते येंह्रिपा वृक्षास्तांश्च[4] विविधुरुन्मूलितवन्तः[5]। अनेनास्य जला-तिपूर्णतोक्ता। अत एव यो वहृ[6] उदुच्छ्रिता ऊर्मय एव कराग्राणि पा[7]ण्यग्राणि शुण्डाग्राणि वा यस्य स तथा सन्नभो वेवयीति[8] नु भृश-माच्छादयतीव तथा ककुभो दिशो वेवीयते[9] नु ॥

सेसिमीषि किमहो परितः सेसिम्यते जलमदेन यथाब्दः।
संस्यमन्निवति दृशा किल वाव्यत्तं नृपः प्रववृतेथ नियन्तुम् ॥८९॥

८९. अथ नृपो भीमस्तं वहं नियन्तुं सेतुना[10] बन्द्धुं प्रववृते प्रारेभे। कीदृ[11]क्सन्। अहो वहृ जलमदेन जलबाहुल्यदर्पेण यथाब्दो मेघः सेसिम्यतेत्यर्थं गर्जति तथा त्वं किमिति जलमदेन सेसिमीषि। अत्यर्थं शब्दायसे। एतेन त्वज्जलमदोपनेष्यत इत्युक्तम्। इत्येवं प्रकारेण दृशा संस्यमन्नु। यात्राविघ्नोयमिति कोपाद्भ्रुकुट्या साटोपं विलोकनाद्बावघ्नमान इव तथा दृशा तं किल वाव्यन्। किलेवार्थे। कोपाल्ललाटारोपितदृष्टित्वेन वहस्याखिलस्याप्याक्रामकत्वाद्दृशा वहमत्यर्थं संवृण्वन्निव लघूकुर्वन्निवेत्यर्थः ॥

---

१ सी °ति तु न°. २ सी °ते तु य.

---

१ सी °च्यात्या°. २ ए °गतोह्रि°. ३ सी डी °क्तिएभ्य°. ४ बी विव्यधु°. ५ ए बी सी डी °वन्तोने°. ६ बी उदच्छ्रि°. ७ बी पाण्याग्रा°. ८ ई °ति भृ° सी °ति तु भृ°. ९ सी °ते तु ॥. १० ए सेतुबद्धुप्र°. ११ ई °दृक्। अ°.

अनुशितम् । उशन्ति । इत्यत्र "वशेरयङि" [ ८३ ] इति य्वृत् ॥ अयङीति किम् । वावश्यते ॥

गृहीत । संजिघृक्षुम्[1] । वृक्णम् । परिवृश्चति । भृष्टम् । भृज्जति[2] । पृष्टम् । परिपृच्छति । इत्यत्र "ग्रह°" [ ८४ ] इत्यादिना य्वृत् ॥ व्यचिवश्चिभ्रस्जिभ्र-[3]स्जिप्रच्छीनां पञ्चानां यङ्लुबन्तानां नेच्छन्त्यन्ये । आवाव्यक्ति ॥ अन्ये तु[4] यङ्लुप्यपि मन्यन्ते । अपंवेविक्ति[5] ॥ अपरे तु विचतिवृश्चतिभृज्जतिपृच्छतीनां नित्यं य्वृत् । ज्यादीनां त्वनित्यमिति मन्यन्ते । तेन विव्यधुः ॥ अन्ये तु विविधुरित्येवाहुः ॥

वेवीयते[6] । वेवयीति । सेसिम्यते । सेसिमीषि । इत्यत्र[7] "व्येस्यमो[8] यङि" [ ८५ ] इति य्वृत् ॥ यङ्लुपि नेच्छन्त्येके । वाव्यत् । संस्यमत् ॥

आजुहावयिषति स्म च स क्ष्माचेक्यितोथ चतुरः प्रतिहारः ।
आजुहाव निरजूहवदाजिह्वायकीयिषत आशु चमूपान् ॥ ९० ॥

९०. क्ष्माचेक्यितः[9] क्ष्मया पृथ्वीस्थलोकेनात्यर्थं पूजितः स भीमश्चमूपान्नृपानाजुहावयिषाति[10] स्म चाकारयितुमियेष च । यत आजिह्वायकीयिषत[11] आह्वायकेच्छामिच्छतः । प्रागेवाह्वानमिच्छत इत्यर्थः । अथ चमूपाकारणेच्छानन्तरं चतुरो नृपाभिप्रायज्ञः प्रतिहार आशु शीघ्रं चमूपानाजुहाव स्वयमाकारितवान्[12] । निरजूहवदन्यैराह्वायितवान् ॥

चेक्यितः । अत्र "चायः कीः" [ ८६ ] इति कीः ॥

---

१ ए बी डी °ह्वायिकी°.

---

१ सी °क्षु । वृ°. २ ए भृषति. ३ डी °भ्रश्चिभ्र°. ४ सी तु जङ्लु°. ५ ए °पचेवि°. ६ सी वेव°. ७ ए °त्र वेस्य°. डी त्र वेस्यमोर्यङि. ८ ई °मोर्यङि. ९ बी °चेक्यतः. १० ई °पाना°. ११ बी °ह्वायिकी°. १२ सी °न् ॥ चे°.

आजुहाव । इत्यत्र "ह्वित्वे ह्वः" [ ८७ ] इति ग्वृत् ॥ अनेनैव सिद्ध उत्तर-सूत्रकरणं णेरन्यस्मिन्ह्वित्वनिमित्तप्रत्ययव्यवधायके ग्वृन्मा भूदित्येवमर्थम् । तेनेह न भवति । आह्वायकमिच्छति आह्वायकीयति ततः सनि आजिह्वायकीयिषतः ॥

निरजूहवत् । आजुहावयिषति । इत्यत्र "णौ ङसनि" [ ८८ ] इति ग्वृत् ॥

तेष्वशूशवदसौ क्षितिपाज्ञां सेतवे भृशमशिश्वयदोजः ।
ते शुशावयिषवश्च जयं शिश्वाययिष्वनुचराः स्म यतन्ते ॥ ९१ ॥

९१. असौ प्रतिहारस्तेषु चमूपेषु विषये क्षितिपाज्ञां[1] वहबन्धविषयं भीमादेशमशूशवदगमयत् । ज्ञापितवानित्यर्थः । तथासौ सेतवे सेतुबन्धार्थं तेषु विषय ओज उत्साहमशिश्वयदवर्धयत् । ते च चमूपाः सेतवे यतन्ते स्म च । चो यौगपद्ये । यदैव प्रतिहारः क्षितिपाज्ञामशूशवत्तदैवोद्येमुरित्यर्थः । यतः किंभूताः । जयं राज्ञो विजयं शुशावयिषवो विवर्धयिषवस्तथा जयं शिश्वाययिषवो[3] विवर्धयिषवोऽनुचराः[4] सेवका येषां ते । सापेक्षत्वेप्यत्र गमकत्वात्समासः ॥

अशूशवत् अशिश्वयत् । शुशावयिषवः[5] शिश्वाययिषु[6] । इत्यत्र "श्वेर्वा" [ ८९ ] इति[7] वा ग्वृत् ॥

कथं[8] कथं[9] यतन्ते[10] तत्राह ।

शिश्वियुः सपदि केपि दृषद्यस्तत्र केपि शुशुवुश्च तरुभ्यः ।
शोशवीति हनुमान्स यथा किं शेश्वयीषि[2] न तथेति वदन्तः ॥ ९२ ॥

१ ए डी सी °श्रावयि°. २ डी शेश्वियी°.

१ ए °तिप्राज्ञां. २ सी डी °श्रावयि°. ३ डी °वोनु°. ४ ई °नुचाराः. ५ ए °वः शिश्वावयिषवः शि°. ६ ए सी डी °श्रावयि°. ७ ई °तिग्वृ°. ८ ई °थं य°. ९ ए यत्रन्ते. १० बी °न्तेत्रा°.

९२. तत्र तेषु चमूपेषु मध्ये केपि चमूपाः सपदि दृषन्दः । "गम्यस्याप्ये" [ २.२.६२. ] इति चतुर्थी । शिला आहर्तुं शिश्वियु- र्जग्मुः । केपि च तरुभ्यो वृक्षानाहर्तुं शुशुवुः । किंभूताः सन्तः । यथा हनुमान् शोशवीति स्म रामेणाब्धिसेतुबन्धे दृषदाद्याहरणा- येतस्ततो भ्रमणात्कुटिलं गतस्तथा त्वं किं न शेश्वयीषीत्यन्योन्यो- त्साहनाय वदन्तः ॥

शुशुवुः शिश्वियुः । शोशवीति शेश्वयीषि । इत्यत्र "वा परोक्षायङि" [ ९० ] इति वा य्वृत् ॥

पिप्यिरे प्रतिरवा गगनान्तः पेप्यिताचलदरीषु च पीनाः ।
पीनवत्परशुपाणिनिकृत्तोत्प्यानपादपपरापतनोत्थाः ॥ ९३ ॥

९३. प्रतिरवाः प्रतिशब्दा गगनान्तः पिप्यिरे वृद्धिं गतास्तथा पेप्यिता अतिवृद्धा या अचलदर्योद्रिगुहास्तासु च पीना बहूभूताः । किं- भूताः । पीनवन्तः स्थूलाः परशवः पाणावेषां तैर्निकृत्तानां छिन्नानामुत्प्या- नानामतिस्थूलानां पादपानां यत्परापतनं परावृत्त्या निपतनं तस्मादु- त्तिष्ठन्ति ये ते तथा ॥

पिप्यिरे । अत्र "प्यायः पीः" [ ९१ ] इति पीः ॥ दीर्घनिर्देशो यङ्लुबर्थः । पेप्यित ॥

पीनाः । पीनवत् । इत्यत्र "स्फायोद्°" [९२] इत्यादिना पीः ॥ अनुपसर्गस्येति किम् । उत्प्यान ॥

---

१ सी °कृत्योत्पान°.

---

१ बी °मूपा स°. २ डी शेश्वियी°. ३ डी शेश्वियी°. ४ ई °न्तः पेप्यि°. ५ डी ई बहुभू°. ६ बी °प्यितः ॥. ७ सी पीना ।. डी पीन ।.

स्फीतवत्तुमुलधावदनापीनान्धुसैनिकसमूहमुदीक्ष्य ।
स्फीतभीतिरटदाटविकापीनोध्निकागण उदत्रसदारात् ॥ ९४ ॥

९४. अटन्त्यो भ्राम्यन्त्य आटविक्योरण्यचारिण्यो या आपीनोध्निका अज्ञाता आपीनोध्यश्चमर्यस्तासां गण आरादन्तिकादुदत्रसदनश्यत् । यतः कीदृक् । स्फीतभीतिः प्रवृद्धभयः । किं कृत्वोदीक्ष्य । कम् । स्फीतवान्संततस्तुमुलो व्याकुलरवो यस्य स तथा धावञ्जवेन गच्छंस्तथानापीनोप्रवृद्धोन्धुर्व्रणं यस्य स तथा निर्व्रण इत्यर्थः । यः सैनिकसमूहस्तम् । आटविकेत्यत्र "चरति" [ ६.४.११ ] इतीकण् ॥

स्फातटङ्ककुलिशैः प्रसमाद्यस्तीतपङ्कमिव चिच्छिदुरद्रीन् ।
स्फातवङ्गुजभृतः प्रसमाद्यस्तीतवद्दृषद उद्धिरें च ॥ ९५ ॥

९५. स्फातवङ्गुजभृतः पीवरबाहुधारिणो बलिष्ठभटाः स्फाताः स्थूला ये टङ्काः पाषाणदारकास्त एव कुलिशानि तैः कृत्वाद्रींश्चिच्छिदुः । प्रसमाद्यस्तीतपङ्कमिव प्रसमाद्यस्तीतः प्रसंस्तीतः कठिनीभूतो यः पङ्कस्तं यथा केचिच्छिन्दन्ति तथानायासेन चिच्छिदुरित्यर्थः । तथा प्रसमाद्यस्तीतवद्दृषदोतिकठोरशिला उद्धिरे चोत्पाटितवन्तश्च ॥

अनापीनान्धु । आपीनोध्निका । इत्यत्र "आङोन्धूधसोः" [ ९३ ] इति पीः ॥

स्फीत । स्फीतवत् । स्फीत । स्फातवत् । इत्यत्र "स्फायः स्फी वा (स्फीर्वा?)" [ ९४ ] इति वा स्फीः ॥

---

१ प् °दीक्ष । स्फी°.

---

१ बी आमन्त्य. २ प् °म्यन्त आ°. ३ सी °टकिक्यो°. ४ ई °रिण्य आ°. ५ डी °कुलो र°. ६ बी डी ई °रती° सी °रतीकथा ॥ स्फा°. ७ सी °माद्युस्तीतप्र°. ८ बी °च्छिदन्ति. ९ सी °दोभिकवोर°. १० ई पीः ॥ स्पीत । स्फीतवान् । स्फा°. ११ सी स्फीतः । स्फी°. १२ सी स्फातः । स्पात°. १३ ई स्फाय स्फी°.

प्रसंस्तीत। प्रसंस्तीवत्। इत्यत्र "प्रसमः स्त्यः स्तीः" [ ९५ ] इति स्तीः ॥

शीतशीनमकरन्दलवः प्रस्तीमशीनवदुदम्बुतुषारः।
श्यानतां नृषु दिशन्पवनः प्रस्तीतघर्मसलिलानि जहार ॥९६॥

९६. पवनः प्रस्तीतघर्मसलिलानि श्रमोद्भवान्संहतस्वेदबिन्दूञ्जहार। कीदृक्। शीतेन शीतलगुणेन शीता द्रवीभूय कठिनतां गता यद्वा शीताः शीतला अत एव शीना मकरन्दलवाः पुष्परसलेशा यत्र सः। तथा प्रस्तीमाः संहताः शीनवन्तो द्रवीभूताः सन्तः कठिनतां गता उदुत्कटा अम्बुतुषारा वहज्जलसंबन्धि हिमकणा यत्र सः। तथा मृदुत्वान्नृषु श्यानतां गतिमत्तां दिशन्ददत् ॥

प्रस्तीम प्रस्तीत। इत्यत्र "प्रात्तश्च मो वा" [ ९६ ] इति वा मः ॥

शीन शीनवत्। स्पर्शे शीत। इत्यत्र "श्यः शी॰" [ ९७ ] इत्यादिना शीः ॥ द्रवमूर्तिस्पर्श इति किम्। श्यानताम् ॥

प्रातिशीन्यमभिशीनमभिश्यानेन जाड्यमवशीनमथापि।
सेतुबन्धनपरत्वमवश्यानेभ्य ओज इह नाभ्यवशीनम् ॥ ९७ ॥

९७. इह वहे सेतुबन्धनपरत्वं सेतुबन्धतात्पर्यमवश्यानेभ्यः प्राप्तेभ्यो भटेभ्यः सकाशादभिश्यानेनेतस्ततो भ्रमणेन प्रातिशीन्यं रोगित्वमभिशीनमपगतम्। अथानन्तरं जाड्यमपि रोगादिकृतालस्यम-

---

१ ए °हारः॥ प°. २ ए ओह इ°.

---

१ बी °मस्त्यस्ती°. २ सी °ति स्ती॥. ३ ए शीता द्र°. ४ ए अम्बतु°. ५ ई °बन्धहि°. ६ ए शीना शी°. ७ ई °नव°. ८ सी °नवात्. ९ सी °ना शी॥. १० बी °हे शेतु°. ११ बी °त्वं शेतु°. १२ ए °नेनेत°. १३ सी डी °शीतम°.

प्यवशीनं गतम् । इह[1] सेतुबन्धविषय ओज उत्साहस्तु नाभ्यवशी-नम् । व्यायामेन हि रोगजाड्ये प्रायोपयात ओजस्तु वर्धते ॥

श्यानमभ्यवपरं तरुजालं ग्रावजातमभिसंपरशीनम् ।
तद्ध्रदान्तरपथैरभिसंश्यानं पयोर्धशृतदुग्धहविर्वत् ॥ ९८ ॥

९८. तद्ध्रदान्तस्तस्य ह्रदस्य मध्ये तरुजालमभ्यवपरं[2] श्यानमभ्य-वश्यानं[3] पतितं तथा[4] ग्रावजातं शिलौघोभिसंपर[5]शीन[6]म[7]भिसंशीनमत[8] एव पयोम्भोपथैरुन्मार्गैरभिसंश्यानं ह्रदमभ्यस्य तर्वादिभिर्व्याप्तत्वा[9]त्त-ज्जलमितस्ततो गतमित्यर्थः । अर्ध[10]शृतदुग्धहविर्वद्यथार्ध[11]शृते स्वयमर्ध-पक्वे दुग्धहविषी क्षीरघृते अपथैरभिसंश्यायेते उत्फणनेन स्थाल्या[12] बहिर्गच्छतः ॥

प्रा[13]तिशीन्यम् । अत्र "प्रतेः" [ ९८ ] इति शीः ॥

अभिशी[14]नम् अ[15]भिश्याने[16]न । अवशीनम् अवश्यानेभ्यः । अत्र "वाभ्यवा-भ्याम्" [९९] इति वा शीः ॥ केचित्तु समा व्यवधानेपीच्छन्ति । अभिसंशीनम् अभिसंश्यानम् । तदा वा[17]भ्यवाभ्यामिति तृतीया व्याख्येया ॥ समस्ताभ्यामपी-च्छ[18]न्त्यन्ये । अभ्यव[19]शीनम् अभ्यवश्यानम् ॥

शृतदुग्धहविर्वत् । इत्यत्र "श्रः शृतम्°" [ १०० ] इत्यादिना श्रतेति निपात्यम् ॥

---

१ सी °ह शेतु°. २ प °वश्यानं प°. ३ बी °वशानं प°. ४ प °था जाग्रा°. ५ सी डी °परिशी°. ६ डी °शीतम°. ७ प °मत. ८ बी °भिशी°. ९ डी °त्वाज्ज°. १० बी °र्धश्रित°. ११ बी °र्धश्रिते. १२ डी स्याल्यां ब°. १३ प °तिसैन्य°. १४ डी °शीतं अ°. १५ ई अवश्यानेभ्यः. १६ प °नेभ्यः. १७ डी वाभ्या°. १८ सी °च्छन्तोन्ये. १९ डी °वश्या°.

यज्ञकृद्भिरशृतश्रपिते संवीय दुग्धहविषी इव वह्नौ ।
संजिहीर्षुरिपुचक्रजिघांसोतैर्न्यधायि वह आर्द्रमनार्द्रम् ॥ ९९ ॥

९९. आतः[1] आयतो वा दुग्धहविषी स्वयमेव ते[2] यज्ञकृद्भिः[3] प्रायुज्येतां शृते एवं अपिते[4] न[5] शृते अशृते[6] ते च ते अपिते चाशृतश्रपिते अपक्वपक्वे दुग्धहविषी संवीय संवृत्य संमिश्र्येत्यर्थः[7]। यथा[8] यज्ञकृद्भिः सर्वस्वारयागादौ वह्नौ निधीयेते[9] तथा[10] संजिहीर्षु विनाशयितुमिच्छु यद्रिपुचक्रं तस्य जिघांसा हन्तुमिच्छा तयोतैः संबद्धैर्भी[11]मभटैरार्द्रं वृक्षाद्यनार्द्रं च काष्ठशिलादि संवीय वह्ने न्यधायि सेतुबन्धाय निक्षिप्तम् ॥

तत्र कैश्चिदजिगांस्यत[2] पाथः क्रान्त्व ऋक्षपतिफालतितांसैः[3] ।
बन्धकर्म[4] वितितंसदनीकं क्रन्त्व ऋद्धभुजविक्रमकान्तैः ॥ १०० ॥

१००. कैश्चिन्महाभटैस्तत्र वह्नेजिगांस्यत गन्तुमिष्टम्। किं कृत्वा। पाथो वह्नाम्भः क्रान्त्वा। यतः किंभूतैः[12]। ऋक्षपतेरिव जाम्बवत[13]स्येव[14] फालस्योत्प्लुतेस्तितांसा[15] विस्तारयितुमिच्छा येषां तैर्यथा जाम्बवो[16]ऽब्धिमुत्प्लुत्योल्लङ्घे तथा वह्नेमुत्प्लवितुमिच्छुभिरित्यर्थः[17]। तथा बन्धकर्म सेतुबन्धकर्म[18] सेतुबन्धक्रियां वितितंसाश्चिकीर्षदनीकं[19] सैन्यं क्रन्त्वो-

१ प °रसृत°. २ प °जिघास्य°. ३ बी °तिस्फाल°. ४ डी °तिसंस°.

१ प सी आतश्रा°. २ प ते जज्ञ°. ३ ई °द्भिः प्रयु°. ४ सी °ते अते ते. ५ ई °न सृते असृतेच. ६ प अस ते. ७ प सी °मिश्रेत्य°. ८ सी यज्ञ°. ९ प बी °धीय ते. १० सी °था सजि°. ११ सी °बद्ध भीम°. १२ बी °तैः। ऋक्ष°. १३ डी जाम्बुवतस्ये°. १४ सी °वतस्ये°. १५ बी °स्तितस्तांसा. सी °स्तितासा. १६ सी जाम्बूवतोब्धि° डी जाम्बुवतोब्धि°. १७ बी सी डी °मुत्प्लुवि°. १८ बी सी डी °न्धक्रि°. १९ बी °कीर्षुद°.

श्लघ्य यत ऋद्धः[1] स्फीतो यो भुजविक्रमस्तेन कान्तै रम्यैः । अतिशूरत्वेन सैन्यात्पूर्वमेव योद्धुं कैश्चिद्वह उत्प्लवितुमिष्ट इत्यर्थः ॥

किं प्रशानसि भुजौ तव शंशान्तो वदत्यवनिवृत्रहणीत्थम् ।
सेतुकष्टमपि शामति सामप्रश्नपृष्टजनतासु किल स्म ॥ १०१ ॥

१०१. सामप्रश्नपृष्टजनतासु साम्ना मधुरालापेन यः प्रश्नः[2] पृच्छा तेन पृष्टा या जनता लोकौघास्तासु विषये किलेति सत्ये सेतुकष्टमपि सेतोर्बन्धजनितं दुःखमपि शामति स्म शमिव सुखमिवाचरति स्म । क सत्यवनिवृत्रहणि पृथ्वीन्द्रे भीमे । किंभूते । वदति । कथमित्याह । अहो[3] भट किं प्रशानसि सेतुबन्धादुपशाम्यन्भवसि । तथा तव भुजौ किं शंशान्तो भृशमुपशाम्यत इत्थम् ॥

स्योमभिः स वह आहितसेतुस्यूत उत्पथविडम्बुभरष्ठ्यूः ।
हुं सुवो मम गिरीनिति[1] सेष्योति स्म मोमकृ[2]तमूर्तिनिमित्तात् ॥ १०२ ॥

१०२. स वहो मोमभिर्मवद्भिर्बन्धकैर्नरैः कृता या मूर्तिर्बन्धैः[4] सा चासौ निमित्तं च तस्माद्गिरीन्[5]समीपस्थानद्रीन्सेष्योति स्मात्यर्थं बबन्ध सर्वतोप्लावयदित्यर्थः । कीदृक्सन् । सीव्यन्ति स्योमानो बन्धकनरास्तैः स्योमभिराहितः कृतो यः सेतुस्तैर्न[6] स्यूतो बद्धोत एवोत्पथानुन्मार्गोन्विच्छति गच्छति योम्बुभरस्तं ष्ठीवति निरस्यति यः सः । उत्प्रेक्षते[7] । न गिरीन्मोमकृतमूर्तिनिमित्तात्[8]सेष्योति स्म किं तर्हि हुं सुवो ममेति । इतिर्भिन्नक्रमे । इव उत्प्रेक्षाद्योतको[9] ज्ञेयः । हुमिति कोपे ।

१ बी सी °रीनति. २ सी °कृतिमू°.

१ ई ऋद्ध स्फी°. २ प °श्नः प्रच्छा°. ३ डी किं शश°. ४ बी °न्धः स चा°. ५ बी °द्रीनसेष्यो°. ६ प बी °न स्फूतो. ७ बी ई °त्प्रेक्ष्यते. ८ बी °त्तात्सैष्यो°. ९ बी सी °त्प्रेक्ष्याद्यो°.

मम भुवो बन्धका एत इति हेतोरिव । गिरिपाषाणैर्हि वहो बद्धस्ततस्तज्जलमुत्पथैः प्रसरद्भिरीन्प्लावितवदित्येवमाशङ्का ॥

ओमतूर्मेभिरजूर्मेभिरासेषेषि किं नृभिरनूः कृतभूते ।

श्रोमवारिणि सुजूः परितूः श्रूर्नक्रचक्र इति नूनमराटीत् ॥१०३॥

१०३. नक्रचक्रो नूनमित्येवंप्रकारेणाराटीत् । तमेवाह । कृता भुवः पृथ्व्या ऊतिरवनं येन तस्य संबोधनं हे कृतभूते भीम अजूर्मेभिरज्वरद्भिर्नीरोगैस्तथा । अवन्तीत्योमानस्त्वद्रक्षकास्त्वत्सेवका इत्यर्थः । त्वरन्ते तूर्माणो वहबन्धार्थं त्वरावन्त ओमानो ये तूर्माणस्तैर्नृभिर्भटैः सहितस्त्वमनूर्मेमारक्षकः सन्किं किमित्यासेषेष्यत्यर्थं बध्नास्यर्थान्मदाश्रयं वहमिति । कीदृक्सन् । श्रोमोत्पथगत्या स्तोकीभूतत्वाच्छुष्यद्यद्वारि तत्राधारे श्रूः स्तोकाम्बुत्वेन शुष्यन्नत एव सुजूः सुष्ठु पीडावान् । अत एव च परितः समन्तात्त्वरते संभ्रमेणेतस्ततो गच्छति यः स परितूः । नक्रचक्रो हि शुष्यज्जले संतप्यमानत्वादारटन्काविनैवमुत्प्रेक्षितः ॥

श्रूतितूर्तिकृतजूर्तिरमूर्भिर्मोर्मम्र्तिरिव तोर्मचमूपैः ।

प्रागतूः स वह उज्झति फेनं तूर्ण उग्रविधिपाकनियोगात् ॥१०४॥

१०४. मोर्मा मूर्छावती मूर्तिरङ्गं यस्य स इव वहः फेनमुज्झति स्म । मूर्छावान् हि मुखेन फेनमुज्झति । कीदृक्सन् । प्राक्पूर्वमविद्यमानास्तुरस्तूर्वन्तः सेतुबन्धेन पीडका यस्य सोन्तरब्धितुल्यत्वेन

---

१ बी °रनू कृ°. २ ए °रितस्तूनक्र°.

---

१ सी डी °स्तज्ज°. २ सी °रत°. ३ ए °न्तीतमा°. ४ ए °न्तास्त्वर°. ५ ए °मेणत°.

केनाप्यबद्धपूर्वं इत्यर्थः। तथाप्युग्रोननुकूलत्वेन रौद्रो यो विधिपाको दैवपरिणामस्तस्य नियोगादवेश्यंभावाद्धेतोरमूर्भिरमूर्च्छेद्भिः सोढमैरित्यर्थः। तोर्मचमूपैस्तोर्माणस्तूर्वन्तः सेतुबन्धेन पीडका ये चमूपास्तैस्तूर्णः सेतुबन्धेन पीडितोत एव श्रूतौ जलशोषे या तूर्तिः सैन्यपौनां त्वरणं तया कर्त्र्या कृता जूर्तिर्ज्वरः पीडा यस्य सः॥

**सोद्रवक्रमुरुकूजमसंकोचं च मद्रुभिरनाशि तदोघात्।**
**न्यङ्कुवञ्चमभिवञ्चति सैन्ये मेघवृष्टिवदटव्यनुयोजैः॥ १०५॥**

१०५. मर्द्रुभिर्जलवायसैस्तदोघाद्धदप्रवाहादनाशि भयेन पलायितम्। कथम। सहोद्रवक्राभ्यामार्जवकौटिल्याभ्यां वर्तते यत्तत्सोद्रवक्रं तथोरुर्महान्कूजोव्यक्तशब्दो यत्र तदुरुकूजं तथासन्संकोचोङ्गावयवानां मीलनं यत्र तच यथा स्यादेवम्। क सति। सैन्ये। किंभूते। न्यङ्कुर्मृगभेदस्तस्येव वञ्चो गमनं यत्र तद्यथा स्यादेवं द्रुतमित्यर्थः। अभिवञ्चति गच्छति। यथा मेघस्य वृष्टिर्यतः सा मेघवृष्टिः कारीरीष्टिस्तस्यां सत्यामटव्यामनुयाजा आहुतिविशेषा अटव्यनुयाजास्तैर्नश्यते। वृष्टिकामैर्हि कारीरीष्टिररण्ये क्रियते तस्यां चानुयाजाख्याश्च आहुतिविशेषा न दीयन्त इति श्रुतिः॥

अश्नूते दुग्धहविषी यशकृद्भिः। अत्र "श्रपेः०" [१०१] इत्यादिना श्रभावो निपात्यः॥ अन्ये तु श्रपिं चुरादौ पठन्ति। तस्यैव श्रपेर्निपातनम्। प्रयोजकण्यन्तस्य त्वेकस्यापि प्रयोगं नेच्छन्ति। तन्मते श्रपिते दुग्धहविषी यशकृद्भिरित्येव स्यात्॥

१ बी °मुरकू°. २ बी °नुजाजैः.

१ डी °था तुर्णोन°. २ ई °वस्यंभा°. ३ सी °मूत्तिर°. ४ ए तूर्ति सै°. ५ डी °पानानां. ६ डी °द्रुभिर्ज°. ई °द्रुद्भिर्ज°. ७ सी डी °तन्नतम्।. ८ डी °स्तस्यैव. ९ सी डी °नं तत्र. १० ई °ष्टिः करी°. ११ ई °कामं हि का°. १२ ए °दीन्त. १३ सी अश्रूते. १४ सी °ना श्रभा°. १५ ए °वसपे°. १६ ए °कस्य ण्य°.

संवीय । इत्यत्र "य्वृत्सकृत्" [ १०२ ] इति य्वृदेकवारमेव ॥ "दीर्घम्°" [ १०३ ] इत्यादिना[1] च दीर्घः ॥ अव इति किम् । ऊतैः ॥

संजिहीर्षु । जिघांसा । अजिगांसत । इत्यत्र "स्वरहन्°" [ १०४ ] इत्यादिना दीर्घः ॥

तितांसैः[2] विततंसत् । इत्यत्र "तनो वा" [ १०५ ] इति वा दीर्घः ॥

क्रान्त्वा क्रन्त्वा । इत्यत्र "क्रमः क्त्वि वा" [ १०६ ] इति वा दीर्घः[3] ॥

क्विपि । प्रशान्[4] ॥ क्विति । कान्तैः ॥ क्विति । शंशान्तः । अत्र "अहन्°" [ १०७ ] इत्यादिना दीर्घः[5] ॥ अहन्निति किम् । वृत्रहणि ॥ कश्चित्[6] त्वाचारक्वावपि दीर्घत्वमिच्छति । शमिवाचरति शामति ॥

प्रश्न । क्वि । उत्पथविद् ॥ धुट् । पृष्ट । स्योममिः ॥ क्वि । अम्बुभरच्छूः ॥ धुट् । स्यूतः । अत्र "अनुनासिके च°" [ १०८ ] इत्यादिना च्वोः शूटौ ॥ सिवेर्यङ्लुपि तु सेष्योति ॥ अन्ये त्वासेषेषीसेवेच्छन्ति[7] । तन्मतसंग्रहार्थं क्विती-त्यनुवर्तनीयं यजादिसूत्रे च च्छग्रहणं कार्यम् ॥

मव् । मोर्म[8] । मुवः । मूति[9] ॥ अव् । ओम[10] । अनूः । ऊते ॥ श्रिव् । श्रोम ॥ श्रूः । श्रूति ॥ ज्वर । अजूर्मभिः । सुजूः[11] । जूर्तिः[12] ॥ त्वर् । अतूर्मभिः (तूर्मभिः ?) परितूः । तूर्ति[13] । अत्र "मव्यवि°" [ १०९ ] इत्यादिना[14] नोट् ॥

मुर्छा । मोर्म । अमूर्मिः । मूर्तिः[15] ॥ तुर्वै । तोर्म[16] । अतूः । तूर्णः । अत्र "रा-ल्लुक्" [ ११० ] इति छ्वोर्लुक्[17][18] ॥

---

१ बी °ना दी°. २ सी तिता सैः. ३ प इ °र्घः ॥ प्र°. ४ प सी °शात । अ°. डी °शान्तैः । अ°. ५ सी °र्घः ॥ ×× त्व°. ६ प °श्चिचाचा°. ७ सी °सेषषी°. ८ सी डी °मम् । मु°. ९ डी मूतिः ॥. १० बी डी ओम् । अ°. ११ सी डी सुजूं । जू°. १२ बी डी जूर्ति ॥. १३ इ तूर्तिः ॥ अ°. १४ प सी °दिनो°. १५ बी मूर्ति ॥ तु°. १६. डी तोमम् । अतुः । तू°. १७ प छ्लुक्. १८ डी °क् ॥ नि°.

पाकनियोगात् । इत्यत्र "केनिटे" [ १११ ] इत्यादिना चजोः कगौ ॥

केनिट इति किव् । आसंकोचम् । कुजम् ॥

न्यङ्कु । वक्र । उग्र । मद्गुभिः । मेघ । ओघात् । इत्येते "न्यङ्कु°" [ ११२ ] इत्यादिना निपात्यौ ॥

वञ्चमभिवञ्चति । इत्यत्र "न वञ्चेर्गतौ" [ ११३ ] इति न कत्वम् ॥

अनुयाजैः । अत्र "यजेर्यज्ञाङ्गे" [ ११४ ] इति न गत्वम् ॥

राडहर्षयद्वश्यविरेच्यावश्यभञ्ज्यवहकर्मनियोज्यान् ।

सत्प्रयोज्यनवभोज्यगणेनात्याज्ययाज्यसुभटानुपरिस्थः ॥१०६॥

१०६. राज्ञीम उपरिस्थ उपरि वर्तमानः समत्याज्याः सर्वभृत्यगुणोपेतत्वेनाहेयाः संगर्ताहा इत्यर्थः । याज्याश्च सत्कार्या ये सुभटास्तानहर्षयत् । केन कृत्वा । सन् शोभनोत एव प्रयोज्यो व्यापारयितुं शक्यो नवो यो भोज्यगणः खण्डखाद्यादिभक्ष्यौघस्तेन । किंभूतान् । अवश्यविरेच्योवश्योद्रेचनीयोवश्यभञ्ज्यश्च सेतुबन्धेनावश्यं द्विधा कार्यो यो वहस्तस्य कर्म बन्धनक्रिया तत्र नियोज्यान्व्यापारयितुं शक्यान् ॥

न प्रवाच्यगतवाक्यवदापद्वाच्यतां भुजबलेन वहं सः ।

न्युब्जजिह्मियमयन्मिति से न्यग्रोधवीरुदवरोधचमूकः ॥ १०७ ॥

१०७. स भीम इत्युक्तप्रकारेण भुजबलेन वहं नियमयन्मियचय-

१ ए सः । न्युब्ज°. २ सी स निग्रो°.

१ बी °निट् इ°. २ सी °ति किः अ°. ३ सी मेघः । ओ°. ४ बी °त्वाः ॥ पञ्च°. ५ ए °ञ्चेगतौ. ६ सी न त्व°. ७ सी °नादेयाः. ८ ई °ताहा इ°. ९ सी °टाकान°. १० सी डी सत् शो°. ११ सी नको भो°. १२ डी °वो भो°. १३ ई °गण ख°. १४ ए ई °भक्षौघ°. १५ ई °वदयं भ°.

न्सन् वाच्यतां भीमेन परिपूर्णो[1] वहो बन्द्धुं न शकित इति लोकापवादं नापत्परिपूर्णं[2] बबन्धेत्यर्थः । यतः कीदृक् । वहबन्धे स्वयमुद्यतत्वेन न्युब्जं रोगविशेषं जितवान् न्युब्जजित्तथा[3] न्यग्रोधा वटा वीरुधो लता द्वन्द्वे सह ताभिर्या सा तथावरोधा सेतुबन्धाय वहमध्ये- वरोहन्ती चमूर्यस्यै सः प्रवाच्यगतवाक्यवत्प्रवाच्यः पाठविशेषस्त- द्योगाद्ग्रन्थोपि प्रवाच्यस्तद्गतं वाक्यं विशिष्टपदसमुदायो यथा वाच्यता- मत्रेदं पदं लक्षणादिदोषदुष्टमिति लोकापवादमार्षत्वान्न प्राप्नोति ॥

अवश्यविरेच्य । अवश्यभं[6]ज्य । इत्यत्र "ण्यण्यावश्यके" [ ११५ ] इति न कगौ ॥

नियोज्यान् । प्रयोज्य । इत्यत्र "निप्राद्°" [ ११६ ] इत्यादिना न गः ॥

भोज्य । इत्यत्र "भुंजो[7] भक्ष्ये[8]" [ ११७ ] इति न गः ॥

त्याज्य[9] । याज्य । प्रवाच्य । इत्यत्र[10] "यज्यज°" [ ११८ ] इत्यादिना न कगौ ॥

वाच्यताम् । इत्यत्र[11] "वचोशब्दनाम्नि" [ ११९ ] इति न कः ॥ अशब्द- नाम्नीति किम् । वाक्य ॥

भुज । न्युब्ज । इत्येतौ "भुज°" [ १२० ] इत्यादिना निपात्यौ ॥

वीरुत्[12] । न्यग्रोध । इत्येतौ "वीरुत्[13]°" [ १२१ ] इत्यादिना निपात्यौ ॥ अवरोध । इत्यप्यन्ये ॥

त्रयोदश[14]: पादः समाप्तः ॥

---

१ डी °र्णो विहो. २ सी °पूर्णि ब°. ३ सी °था निग्रो°. ४ सी डी °स्य सप्र°. ५ डी °मापन्न. ६ ए °भज । इ° ७ सी भुज्यो भ°. ८ ए भक्ष इ°. ९ डी त्याज्यः । प्र°. सी त्याज्यः । या°. १० ए °त्र ज्य°. ११ बी °त्रवचो°. १२ सी °त् । निग्रो°. १३ ए बी °रुत्या°. १४ सी दशपादस°.

म्लाय मा किमपि सुम्ल वहं यत्त्वं न विव्ययिथ विव्यय नाहम् ।
स्फारवानिह हि भूपतितेजःस्फाल इत्यजनि बन्धकृतां वाक्
॥ १०८ ॥

१०८. बन्धकृतां सेतुबन्धकारिणां वागजनि । कथमित्याह । हे सुम्लायं वहं बद्धवानहं तु मन्दत्वान्नेति मनःसंतापेन विच्छायमुख किमपि स्तोकमपि मा म्लाय मा विच्छायमुखो भूः । यद्यस्माद्धेतोर्वहं न त्वं विव्ययिथ नाच्छादितवान्न बद्धवानित्यर्थः । अहमपि न विव्यय त्वयेव मयापि वहो न बद्ध इत्यर्थः । तर्हि केन बद्ध इत्याह । इह सेतुबन्धविषये हि स्फुटं भूपतितेजःस्फालो भीमनृपप्रतापसंचयः स्फारवान्स्फुरतीति ॥

सुम्ल । इत्यत्र "आत्संध्यक्षरस्य" [ १ ] इत्यात् ॥ अनैमित्तिकत्वादात्वस्य प्रागेव कृतत्वादाकारान्तलक्षणो डः स्यात् [ ५.१.७६. ] ॥

म्लाय । इत्यत्र "नँ शिति" [ २ ] इति नात् ॥

विव्ययिथ । विव्यय । इत्यत्र "व्यस्थवणवि" [ ३ ] इति नात् ॥ स्फार । स्फालः । अत्र "स्फुर°" [ ४ ] इत्यादिनात् ॥

क्ष्मापगारमिव गिर्यपगोरं सोदिदासुरपि दत्तदिदीषः ।
तैर्बलैरनुपदाय बबन्धे दीनमीनकुलवार्युपदायः ॥ १०९ ॥

१०९. तैर्भीमसंबन्धिभिर्बलैरनुपदाय क्षयमगत्वा सुखेनेत्यर्थः । स वहो बबन्धे बद्धः । कीदृक्सन् । अदिदासुरपि क्षेतु-

१ सी ई व्ययथ°. २ बी °पमार°.

१ सी डी यस्मा°. २ ए °द्धेहोर्वे°. ३ सी डी °वान्वद्ध°. ४ सी °व्ययि त्वयेव स म°. ५ ए °ति ॥ सुम्ल. ६ ई °मित्तक°. ७ ए न शीति इति नात्. ८ बी सी °स्थवण°. ९ ई °त् ॥ स्पार. १० ए स्फारः । स्फा°. ११ बी °त्र स्फर. १२ ए °यगमत्वा.

मनिच्छन्नपि वृत्ता दिदीषा क्षेप्तुमिच्छा यस्य स तथा। किं कृत्वा क्ष्मापगारमिव क्ष्मां मृदमपगूर्येवोद्यम्येव गिर्यपगोरं गिरीनुद्यम्य । अभयत्र "द्वितीयया" [५.४.७८] इति णम् । यथा केनापि मृत्खण्डमुत्पाट्यत एवं वहे प्रक्षेपार्थं गिरीनुत्पाट्येत्यर्थः । अत एव दीनं भयेन कातरं मीनकुलं मत्स्यौघो यत्र स तथा वार्युपदायो जलक्षयो यत्र सः ॥

तैरदीयत वहः परिबद्धो द्राक्प्रमाय च निमाय च वृक्षान् ।
तं प्रमातुमरिमाशु निमातुं दिक्षु कीर्तिमचलश्च चुलुक्यः ॥११०॥

११०. वहोदीयताक्षीयत । कीदृक्सन् । वृक्षान्प्रमाय च हिंसित्वा छित्त्वेत्यर्थः । निमाय च वहे क्षिप्त्वा च द्राक् तैर्बलैः परिबद्धः । तथा चुलुक्यो भीमोचलश्च । किं कर्तुं तमरिं सिन्धुराजं प्रमातुं हिंसितुं दिक्षु कीर्तिं निमातुं च निक्षेप्तुं विस्तारयितुम् ॥

सैन्धवस्य निमयः प्रमयो वास्त्वद्य दुर्निमयदुष्प्रमयस्य ।
इत्यनामयमयाश्वचमूपा मेतुकाममभिमातुमिहोचुः ॥ १११ ॥

१११. आमीनातीत्यामयो रोगो मिन्वन्तीति अचि मया उष्ट्रा अनामयं नीरोगं मयाश्च मया अश्वाश्च येषां ते ये चमूपा नृपास्त इह भीमसमीप ऊचुः । किं कर्तुम् । मेतुकामं जिघांसुं सिन्धुराजमभिमातुं हिंसितुम् । किमूचुरित्याह । दुर्निमयदुष्प्रमयस्य दुःखेन क्षेप्यस्य हिंस्यस्य च सैन्धवस्य सिन्धुराभिजनो निवासोस्य "सिन्ध्वादेरञ्" [६.३.२१६] इत्यञ् । तस्य सिन्धुराजस्याद्य निमायो निरासः प्रमयो वा हिंसा वास्त्विति । सिन्धुराजोद्यास्माभिर्निरस्यो हिंस्यो वेति प्रतिज्ञां चक्रुरित्यर्थः ॥

---

१ ए °मनच्छ°. २ डी °म्येच गि. ३ ए °तिणम । य°. ४ ए सी डी ई °र्युपादायोपल°. ५ सी डी °त्र सः ॥. ६ सी °र्तुं मतरिं. ७ ए प्रमातुं. ८ डी ॥ ममी°. ९ बी °नामीला°. १० ए °या अ°. ११ ए °भिहातुं. १२ ई °यदुःप्रम° १३ ई प्रमेयो°.

क्ष्मापगारं गिर्भपगोरम् । अत्र "वाप°" [ ५ ] इत्यादिना वा-आत् ॥

अदिदासुः दिदीषः । अत्र "दीङः सनि वा" [ ६ ] इत्यादा ॥

अनुपदाय[1] । उपदायः । अत्र "यबक्ङिति" [ ७ ] इत्यात् ॥ यबक्ङितीति[2] किम् । दीन । अदीयत ॥

निमाय[3] । निमातुम् । प्रमाय । प्रमातुम् । अत्र "मिग्मीगोऽखलचलि" [ ८ ] इत्यात् ॥ अखलचलीति किम् । दुर्निमयदुष्प्रमयस्य[4] ॥ अचि । मय । अनामय[5] ॥ अलि । निमयः । प्रमयः[6] । मिग्मीग इति किम्[7] । मीङ्[8] हिंसायामित्यस्य मा भूत् । मेतुकामम् । अस्याप्यात्वमिच्छन्त्यन्ये । अभिमातुम् ॥

**नो विलात ऋजुरद्य विलेता नो युगेष्वपि स सेतुरतर्कि[1] ।**
**बन्धसन्धिरगमन्न विलायात्राविलीय चलिते यदनीके ॥ ११२॥**

११२. ऋजुः सरलः[9] स भीमबद्धः सेतुर्लोकैरतर्कि । कथमित्याह । अद्य वर्तमानकालेयं[10] नो विलाता विश्लेक्ष्यति । युगेष्वपि कृतयुगादिष्वपि नो[11] विलेतेति । यद्यस्माद्धेतोरविलीय मिलित्वा चलितेप्यनीके भीमसैन्ये विलाय विश्लिष्य बन्धसंधिर्बन्धनसंधानमत्र सेतौ नागमन्नात्रुट्यत् । अद्येत्यनेन निकटवर्तिनो माससंवत्सराद्य उपचारादुच्यन्त इति शास्त्रोक्तोद्यतनोत्र नास्तीति विलातेत्यत्र[12] श्वस्तनी न दुष्यति ॥

विलाय अविलीय[13] । विलाता विलेता । इत्यत्र "लीङ्लिनोर्वा"[14] [ ९ ] इति वा-आत् ॥

---

१ डू °तर्कि । व°.

१ ए डू °दायः । उ°. २ डू °ती किम् । अ°. ३ सी °मातु°. ४ डी डू °यदुःप्रम°. ५ डू °य ॥ नि°. ६ ए डू °मय ॥ मि°. ७ डी °म् । मीङ्. ८ बी मीङ् हिं°. डू मीङ्च हिं°. ९ ए °रलस. १०. सी डी मानेका°. ११ ए नो वेले° १२ बी सी °त्र स्वस्त°. १३ डी °विला°. १४ बी लीङ्लनो°.

क्रापयद्द्विषदसून्विशिखैरध्यापयच्च रुदितान्यरिनारीः ।
जापयत्स्वमभिसाधयदर्थं व्याप सेधयदरीशमनीकम् ॥ ११३ ॥

११३. अनीकं भीमसैन्यं व्याप सर्वत्र प्रससार । कीदृक्सत् । विशिखैः कर्तृभिर्द्विषदसून् क्रापयद्ग्राहयदत एवारिनारी रुदितान्यध्यापयच्च रोदयदित्यर्थः[1] । तथा स्वमात्मानं ज्ञातिमात्मीयं वा जापयद्विजयमानं प्रयुञ्जानम् । तथार्थं स्वकार्यं[2] देशस्वीकारादिकमभिसाधयन्निष्पादयत् । तथारीशं सिन्धुराजं सेधयदहं तवोपर्यागच्छामीति ज्ञापयत् ॥

क्रापयत् । जापयत् । अध्यापयत् । इत्यत्र "णौ क्रीजीङः" [ १० ] इत्यात् । अर्थमभिसाधयत् । इत्यत्र "सिध्यतेरज्ञाने" [ ११ ] इत्यात् । अज्ञान इति किम् । अरीशं सेधयत् ॥

स्फारयद्धनुरचापयदुच्चैः स्फोरयद्ध्वनिमचाययदेतत् ।
गाः प्रवापयति यश्च बलाका यः प्रवाययति वा स इवर्तुः ॥११४॥

११४. एतद्भीमानीकं कर्तृ धनुश्चापं स्फारयदाकर्षत्सद्धनुरेवोच्चैरचापयद्व्यस्तारयत्तथोच्चैरुदात्तं ध्वनिं सिंहनादं[3] स्फोरयदुच्छालयत्सद्ध्वनिमचाययद्व्यस्तारयत्[4] । उपमामाह । य ऋतुर्गा धेनूः प्रवापयति गर्भं ग्राहयति य ऋतुर्बलाकाश्च पक्षिणीभेदांश्च प्रवाययति स ऋतुरिव वर्षाकाल इवेत्यर्थः । वर्षासु हि पुरोवाते[5] वाति गावो बलाकाश्च गर्भं गृह्णन्ति । यथा वर्षर्तुर्धनुरिन्द्रचापं[6] ध्वनिं गर्जितं च विस्तारयति तथेत्यर्थः ॥

---

१ प °र्थः । स्वमात्मी°. २ सी कार्यंदे°. ३ सी °दं स्फार°. ४ ई दुत्साल°. ५ प वा तो वा°. ६ बी र्तुधनु°.

अचापयत् अचाययत्। स्फारयत् स्फोरयत्। इत्यत्र "चिस्फुरोर्न वा" [ १२ ] इत्याद्य ॥

गाः प्रवापयति बलाकाः प्रवाययति। इत्यत्र "वियः प्रजने" [ १३ ] इत्याद्य ॥

धन्व रोपयत रोहयतेषुं मा विलीनयत सर्पिरिदानीम्।
मा विलालयत वा नवनीतानीति सैन्धवजनैर्निरघोषि॥ ११५॥

११५. सैन्धवजनैः सिन्धुनिवासिलोकैरितीदं[1] निरघोषि घोषितम्। तदेवाह। हे जना धन्व धनू रोपयत सज्यं कुरुत तथेषुं बाणं रोहयत संधत्तेदानीं सर्पिर्घृतं[2] मा विलीनयताग्निसंपर्केण मा द्रवीकुरुत नवनीतानि वा मा विलालयतेति॥

भो विलापयत सर्पिरशङ्का एष सिन्धुमभिपालयितास्मि।
प्रीणयञ्जनपदानिति धन्वोद्धूनयन्समिति हम्मुक आगात्॥ ११६॥

११६. हम्मुको हम्मुकाख्यः सिन्धुपतिः समिति रण आगात्। कीदृक्सन्। जनपदान्प्रीणयन्। कथमित्याह। भो जना अशङ्का निर्भयाः सन्तः सर्पिर्विलापयत द्रवीकुरुत यत एष प्रत्यक्षोस्म्यहं सिन्धुदेशमभिपालयिता[3] स्वयमेव पायमानं सिन्धुं प्रयुञ्जानः सिन्धुरक्षाशीलोहं वर्त इत्यर्थ इति। तथा धन्वोद्धूनयन् गुणाकर्षणेन कम्पयन्॥

प्राययत्स्वमभिधावयदद्रीन्वाजयद्ध्रुवमपाययदोजः।
छाययैनमभिशाययं[1]वे[2]त्थं जल्पदस्य च बलं प्रससार॥ ११७॥

११७. अस्य हम्मुकस्य बलं प्रससार। कीदृक्सत्। ओजो बल-

---

१ ई °य चेत्थं. २ बी य चेत्थं.

---

१ ई °कैः रि°. २ ए °र्पिघृतं. ३ सी डी पालय°.

मपाययच्छत्रुभिरखादयदशोषयद्वा प्रकाशयदित्यर्थः । अत एव भुवं वाजयद्गाढपादप्रहारैः कम्पयदत एव वाद्रीनभिधावयत्कम्पयत्तथाहो[1] एनं भटं छाययारींश्छिन्दन्तं[3][4][5] प्रयुङ्क्ष्वाभिशपयं[6] वालैररींस्तक्ष्णुवन्तं[7][8][9] प्रयुङ्क्ष्वेति जल्पच्छत्रुवधार्थं स्वभटान्प्रयुञ्जानमित्यर्थः । अत एव स्वमात्मीयं ज्ञातिं वा लोकं प्राययत्प्रीणयत् ॥

ह्वाययत्समवसाययदाशु व्याययत्समभिवाययदस्त्रैः[1] ।
व्लेपयद्भयमनर्पयदन्योन्यं चमूद्वयमरेपयदुच्चैः ॥ ११८ ॥

११८. भयमनर्पयदात्मानं भयमप्रापयन्निर्भीकमित्यर्थः[10] । चमूद्वयमुच्चैरतिशयेनान्योन्यं कर्मारेपयद्गमयामास मिलितमित्यर्थः । कीदृक् । अन्योन्यं ह्वाययत्सस्पर्धमाकारयत्तथान्योन्यं[11] व्लेपयद्वरयत्तथास्त्रैरन्योन्यमाशु व्याययदाच्छादयत्तथान्योन्यमस्त्रैः कर्तृभिः समभिवाययदस्त्राणि[12] सीव्यन्ति प्रयुञ्जानं किं बहुनान्योन्यं समवसाययदन्तं प्रापयत् ॥

क्ष्माप्यते किमु चमूरिति भीमः क्रोपयन्स्वयमह्रेपितवंशः ।
प्रापयन्समिति सिन्धुपतिश्च स्फावयन्निषुगणं प्रडुढौके ॥ ११९ ॥

११९. भीमः स्वयं समिति[12] रणे[13] प्रडुढौके । कीदृक्सन् । अह्रेपितवंशोनेकावदातैरलज्जापितान्वयोत एव क्रोपयन् भट्टमुखेन हम्मुखं[14] जल्पयन्[15][16] । किमित्याह[17] । अहो हम्मुक चमूः किमु[18] किमिति क्ष्माप्यते

---

१ बी सी डी ई °स्त्रैः । व्लेप°.

१ सी डी °ढप्र°. २ बी त्तदाहो. ३ बी यारीच्छिन्द°. ४ डी °रींस्थिन्द°. ५ ए °रिछदन्तं. ६ बी ई °य चास्त्रै°. ७ सी वास्वैररंरीस्त°. ८ ए °स्त्रैररंरीस्त°. ९ डी °स्तक्षणव°. १० डी °यन्नभीक°. ११ बी सी डी ई °न्यं व्लेप°. १२ ए समवि र°. १३ ए बी सी °णे डु°. १४ सी °म्मुखेन हम्मुखं. १५ सी डी °ल्पन्. १६ सी °न् । कथमि°. १७ डी ई °ह । हो. बी °ह । हे ह°. १८ डी किमि°.

क्षयं नीयत इत्यर्थः । अहं च त्वं च स्वयं युध्या[1]वहे इत्यभिप्राय इति । तथा सिन्धुपतिश्च हम्मुकोपि स्व[2]यं प्रडुढौके । कीदृक्सन् । इषुगणं प्रापयन् प्रियं कुर्वन्नत एव स्फावयन्वर्धयन् ॥

[3]रोपयत रोहयत । इत्यत्र "रुहः पः" [१४] इति वा पः ॥

विलीनयत । इत्यत्र "लियो नोन्तः°" [१५] इत्यादिना वा नः । वि[4]लाययत । इति पक्षोदाहरणं ज्ञेयम् ॥

विलाल[5]येत विल[6]ापयत । इत्यत्र "लो लः" [१६] इति वा लः ॥

अभिपालयिता । इत्यत्र "पातेः" [१७] इति लः ॥

धूग् धूग्श् धूग्ण् वा । उद्धूनयन् ॥ प्रींगँश् प्रींग्ण् वा । प्रीणयन् । इत्यत्र "धूग्प्रीगोर्नः" [१८] इति नः ॥ यौजादिकयोर्नेच्छन्त्येके । अभिधावर्यत् । प्रायत् ॥

वाजयत् । इत्यत्र "वो वि°" [१९] इत्यादिना जः ॥

पां पाने पैं वा । अपाययत् । अभिशायय । छायय । समवसाययत् । समभिवाययत् । व्याययत् । ह्वाययत् । इत्यत्र "पाशा°" [२०] इत्यादिना यः ॥

अ[9]न[10]र्प[11]येत् । अरेपय[12]ते । व्लेपयत् । अह्रेपित । क्नोपयन् । क्ष्माप्यते । प्रापयन् । इत्यत्र "अर्तिरी°" [२१] इत्यादिना पुः ॥

स्फावयन् । इत्यत्र "स्फी[13]यः स्फाव्" [२२] इति स्फाव् ॥

---

१ ई °ध्यामहे. २ ए बी सी ई °यं डु°. ३ सी रोह°. ४ बी °लालययत. डी ई °लापयत. सी °ला × × × × × णयन् । इत्यत्र धूग्प्री° ५ डी °यत् वि°. ६ ए °प । इ°. ७ बी °ग्श् प्रीग्ण्. ८ ई °यन् । प्रा°. ९ ई °जः ॥ पं पा°. १०. बी °नपय°. ११ सी °त् । व्ले°. १२ बी डी ई °त् । व्लेप°. १३ ए स्फाय् स्फा°.

शातयन्विघटयन्व्यथयन्वा रोदसी ध्वनिरघाटि धनुर्भ्याम् ।
खे तयोरिषुगणोघटि घाटंघाटमाशु विघटंविघटं च ॥ १२० ॥

१२०. ध्वनिः केङ्कारस्तयोर्भीमहम्मुकयोर्धनुर्भ्यामघाटि कृतः । कीदृग् । रोदसी शातयन्पातयन्निव विघटयन्वा द्विधा कुर्वन्निव वा । विपूर्वो घटिरिनन्तो विदारणेपि वर्तते । यथा काष्ठं विघटयति । व्यथयन्वा पीडयन्निव वा । एष्विवा अवसीयन्ते । अतितीव्रध्वानो ह्युच्चशैलशृङ्गादीनि भ्रंशयति पृथिव्यादीनि विदारयति नरादींश्च व्यथयतीत्यतितीव्रत्वादेवमाशङ्कितः । तथा धनुर्भ्यां कर्तृभ्यामिषुगणः खेघटि निक्षेपेण योजितः । किं कृत्वा । आशु घाटंघाटमात्मभ्यां सह संयोज्य संयोज्याशु विघटंविघटं च निक्षेपकाल आत्मसकाशाद्वियोज्य वियोज्य च ॥

इषुभिरनयोर्व्याथंव्याथं व्यथंव्यथमव्यथि
प्रतिकगयिता कागंकागं कगंकगमाकगि ।
प्रतिजरयिता जारंजारं जरंजरमाजरि
क्नसयितृजनः क्नासंक्नासं क्नसंक्नसमक्नसि ॥ १२१ ॥

१२१. अनयोर्भीमहम्मुकयोरिषुभिः कर्तृभिः प्रतिकगयिता प्रतीपं हन्ता प्रत्यर्थी व्याथंव्याथं व्यथंव्यथमभीक्ष्णं दुःखयित्वा दुःखयित्वाव्यथि दुःखितः । तथेषुभिरेव प्रतिकगयिता कागंकागं कगंकगमभीक्ष्णं प्रहृत्य प्रहृत्याकगि प्रहृतः । तथेषुभिरेव प्रतिजरयिता प्रतीपं क्षयं

१ ए शान्तय°. २ सी °थं व्य°. ३ बी °रयता. ४ बी °ससक्न°.

१ डी °ध्वाद्येधा. २ बी डी °टिरन°. ३ ए °ति प्रथि°. ४ ई °योज्या°. ५ सी °टं च. ६ ए °क्ष्णं दुख°. ७ डी °ख्वाव्य°. ८ ई °हत्या°.

नेता शत्रुर्जारंजारं जरंजरमभीक्ष्णं निर्जरय्यै निर्जरय्य विनाश्याजरि-विनाशित: । तथेषुभिः क्रसयितृजनः क्रसयिता वञ्चयिता सन्ताप-यितौ वा जनः शत्रुः क्रासंक्रासं क्रसंक्रसमभीक्ष्णं वञ्चयित्वा वञ्चयि-त्वा संताप्य संताप्य वाक्रसि वञ्चितः संतापितो वा । व्यथंव्याथमित्यादि-भिरेवाभीक्ष्ण्येवगतेपि जिणम्परे णौ वा ह्रस्वोदाहरणानां लाघवेनोपन्यासार्थं व्यं-थंव्यथमित्यादीनामाभीक्ष्ण्य एव वर्तमानानां पुनः प्रयोगोतिशयेनाभीक्ष्ण्यं वक्ति । एवमन्यत्रापि ॥ हरिणी छन्दः ॥

मतिजनयता जानंजानं जनंजनमाग आ-
वनयितुरसून्वानंवानं वनंवनमोजसा ।
रजयसि मृगान् राजंराजं रजंरजमाः किमि-
त्यतिहसकृता भीमस्याव्याथ्यतीव मनो द्विषा ॥ १२२ ॥

१२२. ओजसा बलेन प्रयोज्यकर्त्रासून्हम्मुकप्राणान्वानंवानं वनंवनमभीक्ष्णं याचयित्वा याचयित्वावनयितुर्याचयितुर्मोहयितु-र्बलेन हम्मुकं मिमारयिषोरित्यर्थः । भीमस्य मनो द्विषा हम्मुकेनाती-वात्यर्थमव्याथि पीडितम् । यतः कीदृशा । अतिहसकृतात्यर्थं हसता । कथमित्याह । आ इति खेदे । कष्टमहो भीम किमिति मृगान् राजं-राजं रजंरजमभीक्ष्णं रमयित्वा रमयित्वा रजयसि रमयसि व्याध इव मृगतुल्यानेतान्भटान्किमिति खेलयसि ममैव पार्श्वे ढौकस्वेत्यर्थ इति ।

१ प सी ई °य्य वि°. २ प °शित । त°. ३ सी डी °ता ज°. ४ ई व्याथ व्या°. ५ बी °भीक्ष्योव°. सी °भीक्ष्णेव°. ६ सी °व्यथ°. ७ सी °भीक्ष्ण ए°. ८ सी हरणी. ९ प °त्रा तेन हम्मु° १० × The ms. ई becms to have omitted one line The omission is hointidoret but not filled in. ११ प त्वाव°. १२ प °तुयाच°. सी °तुर्मो°. १३ प °नोह द्वि°.

तथागो दुर्वाक्यजनितमपराधं जानंजानं जनंजनमभीक्ष्णमुत्पाद्योत्पाद्य प्रतिजनयता कुर्वता ॥

किमरजि मयान्वेणोराजि त्वया न्विति जल्पता
तदजनि बलं तेजोजानि व्यकागि च तत्तथा।
अवनि स यशोवानि प्राणानजारि च मार्गणैः
शशिकुलभुवा बद्धाक्कासि द्विषन्क्लसयन्यथा ॥ १२३ ॥

१२३. नुशब्दो विकल्पार्थः । किं मया वैणो मृगतुल्यो भटजनोरजि युद्धेन रमयांचक्रे किं त्वया नु भवता वैणोराजीत्येवं जल्पता शशिकुलभुवा सोमवंशोद्भवेन भीमेन तत्तत्रत्यलोकप्रसिद्धं[1] बलं तथाजनि कृतं तत्तेजः प्रतापस्तथाजानि[2] । तथा तद्बलं तेजश्च तथा[3] व्यकागि च व्यापारितं यथा स द्विषन्हम्मुको मार्गणैः शरैः प्रयोज्यकर्तृभिर्भीमेन कर्त्रा यशोवनि याचितः प्राणांश्चावानि तत्संमुखप्रेरितबाणपार्श्वाद्भीमेन मह्यं स्वकीयं यशः प्राणांश्च देहीति याचित इवेत्यर्थः । अजारि च बलहीनः कारितोत एव बद्धाक्कासि कुटिलीकृतः । कीदृक्सन् । मार्गणैः क्लसयन्भीमं निराकारयन्प्रहारयन्नित्यर्थः ॥

शातयन् । इत्यत्र[4] "शदिः°" [२३] इत्यादिना शात् ॥

विघटयन् । अघाटि अघटि । घाटंघाटम् विघटंविघटम् । व्यथयन् । अव्याथि[5] अव्यथि । व्याथंव्याथम् व्यथंव्यथम् । अत्र "घटादेः°" [२४] इत्यादिना णौ ह्रस्वो ञिणम्परे तु णौ दीर्घो वा ॥

१ ए °द्ब°.

१ सी डी तत्र°. २ ए °थाजोनि. ३ ए °था वका°. ४ ए °त्यर्थ त्र
५ ए °थि । व्या°.

प्रतिकर्गयिता। व्यकागि आकगि। कागंकागम् कगंकगम्। आवनयितुः। अवानि अवनि। वानंवानम् वनंवनम्। प्रतिजनयता। अजानि अजनि। जानंजानम् जनंजनम्। प्रतिजरयिता। अजारि आजरि। जारंजारम् जरंजरम्। क्नसयितॄं। अक्नासि अक्नसि। क्नासंक्नासम् क्नसंक्नसम्। रजयसि मृगान्। एणोराजि अरजि। राजंराजम् रजंरजम्। अत्र "कगेवनू°" [२५] इत्यादिना ह्रस्वो जिणम्परे तु णौ वा दीर्घश्च। केचित्तु ञ्णसूचोपीच्छन्ति। क्नसयन्॥

अदमि न सुरैर्नो वा दैत्यैरदामि य आहवे
स्म दमयति तं दामंदामं दमंदममोजसा।
चुलुककुलभूः कामंकामं ह्यकामयदामय-
त्तमथ निगडं प्रामंप्रामं य आमि न केनचित्॥ १२४॥

१२४. यो हम्मुक आहवे रणे सुरैर्नादमि न दमितो नो वा दैत्यैरदामि तं हम्मुकं चुलुककुलभूर्भीम ओजसा बलेन प्रयोज्यकर्त्रा दामंदामं दमंदममभीक्ष्णं दमयित्वा दमयित्वा दमयति स्म। अथानन्तरं हम्मुकं निगडं शृङ्खलां हि स्फुटं कामंकाममभीक्ष्णं वाञ्छयित्वाकामयद्वाञ्छयत्तथा निगडं प्रामंप्रामं प्रापय्य प्रापय्यामयत्प्रापयद्यो हम्मुकः केनचित्केनापि निगडं नामि न प्रापितः॥

नाचामि नाकामि च केनचिद्या तां सोथ चौलुक्यकुलावतंसः।
आचाममाचाममिभाश्वसैन्यान्याचामयत्सेक्षुयवां तदुर्वीम्॥१२५॥

१२५. अथ योर्वी केनचित्केनापि स्वसैन्यपार्श्वान्नाचामि न

---

१ ई चुलक. २ प °मं अ°. ३ प °तंस। आ°.

---

१ सी °गयता. २ प बी नयिता. ३ ई °रि अज°. ४ सी डी °त्। आक्ना°. ५ प °म्। र°. ६ ई चुलक°. ७ प °भूमी ओ°. ८ डी निगंडं.

खादयांचक्रे नाकामि च। आस्तां तावदाचामनं नैवाभिलाषयांचक्रेऽपि[1]। एतेनातिनिरुपद्रवत्वेन तद्भूमेरतिशा[2]द्वलतोक्ता[3]। तां सेक्षुयवामिक्षुवाटक्षेत्रयवोपेतां तदुर्वीं हम्मुकपृथ्वीं स चौलुक्यकुलावतंसो भीम इभाश्वसैन्यानि प्रयोज्यकर्तॄण्याचाममाचा[4]मं खादयित्वा खादयित्वाचामयत्। इभैरिक्षूनश्वैश्च यवानखादयत्॥

दमयति। अदामि अदमि। दामंदामम् दमंदमम्। इत्यत्र "अमोकमि°" [२६] इत्यादिना ह्रस्वो ञिणम्परे तु णौ वा दीर्घः॥ अकम्यमिचम इति किम्। अकामयत्[5]। अकामि। कामंकामम्। आमयत्। आमि। प्रामंप्रामम्[6]। आचामयत्[7]। आचामि। आचाममाचामम्॥ इन्द्रवज्रा छन्दः॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तावष्टमः सर्गः[8]॥

१ ए °नापिनि°. २ ए °शाद्वलितोत्कांतात्कां तां से°. ३ सी °लस्तात्का तां से°. ४ ए °चासं खा°. ५ डी °कामि. ६ ए °म्। अचा°. ७ डी °ममा°. ८ ई °र्गः समाप्तः॥

# द्व्याश्रयमहाकाव्ये

## नवमः सर्गः ।



[1]परिस्खादंपरि[2]स्खादं परिस्खदंपरिस्खदम् ।
स परिस्खदयन्दृप्तान्भीमोथ प्रतिचेद्यगात् ॥ १ ॥

१. अथ हम्मुकवशीकरणानन्तरं स प्रसिद्धो भीमः प्रति[1]चेदि चेदिदेशाभिमुखमगात् । कीदृक्सन् । दृप्तान्दर्पिष्ठान्नृपान्परिस्खादंपरिस्खादं स्खदि हिं[2]सास्थैर्ययोः । [3]रणे स्थिरैर्भाव्यमिति स्थिरीकृत्य स्थिरीकृत्य परिस्खदंपरिस्ख[4]दं स्वसैन्यैर्घातयित्वा घातयित्वा परिस्खदयन् स्थिरीकुर्वन्घातयंश्च ॥

अपस्खादमपस्खादमपस्खदमपस्खदम् ।
यैरपास्खादि तैर्नापास्खद्यस्य वहतो ब[3]ले ॥ २ ॥

२. तैश्चरटैश्चरैरस्य भीमस्य वहतो गच्छतो बले नाप[5]ास्खदि मृत्युभयान्न किमपि विनाशितम् । यैरपस्खादमपस्खादमपस्खदमपस्खदम[6]भीक्ष्णं स्वभटैर्घातयित्वा घातयित्वापास्खादि घातः कारितो यैर्नृपादयोपि गच्छन्तः प्रच्छन्नधाटीपातादिनोपद्रुता इत्यर्थः ॥

---

१ बी सी डी अर्हम् । प°. २ प् °रिस्कादं. ३ ई बले: ॥.

---

१ सी °दिदे°. २ प् °सास्तैर्य°. ३ प् रणै स्थि°. ४ सी °स्खद°.
५ बी °पास्खादि. ६ बी सी डी °क्ष्णं सुभ°.

पर्यस्वादि च नो तेनाप्यनपस्खदयन्पथि ।
किं तु मस्खादयन्नेव पर्यस्खदि महौजसा ॥ ३ ॥

३. तेनापि न केवलं तैरस्य वहतो बले नोपास्खदि किं तु न्याय-निष्ठत्वाद्भीमेनापि पथ्यनपस्खदयन्नहिंसयन्नो च नैव पर्यस्खादि । शिष्टं स्पष्टम् ॥

परिस्खदयन् । पर्यस्खादि पर्यस्खदि । परिस्खादंपरिस्खादं परिस्खदं-परिस्खदम् । अनपस्खदयन् । अपास्खादि अपास्खदि । अपस्खादमपस्खादम् अपस्खदमपस्खदम् । अत्र "पर्यपात्स्खदः" [२७] इति णौ ह्रस्वो ञिणम्परे तु णौ वा दीर्घः ॥ स्खदेर्घटादिपाठेन सिद्धे नियमार्थं वचनमन्योपसर्गपूर्वस्य मा भूदिति । प्रस्खादयन् ॥

न्यशामि शमयन्भिल्लान् शामंशामं शमंशमम् ।
भीमश्च चेदिना दोश्च न्यशाम्यशमि नो पुनः ॥ ४ ॥

४. चेदिना चेदीशेन भीमश्च न्यशाम्यागच्छन् भुवः । कीदृक् । भिल्लान् म्लेच्छभेदान् शामंशामं शमंशममभीक्ष्णमुपशमय्योपशमय्य शमयन्निराकुर्वन्नित्यर्थः । ततो दोश्च भुजा च न्यशामि बलावलेपा-त्स्वभुजसंमुखं विलोकितमित्यर्थः । नो पुनश्चेदिना दोरशम्युपशमितं सावष्टम्भं कृतमित्यर्थः ॥

शमयन् । न्यशामि अशमि । शामंशामम् शमंशमम् । इत्यत्र "शमोऽदर्शने" [२८] इति ह्रस्वो ञिणम्परे तु णौ वा दीर्घश्च ॥ अदर्शन इति किम् । दोर्न्यशामि ॥

---

१ डी °नाथन°. २ ए महेज°.

---

१ सी डी नापस्ख°. २ ए °सयेन्नो. सी °सन्नोनैव. ३ डी °न्नो नै°. ४ ई °दि । शेषं स्प°. ५ ए °स्खदिं पारि°. ६ ए अपस्ख°. ७ ए °त् मस्ख°. ८ ए °मय्य श°. ९ ई °य्य निरा°. १० ए °मदर्यन्नि°. ११ ई °पाद्यमु°. १२ सी °र्थः ॥ सम°. १३ सी डी °न् । निशा°. १४ ए दोर्न्यशा°.

रिपून्यमयितुर्[1]मेद्य यामंयामं यमंयमम् ।
मैत्र्यै किमुदयं[2]म्येषोमैत्र्यै किमुदयामि वा ॥ ५ ॥

न विधिर्यामयत्य[3]र्के मां चामज्ञपयन्भितः ।
भीमोरीन् ज्ञपयन्नेति ज्ञापंज्ञापं ज्ञपंज्ञपम् ॥ ६ ॥

अज्ञापि ज्ञपयित्वा[4]स्त्रं चहयित्वा तु नाज्ञपि ।
यत्पूर्वैः किं जयेत्सोयं चाहंचाहं चहंचहम् ॥ ७ ॥

न चाहिता चहिता नाज्वाल्यज्वल्यमुने[5]ति[6] वा ।
नाज्ञात्वा ज्वलयाम्येनं ज्वालंज्वालं ज्वलंज्वलम् ॥ ८ ॥

ज्वालयन्नज्वलयन्वा विग्रहं ह्वलयन्परम् ।
सं[7]धिं वा ह्वालयन्दूतं ह्मलये[8]द् ह्मालयन्नयम् ॥ ९ ॥

इति यावदभूच्चिन्तानमितग्लपिताननः ।
चैद्यस्तावद्रजोपश्य[9]न्नामयद् ग्लापयद्दिशः ॥ १० ॥

५–१०. चैद्यश्चेदिदेशाधिपश्चिन्तयानमितं नम्रीकृतं ग्लपितं च क्षीणहर्षं कृतमाननं मुखं येन स तथा यावदभूत्तावद्दिशो ग्लापयन्मलिनीकुर्वद्[1]त एव नामयन्नी[2]चैः कुर्वद्रजः सैन्यखुरोत्खातरेणुमपश्यत् । का चिन्तेत्याह । अद्य सांप्र[3]तं[4] मे मम रिपून् यामंयामं यमंयमम[5]भी-

१ ए °मेंद्यं या°. २ ए °यस्येषो°. ३ ए °त्यर्क्यं मां. ४ ए °त्वा ना°. ५ ए °नेभि वा. ६ डी °ति चा ।. ७ ए सी संधि वा. ८ सी डी °ये ह्मा°. ९ ए °श्यनाम°.

१ ए एवाना°. २ ए °नीचै कुर्वरजा सैन्यखरो°. ३ ए °प्रत मे. ४ ई °तं म°. ५ ए °मपीक्ष्ण°.

क्ष्णमुपरमय्योपरमय्य यमयितुरुपरमयितुस्तिरस्कुर्वतः[1] सत इत्यर्थः । मैत्र्यै बलिष्ठतयायं संप्रति शत्रून्पराभवन्मा भीममपि पराभूदिति[2] सख्याय किमेष भीम उद्यमि मन्त्रिभिरुद्यमं कारितः । किं वा मैत्र्यै[3] संप्रत्ययं शत्रूञ्जयन्मा भीमस्यै[4] दुःसाध्यो भूदित्याशयेन विग्रहायोद्यामि । तथा विधिर्दैवमर्कं[5] न यामयति न परिवेवेष्टि परचक्रकृतराष्ट्रभङ्गादिसूचकं दुर्दैवकृतमर्कपरिवेषाद्यरिष्टं न किं चिदस्तीत्यर्थः । चः पर्[6]मर्थे । परं[7] भीम इतोस्मिन्देश एति । कीदृक्सन् । अरीञ्ज्ञापंज्ञापं ज्ञपंज्ञपमभीक्ष्णं हिंसित्वा हिंसित्वा ज्ञपयन्हिंसन्नत एव मामप्रज्ञपयन्नपरितोषयन् । तथा यत्पूर्वैर्यस्य भीमस्य पूर्वजैर्मूलराजाद्यैरत्रं[8] ज्ञपयित्वा तीक्ष्णीकृत्याज्ञाप्यमारि शत्रुहिंसा[9] चक्रे । भावेत्र णिच् । तुं[10]ः परमर्थे । परं चहयित्वा शाठ्यं कृत्वा यत्पूर्वैर्नो[11]ज्ञापि न हिंसितं सोयं भीमोतर्कितमभिषेणकृत्वार्त्किं चाहंचाहं चहंचहमभीक्ष्णं छलयित्वा छलयित्वा जयेच्छत्रुं वशीकुर्यात् । "विधिनिमन्त्रण°" [५-४-२८] इत्यादिना संप्रश्ने सप्तमी । तथैनं भीमं ज्वालंज्वालं ज्वलंज्वलं प्रत्यवस्कन्दनो[12]दिनाभीक्ष्णं कोपयित्वा कोपयित्वा न ज्वलयामि न कोपयामि । किं कृत्वाज्ञात्वा । किमित्याह । अमुना भीमेन न चाहिता न शाठ्यं करिष्यते[13] चहिता वा । वा शब्दोत्रापि योज्यः । शाठ्यं करिष्यते वा । तथामुर्नो[14] नाज्वालि कोपेनात्मा न ज्वालितो[15]ज्वलि वेति । तथा परं शत्रुं ज्वालयन्प्रतापैः[16] संतापयन्प्रज्वलयन्[17]प्रकर्षेण संतापयंश्च[18] भीमो दूतं ह्वलयेत्[19]प्रेषयेत् । कीदृक्सन् । विग्रहं वा[20] ह्वलयंश्चालयन्प्रवर्तयन्नि-

---

१ प °र्वतोः स°. २ सी डी °भूयादि°. ३ डी मैत्र्ये सं°. ४ प °स्य दुसा°. ५ प °मर्के न. ६ प सी डी रमार्थे°. ७ प °रं चहयित्वा शाठ्यं कृत्वा यत्पूर्वैर्नोज्ञपि न हिंसितं सोयं भीमोतर्कितन्हि°. ८ प पूर्वैर्मू°. ९ ई °वे मि°. १० सी तुप°. ११ प °त्पूर्वैर्नो°. १२ सी °नाभी°. १३ सी डी °ते चाहि°. १४ सी डी °नाज्वा°. १५ बी °तो ज्वालिचेति. १६ प repeats from यन् to ल्यन्. १७ प ई °न्प्रज्वाल°. १८ प °पयश्च भीमौ दू°. १९ डी °ये की°. २० प वा हुल°.

त्यर्थः । संधिं वा ह्वालयन्प्रवर्तयन् । यतः कीदृक् । नयं न्यायं ह्वालयन्प्रवर्तयन् । यद्ययं मया सह विग्रहं संधिं वा चिकीर्षुः स्यात्तदा न्यायनिष्ठत्वाद्दूतं मत्पार्श्वे प्रेषयेन्न तु प्रेषितवांस्तस्मान्मैत्र्यमैत्री च न कारणं किं त्वन्यत्किमपीत्यर्थ इति ॥

स्वर्णवर्माशुभिर्व्योम स्नपयत्स्नापयद्दिशः ।
कूर्मेण वमयत्फेनं गरं शेषेण वामयत् ॥ ११ ॥
अवन्या वानयत्कम्पं निश्छद्म वनयत्तथा ।
शिखिच्छदच्छत्रचयैर्धामच्छद्भिश्छदिःश्रियम् ॥ १२ ॥
दिव्यप्रच्छदसाधाश्वमालुलोकच्च चेदिपः ।
कालोचितं च वेत्रीशेनाशशांसदचीकरत् ॥ १३ ॥

११-१३. चेदिप आश्वमश्वौघमालुलोकच्च न केवलं रजोपश्यदिति चार्थः । कीदृशम् । स्वर्णवर्माशुभिर्व्योमं स्नपयदुज्ज्वलीकारकत्वेनाभिषिञ्चदिवैवं दिशः स्नापयत् । तथा कूर्मेण कर्त्रातिभाराक्रान्त्या फेनं वमयदुद्गारयत् । तथा शेषेण कर्त्रा गरं विषं वामयत् । तथावन्या कम्पं वानयद्वनीं कम्पं याचमानां प्रयुञ्जानं पृथ्वीं कम्पयदित्यर्थः । तथा निश्छद्म निर्मायं यथा स्यादेवं धामातपं छादयन्ति क्विप् । तैर्धामच्छद्भिः शिखिनां मयूराणां ये छदाः पक्षास्तेषां छत्रचयैः

१ प °यन्दिशः. २ प °त्फेर्नं ग°. ३ बी निच्छद्म°. ४ प °त्रत्रयै°. ५ सी डी °प्रच्छाद°. ६ प °शाशद°.

१ प °त्र्यमित्री. २ प सी °वल र°. ३ बी म श्नप°. ४ बी °षिञ्चिदि°. ५ ई शेषक°. ६ प गर वि°. ७ प वनीयं क°. ८ प °चनानां. ९ बी निच्छद्म.

श्रीकरीनिकरैः कर्तृभिश्छदिःश्रियं गृहाच्छादकतृणपङ्क्तिशोभां वनयद्याचयदङ्गीकारयदित्यर्थः । तथा दिव्याः प्रधानाः प्रच्छदा वस्त्राणि येषां ते तथा सादिनोश्ववारा यत्र तत् । ततश्च चेदिपो वेत्रीशेन कर्त्रा कालोचितमाशशासद्भाणितवानचीकरच्च कारितवांश्च ॥

असस्वामत्ततो द्वास्थ आशशासच्च पर्षदम् ।
स्वाधिकारमबभ्राजद्वाचं चैवमसिस्वदत् ॥ १४ ॥

१४. ततश्चेदिपेन कालोचितस्य भणनकरणविषये व्यापारणानन्तरं द्वास्थोसस्वामत्स्वामिनमाख्यद्युष्मदादिष्टमधुनैव करोमीति चेदिपमुवाचेत्यर्थः । तथा पर्षदमाशशासत्स्ववचःश्रवणसाभिलाषां चक्रे यतः स्वाधिकारं विज्ञप्य विज्ञपनरूपमर्बभ्राजदप्रकटयत् । एतदपि कुत इत्याह । यत एवं वक्ष्यमाणप्रकारेण वाचमसिस्वदच्च चारुरचनयों स्वाद्वीमकार्षीच्च ॥

यथासौ वाचमसिस्वदत्तथाह ।

छत्रैरबिभ्रजद्व्योमाबीभसत्कुन्तकान्तिभिः ।
अबभासत्किरीटोस्रैर्हेषारावैरबीभषत् ॥ १५ ॥
खुराग्रैरबभाषत्क्ष्मामदिदीपदपीपिडत् ।
भारेण क्रोडदंष्ट्रामप्यपिपीडददीदिपत् ॥ १६ ॥

---

१ ए °म् । स्वाधि°. २ सी डी °त्रैराबि°. ३ ए °भ्रमद्व्यो°. ४ ए °सत्कि-रीटोस्रैः हषा°.

---

१ बी °दिश्रि°. २ ए °पो विर्त्रा°. ३ ए °रत्व का°. ४ ए °दिन°. ५ ए °षये व्या°. ६ ए ई करिष्ये चे°. ७ ए °वचश्र°. ८ सी डी °वणे सा°. ९ बी सी डी °रूपं स्वव्यापारम°. १० ए मवभ्राज°. ११ डी °या साध्वीम°. १२ बी स्वाधीनम°. सी स्वाध्वीम°.

अजिजीवच्चमस्तेन रजो यदुदमीमिलत् ।
अस्त्राण्युदमिमीलत्तान्युद्द्योतं [1]यैरजीजिवत् ॥ १७ ॥
दुन्दुभीनचकाणचान्यैर्निकुञ्जान्यचीकणत् ।
अरराणच्च ढक्कास्ता यका[2]भिर्यामरीरणत् ॥ १८ ॥
काहला अववाणच्च निजोत्कर्ष[3] न्ववीभणत् ।
शङ्खानवीवणश्चोच्चै[4]र्बभाणश्च मङ्गलम् ॥ १९ ॥
कापि क्षो[5]भमशश्राणद्विसयं[6] काप्यशिश्रणत् ।
अजुहावद्धेषयाश्वमार्कं[7] चै[8]न्द्रं न्वजूहवत् ॥ २० ॥
अजिहेठद्गांस्तान्भुव्यलुलोटदलूलुपत् ।
नयानजीहि[9]ठत्कश्चिदलुलोपदलूलुं[10]टत् ॥ २१ ॥
नाललापन्मिथो नालीलपदन्यं तथापि हि ।
अचिकीर्तत्प्रभोः शक्तिं निजां भक्तिमचीकृतत् ॥ २२ ॥
भीमस्य दूतेन [11]संहैषोववर्तदिहागतिम् ।
अश्वायुतं चमूलेशो नोपद्रवमवीवृतत् ॥ २३ ॥

१५–२३. एष युष्मा[1]भिरत्यासन्नं दृश्यमानो भीमस्य चमूलेशो-

१ ए °करन्. २ बी °भिस्ताम°. ३ सी बी °र्षं त्ववी. ४ ए °क्वाण°. ५ ए क्षोत्सम°. ६ बी °यं काप्य°. ७ ए बी सी °र्कं न्वैन्द्रं. ८ डी °न्द्रं त्वजू°. ९ ए °हिउत्क°. १० पं °लुपत्. ११ सी डी सहाषो°.

---

१ डी °भिरित्या°.

अयुतमश्वानां दशसहस्राणि[1] दूतेन सहेह प्रत्यक्षे देश आगतिमागमनमववर्तयच्चक्रे । कीदृगित्याह । एषच्छत्रै[2]र्महासामन्तादि[3]मूर्धोपरि[4]स्थितैरातपत्रैः कृत्वा व्योमाबिभ्रजदशोभयत् । तथैष कुन्तकान्तिभिः कृत्वा व्योमाबी[6]भसदुद्दीपयत् । तथैष किरीटोस्रैर्महासामन्तशिरः[7]स्थमुकुटांशुभिः कृत्वा व्योमावभासत् । तथैष हेषारवैः[8] कृत्वा व्योमाबीभषत्प्रतिशब्दितैरशब्दाययत् । तथैष खुराग्रैः कृत्वा क्ष्मा[9]मबभाषच्छब्दायमानां प्रायुङ्क्तादि[10]दीपत्समतापयदपीपिडत्पीडितवांश्च । तथैष भारेण कर्त्रा क्रोडदंष्ट्रामपि न केवलं[11] क्ष्मामादिवराहदाढामप्यपिपीडददीदिपच्च । तथा यद्यस्माद्धेतोरेष रजो धूलिमुदमीमिलदुच्छालितवांस्तेन हेतुना तमोजिजीवदुल्लासितवानित्यर्थः । तथैष तान्यस्त्राण्युदमिमीलदप्रकटयद्यैः कृत्वैष उ[12]द्द्योतमजी[13]जिवत् । तथैष तान्दुन्दुभीन्पटहानचकाणदवादयद्यैः कृत्वैष निकुञ्जानि गिरिगह्वराण्यचीकणत्प्रतिशब्दैः शब्दायितवान् । तथैष ता ढ[14]क्का वि[15]जयभम्भा अरराण[16]च्चावादयच्च यकाभिः कृ[17]त्वा द्यामरीरणत् । तथैष काहला अववाण[18]च्चावादयत् । एतत्स्वरस्यात्युदात्तत्वादुत्प्रेक्ष्यते । एष निजोत्कर्षं न्वात्मीयोत्कृष्टतामिवाबीभणदभाणयत्प्रस्तावात्काहला एव । "गतिबोध०" [२.२.५] इत्यादिना णि[19]कर्तुः कर्मता । काहला[20]पार्श्वादित्यर्थः । [21]तथैष उच्चैः शङ्खानवीवणच्च । एतत्स्वरस्य च मङ्गल्यत्वादुत्प्रेक्ष्यते । मङ्ग[22]लं न्वबभा[23]णद्भाणितवान् । प्रस्तावाच्छङ्खानेव । तथैष कापि शत्रुषु क्षोभं भयेनाकुलतामशश्राणददान् । तथैष कापि नागरिकेषु ऋद्धिविशेषेण विस्मयमाश्च-

---

१ सी डी °हस्राणि. २ ए °पस्थत्रैम°. ३ ए °दिमहामू°. ४ बी सी डी °रिधृतै°. ५ ए °स्थितेरा°. ६ ए °बीसस°. ७ बी °शिरस्थ°. ८ ए °षाराव: कृ°. ९ ए क्ष्मानब°. १० बी ई °युक्तादि°. ११ ए °ल क्ष्म्यानादि°. १२ ए बी डी उद्योत°. १३ ए °जिपस्तथै°. १४ ई ढक्कावि°. १५ ए विषय°. १६ ए °णच्च वा°. १७ बी सी डी कृत्वैप द्या°. १८ ए °णत्वावा°. १९ ई णिकर्तुः. २० ए °पार्श्वदि° २१ बी °थैव उ २२ डी °लं त्वब.° २३ ए °णप्राणि°.

येमंशिश्रणत् । तथैष हेपयाश्वशब्दितेन कर्ष्यार्के रविमंबन्ध्यौश्वमश्वौघमजुहावन् स्वाश्वशौर्यावलेपेन मस्पर्धमाकारितवानिव । तथैष हेपया कर्ष्येन्द्रं शक्रसंबन्धिनमश्वमुच्चैःश्रवसमजूहवन् । तथैष तानगान्वृक्षानजिहेठन्मत्तगजादिभिर्बाधितवान्भुवि पृथिव्यामलुलोटत्पातितवानलुलुपच्छेदितवांश्च यान्कश्चिन्नाजीहिठन्नालुलुटन्नालुलोपच्च । तथैष यद्यपि मिथो नाललापदहो अस्मत्प्रभोः सामर्थ्यं येनेत्थमित्थं हेलयैव हम्मुको बद्ध इति । तथा वयं स्वप्रभुकार्ये जीवितं तृणायापि न मन्यामह इत्यादिप्रकारेणान्योन्यं न संभाषितवान्नचान्यं स्वस्माद्व्यतिरिक्तं कं चनालीलपज्ज्ञापितवांस्तथापि हि स्फुटं प्रभोर्भीमस्य शक्तिं तेजस्विताश्रीविशेषाद्याडम्बरप्रकाशनेन बलादिसामर्थ्यमचिकीर्तज्ज्ञापितवान । तथा निजां भक्तिं तथाविधदुष्करपरराष्ट्रप्रवेशरूपभर्त्रादेशकरणेन स्वभर्तृविषयं बहुमानं चाचीकृतन् । तथैष इह देश उपद्रवं नावीवृतन्न चक्रे ॥

यमयितुः । उदयामि उदयमि । यामंयामम् यमंयमम् । अत्र "यमोपरि°" [ २९ ] इत्यादिना ह्रस्वादि ॥ अपरिवेषण इति किम् । यामयत्यर्कम् ॥

मारणे । अरीन् ज्ञपयन् ॥ तोषणे । मामप्रज्ञपयन् ॥ निशाने । ज्ञपयित्वास्त्रम् । अज्ञापि अज्ञपि । ज्ञापंज्ञापम् ज्ञपंज्ञपम् । अत्र "मारण°" [ ३० ] इत्यादिना ह्रस्वादि ॥

१ ए °मशश्राण° बी °मशश्र°. २ ए कर्ष्यार्कर°. ३ सी °र्ष्यार्कर°. ४ सी डी °न्ध्याश्वं तुरगौघ°. ५ ए शत्रम°. ६ सी डी °नमाश्व°. ७ ए ई °समाजू°. ८ बी °जूहाव°. ९ ए °हेवन्म°. १० बी सी पृष्व्याम°. ११ ए °जीहवन्ना°. १२ ए °लुठन्ना°. १३ बी संनोषि°. १४ सी डी °भावित°. १५ ए सी डी °नं वाची°. १६ बी °कृत्तथै°. १७ ए सी °त्यकम्. १८ डी °पि ज्ञा°. १९ ए °पं । ज्ञ°. २० ए अर मा°.

चहयित्वा । चहिता चाहिता । चाहंचाहम् चहंचहम् । अत्र "चहणः शाठ्ये" [ ३१ ] इति ह्रस्वादि ॥

ज्वलयामि ज्वालयन् । ह्वलयन् ह्वालयन् । ह्मलयेत् ह्मालयन् । ग्लपित ग्लापयन् । स्नपयन् स्नापयन् । वनयन् वानयन् । वमयत्[6] वामयत । नमित नामयन् । अत्र "ज्वलह्वल°" [ ३२ ] इत्यादिना वा ह्रस्वः ॥ अज्वालि अज्वलि । ज्वालंज्वालम् ज्वलंज्वलम् । इत्यादिषु दीर्घविकल्पः सिद्ध एव ॥ अनुपसर्गस्येति किम् । प्रज्वलयन् ॥

इमि । छदिः ॥ मनि । छद्म ॥ त्रटि । छत्र ॥ क्रिपि[11] । धामच्छद्भिः । अत्र "छदेः°" [ ३३ ] इत्यादिना ह्रस्वः ॥

प्रच्छद् । शिखिच्छद् । इत्यत्र "एकोप°" [ ३४ ] इत्यादिना ह्रस्वः ॥

अचीकरन् । इत्यत्र "उपान्त्यस्या°" [ ३५ ] इत्यादिना ह्रस्वः ॥ असमानलोपिशास्वृदित इति किम् । अमम्वामत । यत्रान्त्यस्वरादिलोपस्तत्र स्थानिवद्भावेन न सिध्यतीति वचनम् । यत्र तु स्वरस्यैव लोपस्तत्र स्वरादेशत्वात्स्थानिवद्भावेनैव सिध्यति । मालामाख्यदममालत् । ननु यत्रापि स्वरव्यञ्जनलोपस्तत्रावयवावयविनोर्भेदनयेन[16] स्वरादेश एवेति स्थानिवद्भावेनैव सिध्यति किमसमानलोपिवचनेनेति । सत्यम् । स्थानिवद्भावस्यानित्यत्वज्ञापनार्थं वचनम् । ततामिस्वदत् । अत्रोकारस्य "नामिनोकलिहलेः" [ ४.३.५१ ] इति वृद्धौ कृतायामन्त्यस्वरादिलोपादसमानलोपित्वम् ॥ शास्[18] ।

१ ई °त्वा । चाहिता । चह्निता । चाह. २ ए चाह. ३ ए ई इत्यादिना ह्र°. ४ सी डी °लयन. ५ ए °त् ह्वाल°. ६ सी °न न°. ७ बी सी डी °ल्प मि°. ८ डी °द्ध येव. ९ डी °द्म ॥ त्रटि. १० बी सी डी ई छत्र ॥. ११ ए क्रपि. १२ ए °च्छब्द । इ°. सी डी °च्छद इ°. १३ ए °रदित्यादित्य°. १४ बी सी डी ई °दिनीति. १५ डी °न सि°. १६ सी °भदन.° १७ सी °वस्या°. १८ ई °स । आश°.

अशशासत् ॥ आशासमोपीच्छत्यन्यः । आशशासन[1] ॥ ऋद्दिन् । लोकृ । आलुलोकत् ॥

अबिभ्रजत्[2] अबभ्राजत् । अबीभमत् अबभामत् । अबीभपत् अबभापत् । अदीदिपत् अदिदीपत् । अपीपिडत् अपिपीडत् । अजीजिवत् अजिजीवत् । अमीमिलत् अमिमीलत् । अचीकणत् अचकाणत् । अरीरणत् अरराणत् । अवीवणत् अववाणत् । अबीभणत् अबभाणत् । अशिश्रणत् अशश्राणत् । अजूहवत् अजुहावत् । अजीहिठत्[6] अजिहेठत् । अलूलुटत् अलुलोटत् । अलूलुपत् अलुलोपत् । अलीलपत् अललापत् । अत्र "भ्राजभास" [३६] इत्यादिना वा ह्रस्वः ॥

अवीवृतत् अववर्तत् । अचीकृतत् अचिकीर्तत् । अत्र "ऋदवर्णस्य" [३७] इति वा-ऋत् ॥

दूतः सोजिग्रपद्वाहान्द्वारं रत्नांशुशाड्वलम् ।
तं तत्रातिष्ठिपं देवाज्ञासौरभमजिघ्रिपम् ॥ २४ ॥

२४. स भीममत्को दूतो वाहानश्वान्द्वारं सिंहद्वारमजिघ्रपत् । द्वारं वाहानुद्गतहरिततृणाशङ्कया जिघ्रतः प्रयुक्तवान् । यतः कीदृग्द्वारं रत्नांशुशाड्वलं रत्नांशुभिः शाड्वलेशब्दसांनिध्यान्नीलमणिकान्तिभिः शाड्वलमिव हरिततृणान्वितमिव द्वारदेशे दूत आयातोस्तीत्यर्थः । तं दूतं तत्र द्वारेहं प्रतीहारोतिष्ठिपं स्थापयामास । यतो देवाज्ञासौरभं

१ सी डी °शाड्वल°.

१ सी ॥ गर्दि°. २ ए सी °भ्र । °भ्रा°. ३ बी °बिभ्राज°. ४ ए अदीदिप°. ५ सी °शश्राण°. ६ ए सी °जिहि°. ७ ए °जभास° बी सी डी °जभास°. ८ सी अर्चो°. ९ सी डी °तृणा°. १० डी °लमि°.

देवस्य राज्ञो याज्ञा तस्याः सौरभं गुणगौरवं प्रधानादेशमित्यर्थः। अहमजिघ्रिपं घ्रापयामास । तवाज्ञां प्रतीच्छन्तं दूतमहं प्रयुक्तवानित्यर्थः ॥

अजिघ्रिपम् अजिघ्रपत् । इत्यत्र "जिघ्रतेरिः" [ ३८ ] इति वा-इः ।

अतिष्ठिपम् । अत्र "तिष्ठतेः" [ ३९ ] इति नित्यमिः ॥

अदूषयद्भिः प्रतिभामदूष्यैः सोप्यदोषयन् ।
धीगूहितेङ्गितैः पुम्भिरावृतोत्रैतुमिच्छति ॥ २५ ॥

२५. सोप्यदोषयन्न केवलं पुम्भिः प्रतिभामदूषयद्भिः किं तु दूतोपि प्रतिभां प्रज्ञां स्वामिद्रोहाद्यभिप्रायेणाकलुषयन्सन्नत्र देवपादान्तिक एतुमिच्छति । कीदृक् । पुम्भिर्नरैरावृतः । किंभूतैः । अदूष्यैः(ष्यैः) कुलीनत्वादिसद्गुणोपेतत्वेन श्लाघ्यैरत एव प्रतिभामदूषयद्भिः । तथा धिया प्रयोज्यकर्त्र्या गूहितं संगोपितमिङ्गितं चेष्टितं दुर्वचोव्यापारादि यैस्तैर्गम्भीराशयैरित्यर्थः ॥

अदूष्यैः । अत्र "ऊदुपो णौ" [ ४० ] इत्यून् ॥

प्रतिभामदूषयद्भिः प्रतिभामदोषयन् । इत्यत्र "चित्ते वा" [ ४१ ] इति वोत् ॥ चित्तग्रहणेन प्रज्ञाया अपि ग्रहणात ॥

गूहित । इत्यत्र "गोहः स्वरे" [ ४२ ] इत्यूत् ॥

तेन्वभूवञ्जनास्तं नु पार्थदूतो बभूव यः ।
येमुं दामोदरं द्रष्टुं जग्मुर्जघ्नुर्न संशयम् ॥ २६ ॥

२६. येमुं दूतं दामोदरं दामोदराख्यं द्रष्टुं जग्मुस्ते जना यः

१ ए °प्यदूष°.

१ बी °जिघ्रिप°. २ सी डी जिघ्रिन°. ३ ए सी डी °प्यदूष°. ४ ए °यैस्तार्ग°. सी डी °यैर्ग°. ५ ए उदोपो. ६ ए °मदो°. ७ ए गोहः स्व°. ८ सी दूतदा°.

पार्थदूतो युधिष्ठिरसंदेशहारको बभूव तं नु दामोदरं विष्णुमिवान्वभूवञ्ज्ञातवन्तः । युधिष्ठिरेण हि युद्धात्पूर्वं पञ्चग्रामीप्राप्त्या संधानाय कौरवाणां पार्श्वे विष्णुर्दूतः प्रेषित आसीदिति भारतम् । तथा संशयमयं विष्णुः स्यान्न वेति संदेहं न जग्मुर्नापजह्रुर्विष्णुविषयः संशयोतिनैकट्येप्येषां न व्यपगत इत्यर्थः ॥

न यच्चख्नुर्न यज्जक्षुर्न यद् घ्नन्ति स्म किं चन ।
नारितामगमन्नेते तेन जज्ञे ममेति धीः ॥ २७ ॥

२७. यद्यस्माद्धेतोरेते सैनिकाः किं चन लताद्यपि न चख्नुर्नोत्पाटितवन्तस्तथा यद्यस्मादेते किं चन तृणाद्यपि न जक्षुर्नाभक्षयंस्तथा यद्यस्मादेते किं चन मृगाद्यपि न घ्नन्ति स्म तेन हेतुनैतेरितां शत्रुतां नागमन्नित्येवंविधा धीर्मम जज्ञे बभूव ॥

अन्वभूवन् । इत्यत्र "भुवो वः°" [ ४३ ] इत्यादिनोपान्त्यस्य-ऊत् ॥

क्ङिति । जग्मुः । जघ्नुः । जज्ञे । चख्नुः । जक्षुः ॥ ङिति । घ्नन्ति । इत्यत्र "गमहन°" [ ४४ ] इत्यादिनोपान्त्यस्य लुक् ॥ अनङीति किम् । अगमन् ॥

अनिन्दिताध्वस्तबलोग्लुंचत्कलचुरिर्मदम् ।
नेत्रोदक्तभ्रुवा भूपाश्चितः प्रावेशयच्च तम् ॥ २८ ॥

२८. कलचुरिश्चेदीशः । कलचुरिर्हि चेदिदेशः । इति द्वास्थोक्त्यो मदं हर्षमग्लुचत्प्राप । कीदृशोनिन्दितमकुत्सितमध्वस्तं चानिराकृतं

१ ए °ग्लुश्चकल°. २ सी डी °रिर्मुद°.

१ ए °वान्वभू°. २ ए °विष्णुदूतः. ३ ए °ति पुराणम्. ४ ए °ह त जघ्नुनाप°. ५ बी °ष्णुर्विष°. ६ सी °त्यर्थ ॥. ७ ए चखुर्नोत्पादित°. ८ ए °तुनेते°. डी °तुनारि°. ९ बी धीर्बुद्धिर्मे°. १० ए सी डी °मत् ॥. ११ डी °देशेशः. १२ सी डी °क्त्या मुदं. १३ ए °त्प्रापः ।

बलं भीमसैन्यं येन । यद्वा भीमचमूलेशेनानिन्दितमविश्वस्तं च बलं यस्य सः । तथा कलचुरिर्भूपाञ्चितो नृपैः पूजितः स्वसेवकैर्नृपैरापूरितसभः सन्नित्यर्थः । नेत्राभ्यामुदक्तोर्ध्वीकृता या भ्रूस्तया भ्रूसंज्ञया कृत्वा द्वास्थेन कर्त्रा तं दूतं प्रावेशयच्च ॥

स्वस्त । अग्लुचन् । इत्यत्र "नो व्यञ्जनस्य°" [ ४५ ] इत्यादिना नस्य लुक् ॥ अनुदित इति किम् । अनिन्दित ॥

नेत्रोदक्त । अत्र "अञ्चोनर्चायाम्" [ ४६ ] इति नस्य लुक् ॥ अनर्चायामिति किम् । नृ(भू)पाञ्चितः ॥

तेनाविकंपितेनाविलगितैः स्वैर्निषीदता ।
नाभाजि विनयो नाभञ्ज्यवष्टम्भः सजन्यशः ॥ २९ ॥

२९. तेन दूतेन विनयः प्रणामाद्युचितप्रतिपत्तिर्नाभाजि न भग्नः । कीदृशा तेन । अविकंपितेन संक्षोभोत्थस्तम्भादिविकाररहितेन । तथाविलगितै रोगादिनानुपतप्तैः स्वैरात्मीयैर्भटैः सह निषीदता चेदिसभायामुपविशता । तथा तेन यशः सजन्वप्रनवष्टम्भ औजित्यं नाभञ्जि । तावानेव विनयः कृतो यावता स्वावष्टम्भो न भ्रष्ट इत्यर्थः ॥

दशन्क्रमुककर्पूरं सोथ रागी रजन्सदः ।
रजकक्षालितक्षौमचोक्षदन्तांशुरब्रवीत् ॥ ३० ॥

३०. अथ स दूतोब्रवीत् । कीदृक्सन् । रागी शृङ्गार्यत एव

१ सी डी °कम्पिते°. २ ए °शनक्रमु°. ३ सी डी °दन्ताशु°.

१ ए स्वमेव°. २ सी °क्तोर्ध्वीकृ°. डी °क्तोर्ध्वीकृ°. ३ बी °तम प्र वे°. ४ बी सी डी °शा सनावि°. ५ सी °कम्पने°. डी °कम्पिते°. ६ ए °गितो रो°. ७ ए °भट्यैः स°. ८ ए °व औ°.

क्रमुककर्पूरं पूगीफलानि कर्पूरं च दशन्भक्षयन्नत एव च सदश्वेदि-सभां रजन्स्वऋद्धिविशेषे मस्पृहां कुर्वन । तथा रजकेन क्षालितं धौतं यत्क्षौमं दुकूलं तद्वत्क्षोभा निर्मला दन्तांशवो यस्य सः ॥

विलगितः । विकम्पितेन । इत्यत्र "लङ्गि" [४७] इत्यादिना नस्य लुक् ॥

अभाजि अभञ्जि । इत्यत्र "भञ्जेर्जौ वा" [ ४८ ] इति वा नस्य लुक् ॥

दशन् । सजन् । इत्यत्र "दंशसञ्जः शवि" [ ४९ ] इति नस्य लुक् ॥

रजक । रागी । रजन् । इत्यत्र "अकट्" [ ५० ] इत्यादिना नस्य लुक् ॥

स्यदिनो रजयन्त्येव मृगांस्तेपि त्वदाज्ञया ।
येषां रागोनवोदौद्यक्रव्यस्य दशने परः ॥ ३१ ॥

३१. तेपि व्याधा अपि मद्देशे केनापि मृगा न घात्या इति त्वदाज्ञया कृत्वा स्यदिनस्त्वरावन्तो मृगान रजयन्त्येव रमयन्त्येव न तु मारयन्तीत्यर्थः । नास्त्यवोदः पाको यस्य तदनवोदमपक्वम् । उद्यत इति औणादिके मनि ओद्म पक्वम् । विशेषणकर्मधारये तद्यत्क्रव्यं मांसं तस्य दशने भक्षणे येषां परः प्रकृष्टो रागः स्पृहा । एतेन चेदैराज्ञै-श्वर्यातिधार्मिकत्वे उक्ते ॥

दग्धैधाभोयतैर्विन्ध्यस्त्वद्यशः प्रश्रंथस्ततैः ।
गतो हिमश्रथाद्रित्वमव्याहतमतेरपि ॥ ३२ ॥

३२. दग्धा य एधाः काष्ठानि तदाभैस्तत्सदृशः काल इत्यर्थः ।

---

१ ए °यन्त्यैव. २ ए °श्रथस्त°.

---

१ ए °शषो स°. सी °शपा स्पृ°. डी °शेषात्मस्पृ°. २ ए °वंस्तथा. ३ बी दन्ताश°. ४ °शवौ य°. ५ ए °गिन्नैः ।. ६ सी डी कम्पिते°. ७ ए °ञ्जेजौ वा. ८ ए °कम् इ°. ९ सी मम दे के°. डी मम देशे. १० ए °न स्वरा°. ११ ए सी डी °वन्तो मृ°. १२ ए °व न. १३ ए °के नमि. १४ ए चेदैरा°. १५ ए °भत्तस°.

विन्ध्योऽव्याहतमतेरपि ज्ञानकारणेन्द्रियपाटवादप्रतिहतज्ञानस्यापि पुंसो हिमश्रथाद्रित्वं हिमेन श्रथ्यते व्याप्यते हिमश्रथो हिमवान्योद्रिस्तद्भावं गतः। पटुरिन्द्रियोप्येवं जानाति यदयं विन्ध्यो न किं तु हिमाद्रिरित्यर्थः। कैर्हेतुभिः। अयतैरनुपरतैस्ततैर्विस्तीर्णैस्त्वद्यशःप्रश्रथैर्भवदीयकीर्तिसन्दर्भैः ॥

अक्षतेनौजसा काशिमवमत्य निहत्य च।
साध्वनैषीर्दशार्णेशमनारतवतिं नतिम् ॥ ३३ ॥

३३. दशार्णेशं दशार्णदेशाधिपमनारता निरन्तरा वतिः सेवा यस्यां तां नतिं साधु यथा स्यादेवं त्वमनैषीः। किं कृत्वा। अक्षतेन केनाप्यविध्वस्तेनौजसा बलेन कृत्वा काशिं वाणारसीराजमवमत्य रणे तिरस्कृत्य निहत्य च ॥

परितत्य प्रसत्येभान्प्रवत्यागत्य दूरतः।
त्वां प्रणत्याधिगम्याभूत्सुखी भद्रभटो नृपः ॥ ३४ ॥

३४. भद्राः सुजातेभा एव भटा यस्य स भद्रभट एवंनामा नृपो गजबन्धदेशस्य राजा सुख्यकुतोभयत्वात्सुखितोभून्। किं कृत्वा। दूरतो दूरदेशादागत्य त्वामधिगम्य प्राप्य त्वां प्रणत्य नत्वा त्वां प्रवत्य सेवित्वेभान्हस्तिनः परितत्य विस्तार्य प्रसत्य दत्त्वा च ॥

१ बी °तेनोज°. २ ए °शार्णेश°.

१ ए श्रथ्याप्य°. २ ए °वानयोद्रि°. ३ ए विध्यो न. ४ ए किं हि°. ५ ए °श्रद्धर्भ°. ६ ए °शार्णेशं दशार्णेशा°. ७ ए मेव य°. ८ सी त्वमानेषीः. डी त्वमानै°. ९ सी °ध्वस्तनो°. १० डी °स्तनोज°. ११ बी °शि बाणा°. १२ ए °त्य रेणे. १३ ए °त्यवः ॥. १४ ए °जा सुखीश्चकु°. १५ सी °रंद°. १६ बी °णम्य न°. १७ ए °वद्य से°.

नियत्येभान्नियम्याश्वानावासे तान्प्रणम्य च ।
विरम्यास्त्राद्विरत्य त्वत्संयतो यन्तिराड्ययौ ॥ ३५ ॥

३५. यन्तिराड्यम्यादित्याशास्यमानो यन्तिः "तिक्कृतौ नाम्नि" [ ५-१-७१ ] इति तिक् । एवमन्येष्वपि रन्त्यादिषु । यन्तेर्यन्त्याख्यदेशस्य यन्तिनामा वा राड् राजा ययौ नष्टः । किं कृत्वेभानावासे हस्तिशालायां नियत्य बद्धाश्वांश्चाश्वशालायां नियम्य बद्धा गजानश्वांश्च मुक्त्वेत्यर्थः । तथा तान् गजानश्वांश्च प्रणम्य च नमोस्तु भवद्भ्य इति नमस्कृत्य चास्त्राद्विरम्य शस्त्रं मुक्त्वेत्यर्थः । त्वत्संयतो भवद्रणाद्विरत्य निवृत्य च ॥

रन्तिदेवाभ कीर्तेस्ते सत्परीतत्कलिङ्गगत् ।
नन्तिर्गन्तिस्तथा हन्तिर्वन्तिर्मन्तिः सतन्तिकः ॥ ३६ ॥

३६. हे रन्तिदेवाभ महायागकरणादिभी रन्तिदेवाख्यपूर्वराजतुल्यकलिङ्गं गच्छति कलिङ्गगत्कलिङ्गदेशाधिपः सतन्तिकस्तन्त्याख्यनृपसहितो नन्तिर्गन्तिस्तथा हन्तिर्वन्तिर्मन्तिरेवंनामा नृपौघश्च ते कीर्तेः सद्दाता त्वत्कीर्तेरुत्कीर्तक इत्यर्थः । तथा परीतद्विस्तारयिता ॥

रजयन्ति मृगान् । इत्यत्र "णौ मृग°" [ ५१ ] इत्यादिना नस्य लुक् ॥

राग । इत्यत्र "घञि°" [ ५२ ] इत्यादिना नस्य लुक् ॥

स्यदिनः । अत्र "स्यदो जवे" [ ५३ ] इति स्यदो निपात्यः ॥

१ ए °गाद्ययौ. २ ए नतिर्ग°. ३ ए बी °न्ति म°.

१ ए °तिक्. २ ए °पु । यंतयं°. ३ ए निगम्य. ४ बी बद्धान्गजा°. ५ ए निक्छत्य. ६ ए °लिङ्गगत्क°. ७ बी °नामनृ°. ८ डी त्वत्कीर्ते°. ९ ए °र्तेसत्की. १० ए °त्य वघ°.

दशने । अवोद । एध । ओद्म । प्रश्रथः । हिमश्रथ । इत्येते "दशन°" [ ५४ ] इत्यादिना निपात्याः ॥

अयतैः । अनारत । नतिम् । गतः । अन्याहतमतेः । वतिम् । ततः । अक्षत । इत्यत्र "यमिरमि°" [ ५५ ] इत्यादिनान्तस्य लुक् ॥

निहत्य । अवमत्य । प्रवत्य । परितत्य । प्रसत्य । इत्यत्र "यपि" [ ५६ ] इत्यन्तस्य लुक् ॥

नियत्य नियम्य । विरत्य विरम्य । प्रणत्य प्रणम्य । आगत्य अधिगम्य । अत्र "वा मः" [ ५७ ] इत्यन्तस्य लुग्वा ॥

कलिङ्गगत् । संयतः । परीतत् । सत् । इत्यत्र "गमां क्वौ" [ ५८ ] इत्यन्तस्य लुक् ॥

यन्ति । रन्ति । नन्तिः । गन्तिः । हन्तिः । मन्तिः । वन्तिः । तन्ति । इत्यत्र "न तिकि दीर्घश्च" [ ५९ ] इति लुक् दीर्घश्च न ॥

अजातसातिरुत्खातोयोध्येशस्ते सिषासति ।
जञ्जन्यमानभक्तीनां धुरि जाजायते च सः ॥ ३७ ॥

३७. अजातासंपन्ना सातिर्दानं यस्य स पूर्वं केनाप्यगृहीतकर इत्यर्थः । अयोध्येश उत्खातस्त्वया राज्यादुत्पाटितः संस्ते तव सिषासति दण्डं दातुमिच्छति । तथा जञ्जन्यमानमतिशयेनोत्पद्यमानं यथा स्यादेवं भक्तिर्येषां तेषां भक्तिमतां धुर्यादौ सोयोध्येशो जाजायते च बोभवीति च ॥

१ सी °जादिसा°. डी °जातिमा°. २ ए च स

१ ए एधः । ओम्रः । प्र°. २ ए °पात्या ॥. ३ ए °हत्यः । अवमन्त्यः । प्र°. ४ बी °त्यन्त्यस्य. ५ सी डी °यत् । प°. ६ बी सी डी °त्यन्त्यस्य. ७ ए यन्तिः । रन्तिः । न°. ८ ए सी डी नन्ति । ग°. ९ सी गन्ति । ह°. १० सी डी हन्ति । मन्ति । वन्ति । न°. ११ ए तिकि दी°. १२ ए °तः मन्तिस्तव°. १३ ए दातुमिच्छन्ति । त°. १४ ए °नोत्पाद्य°. १५ ए °सोपयो°. १६ ए °ते बो°.

निखन्यामन्यमानः प्राक्कोश उत्खाय सायते ।

प्राणान्मन्याः स्थितिं साया गौडेनं त्वेति जल्पता ॥३८॥

३८. गौडेन गौडदेशाधिपेन प्राक्पूर्वं निखन्य निधानीकृत्यामन्यमानोदीयमानः कोशो भाण्डागारमुत्खाय निखातादुद्धृत्य सायते तुभ्यं दीयते । किंभूतेन सता । त्वा त्वां जल्पता । कथमित्याह । हे चेदं प्राणाञ्जीवितं मन्या देयाः स्थितिमवस्थानं देशं च साया इति ॥

उत्खातः । सातिः । अजात । इत्यत्र "आः खनि" [ ६० ] इत्यादिनान्तस्यात् ॥

सिषासति । इत्यत्र "सनि" [ ६१ ] इत्यन्तस्यात् ॥

उत्खाय निखन्य । सायते सन्यमानः । जाजायते जञ्जन्यमान । इत्यत्र "ये न वा" [ ६२ ] इति वान्तस्यात् ॥ य इत्यकारान्तनिर्देशादिह न स्यात् । सन्याः । अन्यथा यीति क्रियेत ॥ केचिदत्रापीच्छन्ति । मायाः ॥

तन्यतेर्जुनवंशश्रीर्यशोब्धिष्वाव तायते ।

सातेः सन्तेः सतेश्चाग्रेगात्रा खात्रा द्विषां त्वया ॥ ३९ ॥

३९. सहस्राजुनवंशोत्पन्नत्वात्त्वयार्जुनवंशश्रीः सहस्रार्जुनान्वयलक्ष्मीस्तन्यते विस्तार्यते । यतो द्विषां खात्रोन्मूलकेन तथा सातेः सन्तेः सतेश्चैवंनामराजविशेषेभ्योग्रेगात्रा स्वामित्वादग्रेसरेण । अत एवाब्धिषु घोणते भ्राम्यत्यब्धिष्वाव यशस्तायते विस्तार्यते ॥

१ ए सी प्राक्कोश. २ बी न त्विति. ३ ए °ब्धिष्वाव. ४ अत्र "कवगकस्वरवति" [ २-३-७६ ] इति णत्वेन भाव्यमिति भाति ।

१ ए हे वेत प्रा°. २ ए °णाच्छीवि°. ३ ए सी डी °ति । अ°. ४ ए भमि इ°. ५ ए °त्खाया निखन्य । स्पेयतो । मन्य°. ६ सी न । मन्यः । अ°. ७ ए सी साया ॥. ८ ए °हस्रार्जु°. ९ सी डी ई °हस्राजु°. १० ए °ब्धिश्चावयवश°. ११ सी °ते ॥ ता°.

तायतं तन्यते । अत्र "तनः क्ये" [ ६३ ] इत्यन्तस्याद्वा ॥

सतेः । मातेः । सन्तेः । इत्यत्र "तौ सनस्तिकि" [ ६४ ] इति लुगातौ वा ॥

खान्ना । अग्रेगान्ना । घ्वाव । इत्यत्र "वन्याङ् पञ्चमस्य" [ ६५ ] इत्यात् ॥

तन्नृपापचितिह्लन्नं श्रीभीमो ह्लन्नवानिति ।
त्वामाह किमरिर्मित्रं वासि मे ह्लत्तिकृद्विधा ॥ ४० ॥

४०. तद्यस्मात्त्वं पूर्वोक्तनीत्या राजाधिराजस्तस्माद्धेतोर्नृपाणामपचितिः पूजा तया ह्लन्नं प्रमुदितं त्वां श्रीभीमो ह्लन्नवान्प्रमुदितः सन्नित्येवमाह । यथासि त्वं मे किमरिर्मित्रं वा द्विधा शत्रुत्वमित्रत्वरूपाभ्यां द्वाभ्यामपि प्रकाराभ्यां त्वं मे ह्लत्तिकृदाह्लादक इति ॥

अपचिति । इत्यत्र "अपाद्°" [ ६६ ] इत्यादिना चिः ॥

ह्लन्नम् । ह्लन्नवान् । ह्लत्ति । इत्यत्र "ह्लाद°" [ ६७ ] इत्यादिना ह्लद् ॥

वितीर्णवानथ नयानुत्तीर्णं लूनसंशयम् ।
कर्णः कर्णावतीर्णिर्नु यशोलीन इदं वचः ॥ ४१ ॥

४१. अथैवं दूतोक्त्यनन्तरं कर्णः कर्णाख्यश्चेदीशो नयानुत्तीर्णं न्यायादनपेतं लूनसंशयं छिन्नसंदेहमिदं वक्ष्यमाणं वचो वितीर्णवान्ददौ । कीदृक् । यशोलीनो दानविक्रमोत्थकीर्त्याश्लिष्टोत एव कर्णावतीर्णिर्नु राधेयावतार इव ॥

अलूनिः सोमवंशः श्रीकृतलीनिर्जयत्यसौ ।
अधोलीनवतां तापं लूनवान्पूर्तिपावनः ॥ ४२ ॥

४२. असौ सोमवंशश्चन्द्रान्वयो जयति । कीदृक् । असती लूनि-

---

१ सी नरव नृ°. २ डी °पचति°. ३ ई °र्नुर्यशो°. ४ डी °कृताली°. ५ ए °वात्पूर्ति°.

---

१ ए °द्वा ॥ सेतेः. २ सी °भ्या त्व. ३ ए ई ह्लनः । ह्ल°. ४ ए °तं नून.

विच्छेदो यस्य सोल्लूनिः सदा संततस्तथा श्रिया राज्यादिलक्ष्म्या कृता लीनिराश्रयणं यस्य सः । तथा[1] पूर्त्या लोकरक्षया पावनः[2] पवित्रोत एवाधोलीनवतां शरणार्थमध[3] आश्रितानां तापं खेदं लूनवान् । योपि वंशोल्लूनिरच्छिन्नः स्यात्सोपि[4] श्रिया पत्रलम्बौन्नत्यादिलक्ष्म्या[5] कृतलीनिरत एवाधोलीनवतां तापं लूनवान्पूर्त्या[6] नभोव्याप्त्या[7] पावनश्च स्यात् ॥

पूर्णिक्षमबलैः पूर्तः पूर्तवान्क्ष्मां पुरूरवाः ।
यशोभिः पूर्णवानाशास्तत्र पूर्णेन्दुनिर्मलैः ॥ ४३ ॥

४३. तत्र सोमवंशे पुरूरवाः क्ष्मां पूर्तवानपालयत् । कीदृक्सन् । पूर्णौ पूरणे व्याप्तौ पालने वा क्षमाणि समर्थानि यानि बलानि सैन्यानि तैः[8] पूर्तः परिपूर्णः । शिष्टं स्पष्टम ॥

भयं छिन्नेन्द्रशक्तेर्द्योर्नघुषश्छिन्नवानिह ।
मूर्तो नु तेजसां राशिः क्षात्रो धर्मो नु मूर्तवान् ॥ ४४ ॥

४४. इह सोमवंशे नघुषो[9] नाम नृपो द्योः[10] स्वर्गस्य भयं निर्नाथत्वजां भीतिं[11] छिन्नवानिन्द्रीभूयापजेहे[12][13] । कीदृश्याः । छिन्ना वृत्रदैत्यस्य मित्रीकृतस्य विश्वस्तस्य पृष्ठलग्नया[14] हत्यया[15]योच्छेदितेन्द्रस्य[16] शक्तिः प्रभुत्वं यस्यां तस्याः । यतः कीदृक् । मूर्तस्तेजसां राशिर्नु तथा मूर्तवान्क्षात्रो

१ ए °शक्तर्घोनर्घुप°.

१ सी °था मर्त्या. २ बी °वनं प°. ३ सी डी °रणार्थं°. ४ ए °स्याशोपि. ५ डी °लम्बौन्न°. ६ ए °वान् पा°. ७ सी पूणव्या°. डी पूर्णव्या°. ८ ए तैप्पर्तः. सी डी तैः प°. ९ All Mss. write this name as नघुष here while they write it as नहुष in the sixth canto. १० ई द्योः सर्ग°. ११ ए भीति छि°. १२ ए °निद्रीभू°. १३ सी डी °जहें । की°. १४ ए °ग्नवाह°. १५ सी डी °त्यया छेदि°. १६ ए °योच्छादि°.

धर्मो नु । अत्यन्तं प्रतापी विक्रान्तश्चेत्यर्थः ॥ अयं च नघुषवृत्तान्तः षष्ठे सर्गे पञ्चत्रिंशे वृत्ते प्रागेवोक्त एव ॥

रणाप्रमत्तान्दुर्मत्तवतः मूनानयानिह ।
अदूनो दूनवान्दैत्यान्भरतः मूनवान्यशः ॥ ४५ ॥

४५. इह सोमवंशे भरतो नाम नृपोदूनोनुपतप्तः सन्दैत्यान्दूनवाञ्जघानेत्यर्थः । किंभूतान् । रणाप्रमत्तान्संग्रामे सोद्यमान्दुर्मत्तवतो दुष्टमदानत एव सूनानयाञ्जनितान्यायानत एव यशः सूनवानुत्पादितवान ॥

अनिद्राणवतः शत्रूननिद्राणोत्र वृक्णवान् ।
वृक्णपापो ध्यातधर्मः ख्यातः पूतो युधिष्ठिरः ॥ ४६ ॥

४६. स्पष्टः ॥

पूनावाद्यूनयज्ञाग्नेः समक्नाविन्द्रतक्षकौ ।
पात्रोदक्ताहुतेर्यस्मादभूत्पारीक्षितोत्र सः ॥ ४७ ॥

४७. अत्र सोमवंशे परीक्षितः परीक्षितेर्वापत्यं पारीक्षितोर्जुनप्रपौत्रो जनमेजयो नाम राजाभून । यस्मात्पारीक्षितात्सकाशान्मृत्युभयेनेन्द्रतक्षकौ समक्नौ मिलितौ सन्तौ पूनौ नष्टौ । यत आद्यूनः सर्पकुलकोटिभक्षकत्वेनौदरिको यज्ञाग्निर्योगवह्निर्यस्य तस्मात्तथा पात्रादाहुतिभाजनात्स्रुच उदक्तोद्धृताम्नीकार्पिप्रार्थनयोत्ताग्नितेत्यर्थः । आहु-

१ डी °त्तान्दूर्म°. २ ए °र्मनव° ई °र्मनव°. ३ ए °क्णमापो ध्यायत°. ४ ए सी पूतावा°. ५ ए °ज्ञाग्ने: स°.

१ सी °धमनान्दु°. २ बी सी डी °यो रा°. ३ ए °मक्नो मि°. सी डी °मक्तां मि°. ४ सी पादड्ड°.

तिरिन्द्रतक्षकरूपं हव्यं येन तस्मात् ॥ किल जनमेजयस्तक्षकाहि-[1] दंशेन पितरि मृते[2] सर्पेषु क्रुद्धः सर्पहोतव्यं यागं प्रकृतवांस्तत्र[3] च यागे याचकस्येच्छायां[4] पूरितायामेवाहुतिरग्नौ क्षिप्यत इति विधिः । इतश्च[5]-र्त्विग्भिः केषुचित्सर्पेषु[6] हुतेषु तक्षको[7] भीत इन्द्रं शरणीचक्रे तज्ज्ञात्वा-तिकुपितेन जनमेजयेन सेन्द्रस्यापि तक्षकस्याह्वनायादिष्टा यायजूका यावन्मन्त्रैराकृष्य तक्षकेन्द्रावाहुतिस्रुचि न्यवेशयंस्तावदास्तीकर्षिर्यज्ञ-वाटकाद्बहिरर्थी सन्वेदं जगौ तं श्रुत्वा जनमेजयः प्राह । यदसौ मुनिर्याचते तद्दत्त्वाहुतिरग्नौ क्षिप्यतां ततस्त्वं[8] किं याचस इत्युक्तोसौ मुनिराह । या काचिदधुनाहुतिरग्नौ होतुमारब्धास्ति सैव मह्यं दीयता-मिति निर्बन्धात्तेनोक्ते यदा यज्ञाग्नितः साहुतिरुत्तारिता तदा तदाजातमिवात्मानं मन्यमानौ[9] तौ झगिति पलायिताविति पुराण-विदः ॥

क्षीणद्यूतास्तथेहान्येप्यसिनग्रामतेजसः ।
अद्याप्यक्षीणवन्तो[1] नु यशोभिः क्षितवर्जितैः ॥ ४८ ॥

४८. तथेह सोमवंशेन्येपि नृपाः क्षितवर्जितैरक्षयैर्यशोभिः कृत्वा-द्यापि संप्रत्यप्यक्षीणवन्तो न्वक्षया इव जीवन्तीवेत्यर्थः[10] । यतः की-दृशाः । क्षीणद्यूता अपगतदुरोदर[11]व्यसनास्तथा सीयते स्म सिनो बद्धो ग्रासोन्यनृपतेजोभिर्ग्रसनं यस्य तत्सिनग्रासं न तथा[12]सिनग्रासमग्रस्तं तेजः प्रतापो येषां ते ॥

---

१ ए °न्तोत्थय°.

१ ए 'हिदंश°. २ बी मृत म°. ३ सी डी °त्र या°. ४ ए °कस्मेच्छा°. ५ ए °श्चत्रिभिः के°. ६ सी डी °पु हते° ७ ए °क्षका भी°. ८ डी °स्त्वं किया° ९ ई °नौ झ°. १० सी डी °वन्त एवे°. ११ ए °ररयस°. १२ ए तथाः सि°.

अवतीर्णिः[1] । अनुत्तीर्णम् । वितीर्णवान् । अल्लूनिः[2] । लून[3] । लूनवान् । लीनिः । लीनः[4] । लीनवताम् । अत्र[5] "ऋल्वादेः°" [ ६८ ] इत्यादिना तस्य नः ॥ अप्र इति किम् । पूर्ति[6] । पूर्णीत्यपि कश्चित् । पूर्तः । पूर्तवान् ॥

पूरै[7] । पूर्ण[8] । पूर्णवान् । छिन्न[9] । छिन्नवान् । इत्यत्र "रदाद्°[10]" [ ६९ ] इत्यादिना नः ॥ अमूर्छमदः इति किम् । मूर्तः[11] । मूर्तवान् । अप्रमत्तान् । दुर्मत्तवतः ॥

सूनः(न) । सूनवान् । अदून्[12] (नः) । दूनवान् । वृक्ण[13] । वृक्णवान् । इत्यत्र "सूयति°" [ ७० ] इत्यादिना नः ॥

अनिर्द्राणः[14] । अनिद्राणवंतः[15] । अत्र "व्यञ्जन°" [ ७१ ] इत्यादिना नः ॥ अख्याध्य इति किम् । ख्यातः[16] । ध्यात[17] ॥

पूनौ । आर्धून[18] । समक्नौ[19] । इत्यत्र "पूदिवि°" [ ७२ ] इत्यादिना नः ॥ नाशाद्यूं[20]तानपादान इति किम् । पूतः । धूताः[21] । पात्रोदक्ता[22] ॥

असिनग्रास । इत्यत्र "सेर्ग्रासे[23]°" [ ७३ ] इत्यादिना नः ॥

क्षीण । अक्षीणवन्तः । अत्र "क्षेः क्षी°" [७४] इत्यादिना नः क्षी[24]–आदेशश्च । अध्यार्थ इति किम् । क्षित । भावेत्र क्तः । ध्यणर्थश्च भावकर्मणी ॥

१ सी °र्तार्णि । अ°. २ ई °ल्लनि । लू°. ३ बी सी डी लूनः । लू°. ४ ए लीनिः । ली°. ५ ए °त्र ऋल्वा°. ६ सी पूर्तः पूर्त°. डी पूर्निः । पू°. ७ ए पूर्गौ । पू°. ८ ए सी डी पूर्णः । पू°. ९ ए छिन्ना । छि°. सी डी छिन्नः । छि°. १० ए °दरिति°. ११ बी मूर्त । मू°. १२ बी °दूनः । अदू° सी डी °दून । अदू°. १३ सी डी वृक्णः । वृ°. १४ ए ई °द्राण । अ°. १५ सी डी °वत् । अ°. १६ ए ख्यानम् । ध्या°. १७ सी डी ध्यानः ॥ पू°. १८ ए °धून् । स°. बी °घनः । म°. १९ ए सी °मक्तौ । द°. २० डी °धूनान°. २१ बी डी धूता । पा°. २२ बी सी डी °दक्त ॥ अ°. २३ बी सेग्रंसे. २४ बी क्षीयादे°.

अन्यून एभ्यः पूर्वेभ्यो भीमो जयति संप्रति ।
यत्र न क्षितकः कोपि क्षीणकः केवलं कलिः ॥ ४९ ॥

४९. संप्रत्येभ्यः पूर्वेभ्यः पूर्वजेभ्यः पुरूरवआदिभ्योन्यूनोहीनो भीमो जयति । यत्र भीमे सति सर्वस्य सुखितत्वान्न कोपि क्षितकः परपराभवादिना दीनः केवलं परं कलिः कलिकालः क्षीणको धर्मोदयाद्दीनः ॥

मैत्री हि सहजा सद्भिः सतामित्यावयोरिमाम् ।
अन्यथा ख्यापयन्कोस्तु क्षितायुः क्षीणसंततिः ॥ ५० ॥

५०. हि स्फुटं सतां साधूनां सद्भिः सह सहजा स्वाभाविकी मैत्रीति हेतोरावयोः सतोरिमां मैत्रीमन्यथामैत्रीप्रकारेण ख्यापयन्कः क्षीणायुः क्षीणतसंततिः क्षीणसन्तानश्चास्तु । अकृत्रिममैत्रीपवित्रयोरावयोरमैत्रीं मुमूर्षुरेव वक्तीत्यर्थः ॥

क्षीणं यद्वा स्वयं तेन किं हि तस्य क्षितेन नः ।
त्वं श्लाघाह्रीण नः पुण्यैर्ऋतं स्वाम्यनृणागतः ॥ ५१ ॥

५१. यद्वा तेनावयोर्मैत्रीमन्यथा ख्यापयता नरेण स्वयं क्षीणं महालीकोक्तिरूपतीव्रपापपातादात्मनैव क्षयं गतम् । ततश्च हि स्फुटं तस्य स्वयं क्षीणस्य क्षितेन क्षयेण नोस्माकं किं न किंचित्तत्क्षयस्य मृतमारणतुल्यत्वात्तस्मात्तद्वार्तामपि वयं न कुर्म इत्यर्थः । अथात्मानुगतमेव तात्पर्यमाह । हे श्लाघाह्रीण महापुरुषत्वात्प्रशंसया लज्जित तथा

१ बी सहजामि°. ए मन्यमि°. २ ए बी ई °ण्य ऋत°.

१ बी सी डी °भ्यः पु°. २ ए °तकोप°. ३ ए °दानो के°. ४ ए °लिः का°. सी °लिकालक्षी°. ५ बी हि रफट. ६ सी डी °हजा. ७ ई °त्रीहि हे°. ८ ए °यक्षः क्षी°. ९ ए बी ई °युः क्षितस°. १० सी °मूर्षर°. डी °मूर्षुरे°. ११ ए °यं तेन ह्रितस्य. १२ सी डी °स्माद्वा°.

ऋतं सत्यं यथा स्यादेवं स्वाम्यनृण स्वामिनो भीमस्य सर्वकार्यसंपादकत्वादनृण जीविकोपयो[1]ग[2]रूपे ऋणवर्जित दा[3]मोदर त्वं नोस्माकं पुण्यैरागतः । अर्थादत्र ॥

इति प्रश्नान्न किं ह्रीतो भीमस्त्वं ह्रीतवान्न वा ।
ह्रीणवानस्मि सौहार्दाघ्रात आघ्राणसत्पथ ॥ ५२ ॥

५२. हे आघ्राणसत्पथाङ्गीकृतसाधुमार्गेति प्रश्नात्किमरि[4]र्मित्रं वेति पृच्छया किं भीमो न ह्रीतो न लज्जितो वाथ वा त्वं[5] न ह्रीतवानस्म्यहं पुनः सौ[6]हार्दाघ्रातो मैत्र्या सामस्त्येन वशीकृतः सन्निति प्रश्नाद् ह्रीणवान् ॥

घ्रातमघ्राणमप्यत्र भीमो[1]त्रैतीति मे मनः ।
अत्राणोत्कण्ठया नुन्नं नुत्तमत्रातया मुदा ॥ ५३ ॥

५३[7]. मे मनोघ्राणमपि को मामभिपेणयतीति चिन्तयातृप्तमप्यनि[8]र्वृतमपीत्यर्थः । अत्र देशे भीम एतीति हेतोरद्य[9] त्वदागमकाले घ्रातं निर्वृतमत एवात्राणा[10]रक्षिता निरर्गला योत्कण्ठा भीमाभि[11]गमेच्छा तया नु[12]न्नं प्रेरितं तथात्रातया मुदा[13] नुत्तम ॥

अवित्तमभियाम्यद्योन्नगण्डोत्तकैररिभैः ।
राज्ञा रेवा न लङ्घ्येति लोकवि[2]न्नं तु निघ्नकृत् ॥ ५४ ॥

५४. इभैः कृ[14]त्वाद्यावित्तमविचारितं निःशङ्कमित्यर्थः । अभियामि

१ बी °मोत्रती°. २ बी °वित्त नु वि°.

१ बी °गऋ°. २ ए °परण°. ३ ए पुस्तके 'दृनस्य नाम' इति टिप्पणी ममाग्रे वर्तते. ४ ए सी °रिमित्रं. ५ ई त्व कि न. ६ ए सोहार्दा°. ७ बी सी डी ५३ म°. ८ बी °वृत्तम°. ९ बी °धत्वादा°. १० बी °रक्षनानिनिर°. ११ बी सी डी °गमनेच्छा. १२ ई °न्न त°. १३ ए °दा वुत्त°. १४ ए कृताद्या°.

भीमाभिमुखं गच्छामि । किंभूतैरुन्नौ मदक्लिन्नौ गण्डौ येषां ते य उत्तकरा मदक्लिन्नशुण्डादण्डा जात्यगजानां हि करा अपि मदं क्षरन्ति तैः । तु परं गङ्गा कर्णेन रेवा रेवाख्या नदी न लङ्घ्या वि-घ्नहेतुत्वान्नातिक्रम्येत्येवंविधं लोकविन्नं नैमित्तिकादिलोकविचारितं विघ्नकृद्भीमाभिगमनान्तरायकारि ॥

ओक्रोशे । क्षीणमंतर्तिः क्षितायुः ॥ दैन्ये । क्षीणकः क्षितकः । अत्र "वाक्रोशदैन्ये" [ ७५ ] इति वा नः ॥ अध्यार्थ इत्येव । किं तस्य क्षितेन ॥ कश्चित्तु भावेपि विकल्पमिच्छति । क्षीणं तेन किं तस्य क्षितेन ॥

अनृण । ऋतम् । ह्रीण ह्रीणवान् । ह्रीनः ह्रीतवान् । आघ्राण आघ्रातः । अघ्राणं घ्रातम् । अत्राण अत्रातया । उन्न उत्तं । नुन्नं नुत्तम् । विन्नम् अवित्तम् । अत्र "ऋह्री°" [ ७६ ] इत्यादिना वा नः ॥

गृहाणभांस्तदद्नोन्यंभगूनेपि कोपनान ।
अशुष्कपकपूगाभानिर्वाणाक्षामतेजसः ॥ ५५ ॥

५५. तत्तस्माद्धेतोर्गद्नो यद्ययं भीमे भक्तस्तत्किं भीमं नाभि-यातीत्येवं मनःखेदरहितः संस्त्वमिभान्भीमस्य प्राभृतार्थं गृहाण । किंभूतान । अशुष्कमार्द्रं पकं निष्पन्नं यत्पूगं पूगीफलं तदाभमतिरक्तम-

१ ए डी °नान् ।.

१ डी उत्तक°. २ ए °क्लिन्न शु°. ३ ए °दहा जा°. ४ ए °त्यराजा°. ५ डी हि म°. ६ सी डी °वाख्या. ७ ए रेवख्या. ८ ई °तिक्राम्ये°. ९ ए °क्रोशेः । क्षी°. १० ए °ति पक्षि°. ११ ए क्षि-कः. १२ ए ई °च्छन्ति । क्षी°. १३ सी डी °नृणः ऋ°. १४ डी °त । ही°. १५ सी डी हीणः ही°. १६ डी घ्राणः आघ्रात । अ°. १७ डी त्राणः अ°. १८ डी उत्तं । नु°. १९ ए °त्त । नुन्न नुत्तं. २० डी नुत्त । नुत्तं । वि°. २१ ए °रनूनो २२ ए निष्फन्नं. सी निष्फन्न. २३ ए °रस्कम°.

निर्वाणमक्षीणमक्षाममकृशं तेजः प्रतापो येषां तानत एवान्येभगूनेपी-तरगजपुरीषेपि कोपनानमहर्नान ॥

वातनिर्वातगमनान्वातनिर्वाणजिद्द्रयान् ।
उल्लाघानकृशान्क्षीबान्नयाश्वान्फुल्लपद्मभान् ॥ ५६ ॥

५६. अश्वान्नय भीमपार्श्वे प्रापय । कीदृशान् । वा तस्य कर्तुर्ये-न्निर्वातं निरुपहतं गमनं तद्वद्गमनं येषां तान् । तथा वातस्य यन्नि-र्वाणं गमनं तज्जिद्द्रयो वेगो येषां तान्कांश्चिद्वातवच्छीघ्रगान्कांश्चिच्च वातादप्यतिशीघ्रगानित्यर्थः । तथोल्लाघान्नीरोगांस्तथाकृशान्पीनांस्तथा क्षीवान्मत्तांस्तथा फुल्लपद्मभान्विकसितपद्मवत्सश्रीकान् ॥

संफुल्लकीर्तिं भोजस्य स्वर्णमण्डपिकामिमाम् ।
श्रीवासोत्फुल्लपद्माभां हरापरिकृशश्रियम् ॥ ५७ ॥

५७. इमां प्रत्यक्षां स्वर्णमण्डपिकां हर नय । कीदृशीम् । श्रियो लक्ष्म्या वासोवस्थानं यत्र तच्छ्रीवासमुत्फुल्लं स्मेरं यत्पद्मं तदा-भामत एवापरिकृशश्रियं स्फीतशोभाम् । तथा भोजस्य मालवाधि-पभोजराजस्य संफुल्लकीर्तिं विस्मेरां कीर्तिमिव तत्कारितत्वात् । कर्णेन हि भोजराजं जित्वा तन्मण्डपिकेयमानीतासीदिति ॥

१ ए सी °र्कीर्तिभो°. २ बी कीर्तिमिमा°. ३ ए °मिनाम्.

१ ए °पा तानवमवा°. २ ई तानेभा°. ३ सी डी °पेति को°. ४ ए °ना--॥. ५ ई °न ये°. ६ ए नद्व°. ७ ए तथाग°. ८ ए °शान्नीना°. ९ ए °न ॥ सफु°. १० ए इम प्र°. ११ ए नय । की° १२ ए सी °र्कीर्तिवि°. ई °कीर्तिं°. १३ बी °रित्वा°. १४ ए °त् । कर्ण°.

उग्रैश्च नाययोल्लाघवद्भिः प्रक्षीबितेतरैः ।
मेरुभित्ततया वित्तं स्वर्णवित्तमुपायनम् ॥ ५८ ॥

५८. जात्यत्वाद्वृंहीयस्त्वाच्च मेरुभित्ततया मेरोः खण्डमिदमिति मेरुशकलत्वेन वित्तं ख्यातं स्वर्णवित्तं स्वर्णरूपं धनमुपायनं च भीमार्थं ढौकनिकां चौष्ट्रैः कर्तृभिर्नायय । किंभूतैः । उल्लाघवद्भिर्नीरोगैस्तथा प्रक्षीबितेतरैः प्रक्षीबिता इव मत्ता इवोत्कूर्दकत्वात् प्रक्षीबिता अदान्तास्तेभ्य इतरैर्दान्तैः ॥

अदूनः । गूनः । इत्यत्र "दुगोरू च" [ ७७ ] इति न ऊश्च ॥

अक्षाम । अशुष्क । पक्व । इत्यत्र "क्षैशुषि°" [ ७८ ] इत्यादिना मकवाः ॥

निर्वाण । इति "निर्वाणमवाते" [ ७९ ] इति निपात्यम् ॥ अवात इति किम् । वातनिर्वात ॥ केचिद् वातनिर्वाण इतीच्छन्ति ॥

क्षीबान् । उल्लाघान् । कृशान् । परिकृश । फुल्ल । उत्फुल्ल । संफुल्ल । इत्येते "अनुपसर्गा°" [ ८० ] इत्यादिना क्तान्ता निपात्याः ॥ क्तवत्यपि केचित् । उल्लाघवद्भिः ॥ अनुपसर्गा इति किम् । प्रक्षीबित ॥

भित्त । इत्यनेन "भित्तं शकलम्" [ ८१ ]इति निपात्यम् । स्वर्णवित्तम् । वित्तम् । इत्येतौ "वित्तम्°" [ ८२ ] इत्यादिना निपात्यौ ॥

एतज्जुहुधि भीमस्य मित्रं मां विद्धि शाधि च ।
जहि शङ्कामेधि सज्जो निश्चिनु व्रज राध्नुहि ॥५९ ॥

५९. एतद्रजाद्युपायनं भीमस्य जुहुधि देहि । तथा मित्रं विद्धि

१ डी °रुवित्त°. २ सी वित्त°. ३ ए °यन् ॥. ४ ए °ज्जुहोधि. ५ ए °हि सङ्का°. ६ ए राध्वहि.

१ ए °त्वाद्वंदीय°. डी °त्वाद्वही°. २ ए °कां चोष्टैः. ३ सी °तास्ते°. ४ ए सी °गोरुच. ५ सी डी °ति तस्य न. ६ ए नऋश्च. ७ ए °शुपीदि°. ८ सी डी °वा इ°. ९ ए °कृशान् । फु°. १० सी डी °भ् । एतौ.

जानीहि[1] शाधि[2] च मां मित्रं भीमस्य कथयेश्च[3] । तथा शङ्कां[4] जहि[5] त्यज । तथा सज्जः प्रस्थानप्रगुण एधि भव । तथा निश्चिन्वयमस्माकं मित्रमेवेति[6] निर्णय । तथा व्रज गच्छ । तथा राध्नुहि मत्कृते भीममाराधय ॥

जुहुधि । विद्धि । इत्यत्र "हुधुटो हेर्धिः" [ ८३ ] इति धिः ॥

शाधि । एधि । जहि । इत्येते "शासम्" [ ८४ ] इत्यादिना निपात्याः ॥

व्रज । इत्यत्र "अत" [ ८५ ] इत्यादिना हेर्लुक् ॥

निश्चिनु । इत्यत्र "असंयोगादोः" [ ८६ ] इति हेर्लुक् । असंयोगादित्योर्विशेषणादिह न स्यात् । राध्नुहि ॥

यथावां तनुवः प्रीतिं तन्वोर्थान्कुर्व[1] आर्जवम् ।
तन्मः[2] क्ष्मां तनुमो मां शं कुर्मः[3] कुर्यास्तथाद्य[4] नः ॥ ६० ॥

६०. तथा[7] तं प्रकारं नोस्माकं भीमस्य मम चाद्य कुर्या यथावां प्रीतिं तनुवः कुर्वोर्थान्कार्याणि[8] तन्व आर्जवमकौटिल्यं कुर्वः[9] क्ष्मां तन्मः शत्रुजयेन विस्तारयामो मां लक्ष्मीं तनुमः[10] शं सुखं कुर्मः ॥

"अविशेषणे द्वौ चास्मदः[11]" [ २.२.१२२ ] इत्यस्मदो बहुत्वे तन्म इत्यादिषु बहुवचनम् ॥

१ ए °न्वोर्पान्कु°. २ ए °न्मः क्षां त°. ३ सी डी कुर्म कु°. ४ ए °थाद्व नः.

१ डी जानाहि. २ बी °धि गां. ३ ए ई °श्च । श°. ४ सी शङ्कामद्विषयामरित्वाशङ्काज°. ५ बी °ङ्कां मद्विषयामरित्वाशङ्कां ज°. ६ ई °त्रमिवे°. ७ सी °था प्र°. ८ ए सी डी °र्थात्कार्या°. ९ ए °र्वः क्षां त°. १० ए °नुम शं. ११ डी °स्मदाव°.

तत्तनोमि करोमीति व्याकुर्वन्नादृतोपदः ।
दामोदरोकरोद्यानं रुन्धन्क्ष्मां सत्तुरंगमैः ॥ ६१ ॥

६१. दामोदरो यानमकरोत् । कीदृक्सन् । यदुक्तं त्वया तत्तनोमि विस्तारयामि[2] करोमि विदधामीति व्याकुर्वन्कथयंस्तथादृतोपदो गृहीतप्राभृतः । तथा सत्तुरंगमैर्जात्याश्वैः क्ष्मां रुन्धन्नावृण्वन् ॥

तन्वः तनुवः । तन्मः[3] तनुमः । अत्र "वम्यविति वा" [ ८७ ] इति-ओर्वा[4] लुक् ॥ अवीति[5] किम् । तनोमि ॥

कुर्याः । कुर्वः[6] । कुर्मः । अत्र "कृगो यि च" [ ८८ ] इत्योर्लुक् ॥ अविती-त्यवे । करोमि ॥

व्याकुर्वन् । अत्र "अतः शित्युत्" [ ८९ ] इत्यस्योत्[7] ॥ उकारनिमित्तत्वेनाकारविज्ञानात्कुर्या इत्यादावुकारलोपेपि स्यात् ॥ अवितीत्येव । अकरोत् ॥

रुन्धन् । सत् । इत्यत्र "श्नास्त्योर्लुक्"[8] [ ९० ] इत्यस्य लुक्[9] ॥

अद्विषुर्नोपभीमं तं मन्त्रिणोन्येपि नाद्विषन् ।
किं त्वभ्ययुरयान्हर्षमकार्षुः[1] प्रत्युत स्तुतिम् ॥ ६२ ॥

६२. उपभीमं भीमसमीपे वर्तमाना मन्त्रिणस्तं दामोदरं नाद्विषुर्भीममस्मांश्चानापृच्छ्यैवानेनात्मबुद्ध्येदं[10] कुसंधानं कृतमिति प्रकारेण न द्वेषं चक्रुस्तथान्येपि[11] सामन्तादयोपि नाद्विषन्किं तु तमभ्ययुरभिमुखं गतास्तथा किं तु हर्षमयान्प्रापुस्तथा[12] प्रत्युत स्तुतिमकार्षुः ॥

१ सी डी °मकर्षुः.

१ डी °त् । य°. २ सी °मि वि°. ३ ए तन्वः त°. ४ ए °ति ओर्वा. ५ बी सी डी अवितीति. ६ ए कुमः । अ°. ७ ए °स्योत ॥ उ°. ८ ए श्नात्योर्लु°. ९ ए लुग् ॥. १० ए °त्मबुद्धेदं. ११ ई °न्यि त्तन°. १२ बी °था कि प्र°. सी °था किंपु प्र°. डी °था किं तु प्र°.

भीममेवाविदुर्भीममविदन्वा विडौजसम् ।
कृतार्थमागतं पौरा अन्वभूवंश्च मङ्गलम् ॥ ६३ ॥

६३. कृतार्थं कृतकार्यमागतं पत्तनसमीप आयातं भीमं पौरा भीममेव पाण्डवमेवाविदुर्जानन्ति स्म विडौजसं[2] वेन्द्रं[3] वाविदंस्तथा मङ्गलं प्रावेशिकं नगरशोभादिमङ्गलकर्मान्वभूवंश्च[6] समवेदयंश्च[7] चक्रुश्चेत्यर्थः ॥

अद्विपुः अद्विपन् । अभ्ययुः अर्यान् । इत्यत्र "वा द्विष" [९१] इत्यादिनानो वा पुम् ॥

अकार्षुः । अविदुः । अत्र "सिज्विदोभुवः" [९२] इति पुस् ॥ अविदन्नित्यपि कश्चित् । अभुव इति किम् । अन्वभूवन् ॥

नृपागममशासुर्ये तथैभ्योजुहवुर्जनाः ।
नादरिद्रुर्यथाजक्षुरचकासुरजागरुः ॥ ६४ ॥

६४. ये नरा नृपागमं भीमागमनमशासुरभणंस्तेभ्यो जनाः पौरास्तथाजुहवुर्ददुर्यथा नादरिद्रुर्दरिद्रा नाभूवन्नित्यर्थः । अत एवाजक्षुर्बुभुजिरे सविलासा जहसुर्वाचकासुर्दिव्यवस्त्रादिना रेजुस्तथाजागरूरुन्निद्रा बभूवुः ॥

अजुहवुः । अजक्षुः । अदरिद्रुः । अजागरुः । अचकासुः । अशासुः । अत्र "द्व्युक्त" [९३] इत्यादिनानः पुस् ॥

---

१ ए नृपाग°. २ ए °भ्योजह°. ३ सी डी °जुजु°. ४ बी सी °जागुरुः.

---

१ ई °जमिन्द्रं. २ ए °म मिन्द्र. ३ सी वेन्द्रवा°. ४ ए वाविदस्त°. ५ ए °ङ्गमं प्रा°. ६ ए °मादिन्व°. ७ ए °व समव°. ८ ए अजान. ९ ए °ति वुस. १० डी °मम°. ११ ए °थाजह°. १२ सी डी °जुहु°. १३ बी °दुयथा. १४ ए °रिद्री°. १५ सी जहसु°. १६ ए °थाजाग°. १७ सी डी °जुहुवुः. १८ °रिद्रः । अ°. १९ ए °कासुः । अ° २० सी अत्र. २१ ए °त्र सुक्त.

शासद्भिभ्रद्भुवं भीमो विशन्स्त्रैणान्युदैक्षत ।
दृशं ददन्ति जक्षन्ति वाचं ददति जक्षति ॥ ६५ ॥

६५. भुवं शासद्रक्षन्बिभ्रत्पोपयन्भीमो विशन्पुरं प्रविशन्सन् स्त्रैणान्युदैक्षत । कीदृंशि । दृशं चक्षुर्ददन्ति भीमदर्शनाय भीमाभिमुखं क्षिपन्ति सन्ति जक्षन्ति रूपातिशयोत्थहर्षाद्धसन्ति । तथा वाचं ददति भीमरूपातिशयवर्णनायान्योन्यं वचनं वितरन्ति सन्ति जक्षति हर्षान्मिथो हसन्ति ॥

बिभ्रत् । शासत् । इत्यत्र "अन्तो नो लुक्" [ ९४ ] इति नस्य लुक् ॥

ददति ददन्ति । जक्षति जक्षन्ति । अत्र "शौ वा" [ ९५ ] इति नस्य वा लुक् ॥

तस्यादरिद्रल्लावण्यं प्रीणत्प्रविशतस्तदा ।
मिमते स्म न पौर्योपि मिमीतामितरः कथम् ॥ ६६ ॥

६६. तस्य भीमस्य तदा प्रविशतो लावण्यं सौन्दर्यं पौर्योपि वैदग्ध्येन प्रसिद्धा नागरिकां अपि न मिमते स्म । एतावदिदमिति न परिच्छिन्दन्ति स्म । यतोदरिद्रत्प्रचुरं तथा प्रीणत्सर्वलोकान्हर्षयत्त-स्मादितरो ग्राम्यस्त्रीलोक: कथं मिमीताम् ॥

स प्रीणीते स्म दत्ते स्म धत्ते स्म च तथा श्रियम् ।
दरिद्रितः स्म न यथा बिभितः स्म न रोदसी ॥ ६७ ॥

६७. स भीमस्तथौचित्यरूपेण तेन प्रकारेण श्रियं प्रीणीते स्म या-

१ ए तस्माद॰. २ सी डी ॰रिद्रन:. ३ ए ॰द्रित स्म.

१ सी डी ॰शन्प्र॰. २ ए ॰णान्येद॰. ३ ए कीदृशि. ४ ए ॰भिम्वखं क्षिपनि म॰. ५ सी डी ॰खं विक्षि॰. ६ बी ॰न्ति यक्ष. ७ ई विरमन्ति. ८ ए सी ॰क्षन्ति ह॰. ९ ए ॰त्र सौ वा. १० ए ॰काश्चपि. ११ ए ॰थात्प्रीण॰. १२ ए ॰थं तिमी॰.

नयामि । नयावः । नयामः । अत्र "मव्यस्याः" [ ११३ ] इत्यस्यात् ॥

भुवि संविद्रते ये च दिवि संविदते च ये* ।
समशेरत तेप्यस्याग्रे नैव निरचिन्वत ॥ ८० ॥

८०. ये नरा भुवि संविद्रते व्याकरणतर्कधातुवादादिशास्त्राणि सम्यग्जानते ये च देवा दिवि संविदते तेप्यस्य कर्णस्याग्रे समशेरत प्रज्ञातिशयादनेनापूर्वप्रश्नादौ कृते तदुक्ते वा निर्लोठिते संशयं चक्रुर्नैव निरचिन्वत न निर्णिन्युः । एतेनास्य सर्वेभ्योपि विद्वत्तोक्ता* ॥

निरचिन्वत । इत्यत्र "अनत" [ ११४ ] इत्यादिनान्तोर्त् ॥

समशेरत । इत्यत्र "शीङो रत्" [ ११५ ] इत्यन्तो रत् ॥

संविद्रते । संविदते । अत्र "वेत्तेर्न वा" [११६ ] इत्यन्तो रद्वा ॥

न वेद विद्व विद्माथ न वेत्थ विदथुर्विद ।
नास्याग्रे वेद विदतुर्विदुः केत्रेति नाब्रुवन् ॥ ८१ ॥

८१. अत्र कर्णविषये के नरा नाब्रुवन । किमित्याह । अस्य कर्णस्याग्रेहं न वेद न वेद्म्यावां न विद्व वयं न विद्म । अथ तथा न त्वं वेत्थ न वेत्सि युवां न विदथुर्यूयं न विद किंबहुनान्योपि कोपि न वेद न वेत्ति कावपि न विदतुः केपि न विदुरिति ॥

१ ए °विद्रित. २ ए विदित. ३ ए वेत्थं वि°. ४ ए °स्यायं वे°. ५ ए °विंपुः के°. ६ ए नाब्रुव°. * सी पुस्तके 'च ये' इत्येतदारभ्य 'विद्वत्तोक्ता' इत्येतदन्तग्रन्थस्याक्षराणि लेखकप्रमादाद्व्युत्क्रमवन्ति जानानीति दृश्यते.

१ ए सी डी ई इत्यान. २ बी ये च न°. ३ ए कमस्या°. ४ सी °पूर्वे प्र°. ५ ए °णिन्यु । ए°. ६ ए °न्तोना म°. ७ ए वेनेर्न. ८ ए नाब्रुव°. ९ डी °वत् । कि°. १० ए °थपत°. ११ ए वेत्स न.

इन्दुर्दस्रौ हुताशाः स्म वेत्ति वित्तो विदन्त्यमुम्।
वेत्सि वित्थो वित्थ वेद्मि विद्वो विद्म इतीरिणः ॥ ८२ ॥

८२. अमुं कर्णमिन्दुर्वेत्ति स्म। दस्रौ नासत्यौ वित्तः स्म। हुताशा दक्षिणाहवनीयगार्हपत्याख्याग्निस्रोऽग्निदेवता विदन्ति स्म। किंभूताः सन्तः। वेत्सि वित्थो वित्थ वेद्मि विद्वो विद्म इतीरिणः। इन्दो त्वममुं वेत्सि स आह वेद्मि दस्रौ युवां वित्थस्तावाहतुर्विद्वो हुताशा यूयं वित्थ तेऽप्याहुर्विद्म इत्येवं मिथोवादिनः। एतेनायं स्वर्गेपि प्रसिद्ध इत्युक्तम्॥

वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। वेत्ति। वित्तः। विदन्ति। वेत्सि। वित्थः। वित्थ। वेद्मि। विद्वः। विद्मः। अत्र "तिवाम्" [११७] इत्यादिना तिवादीनां णवादय आदेशा वा॥

न तथाग्रे ब्रुवन्ति स्म ब्रूतः स्म स्म ब्रवीति वा।
नाहुराहतुराहापि यथासौ सत्यमुक्तवान्॥ ८३ ॥

८३. यथासौ कर्णः सत्यमुक्तवांस्तथाग्रे पूर्वं न कोपि ब्रवीति स्म कावपि न ब्रूतः स्म केपि न ब्रुवन्ति स्म। तथा वर्तमानकालेपि न कोप्याह न कावप्याहतुर्न केप्याहुः॥

१ ए ताशा स्म. २ सी डी स्म ब्र°. ३ ई स्म ब्रवी°.

१ सी डी दक्षगा°. २ ए °नीयगा°. ३ ए सी भूता स°. ४ ए विद्रो वि°. ५ ए युवां वित्थः वि°. ६ ए °स्तादाह°. ७ ए °दिना। ए°. ८ ए °त्ति। वेत्तः. ९ ए वित्थ। वित्थः। वे°. सी वित्था। वे°. १० बी वामेत्या°. ११ ई °पि ब्रवी°. १२ ए न ब्रुवान्ते स्म. १३ सी डी °ले न. १४ ए कोप्योह. १५ ए केणाहुः.

यथा[1]ऽहथुः शिवा[2]विन्द्रौ ब्रू[3]थः कृष्ण ब्रवीषि च ।
ब्रह्मन्नात्थ तथासावित्याख्यत्तं दिवि नारदः ॥ ८४ ॥

८४. तं कर्णं दिवि शिवादीनां पुरो नारद आख्यत् । कथमित्याह । शिवश्च शिवा च हे शिवौ यथा यादृशममुं कर्णं युवामाहथु[1]र्वर्णयथ इत्यर्थः । तथा हे इन्द्रौ शचीन्द्रौ[2] यथामुं युवां ब्रूथो हे कृष्ण यथा[3]मुं त्वं ब्रवीषि च हे ब्रह्मन् यथामुं त्वमात्थ तथा तादृशोसौ कर्ण इति ॥

आह । आहतुः । आहुः । आत्थ । आहथुः । ब्रवीति । ब्रूतः । ब्रुवन्ति[4] । ब्रवीषि । ब्रूथः । अत्र "ब्रूग°" [ ११८ ] इत्यादिना पञ्चानां[5] तिवादीनां[6] पञ्च णवादयो[7] वा तत्संनियोगे ब्रूग आहश्च ॥

जयताज्जय जयतु विजयेतां भुजौ च[4] ते ।
राजेते यावदर्केन्दू जगौ[8] तत्रेत्यृषिव्रजः ॥ ८५ ॥

८५. ऋषिव्रजस्तत्र कर्णविषये जगावाशिषो ददौ । कथमित्याह । यावदर्केन्दू राजेते तावद्भवांस्त्वं वा जयतात्त्वं जय भवाञ्जयतु ते तव भुजौ च विजयेतामिति ॥

भजेथे स्म पुरा यत्तद्भजे[5]थां माधुना धनुः ।
भजेतं कर्णपादावित्यूचुस्तदरयो भुजौ ॥ ८६ ॥

८६. तदरयः कर्णारयो भुजौ स्वबाहू ऊचुः । कथमित्याह । हे

१ डी °थाहेथुः. २ ए °विद्रौ ब्रू°. ३ सी डी ब्रूथ कृ.° ४ डी च तौ । रा°. ५ ए डी °जेथा माधुमा ध°.

१ सी डी °हतुर्वर्णयथा इ°. २ बी °न्द्रौ अमुं. ३ ए सी °थामु त्वं. ४ सी °न्ति । ब्रवी°. ५ सी पञ्च ण°. ६ ए °नां वेति°. ७ बी सी डी °दयस्तत्सं°. ८ ए जगां वा°.

भुजौ पुरा यद्धनुर्युवां भजेथे स्म रणायाश्रयेथे स्म तद्धनुरधुना कर्णे उदिते मा भजेथां किं त्वधुना कर्णपादौ युवां भजेतमिति ॥

जयतात् । इत्यत्र "आशिषि°" [ ११९ ] इत्यादिना तुह्योर्वा तातङ् ॥ पक्षे । जयतु । जय ॥

जगौ । अत्र "आतो णव औः" [ १२० ] इति णवं औः ॥

विजयेताम् । राजेते । भजेथाम् । भजेथे । अत्र "आतामाते°" [ १२१ ] इत्यादिनाते इः ॥

भजेतम् । अत्र "यः सप्तम्याः" [ १२२ ] इति-इः ॥

यदि श्रियः श्रयेयुस्त्वां श्रयेयं क्ष्माश्रितं कथम् ।
इति क्रुधेव यत्कीर्तिर्दिशो दिशमशिश्रियत् ॥ ८७ ॥

८७. यत्कीर्तिर्यस्य कर्णस्य यशो दिशः सकाशाद्दिशमशिश्रियत् । एकस्या दिशोपरदिशं ययावित्यर्थः । उत्प्रेक्षते । क्रुधेव । कथं क्रुदित्याह । यदि त्वां क्ष्माश्रितं श्रियः श्रयेयुस्तत्कथं किमहं त्वां श्रयेयं नैवेत्यर्थ इति । अन्यापि मानिनी सपत्न्याश्रितं पतिम् । यद्येता निरभिमानत्वात्त्वां सपत्न्याश्रितमपि श्रयन्ते तत्किमहमपि त्वां श्रयेयमिति कोपेनोक्त्वा दिशो दिशं श्रयति तामनुनेतुं यस्यां दिशि पतिरभिमुखो भवति कोपात्तस्या दिशो विमुखीभवन्त्यन्यां दिशं श्रयति ॥

१ ए क्रुद्धेव. २ ए °शिश्रय°.

१ ए सी °व औ ॥. २ ए °ता । रा°. ३ ए °त इ ॥ भ°. सी °त इति । भ°. ४ ए °शाद्दश°. ५ बी त्प्रेक्ष्यते. ६ सी डी °पि कामिनी. ७ ए °मानित्वां°. ८ डी °पत्न्यः श्र°. ९ सी °त्न्याश्रयते त°. १० ए °नोक्ता दि°. ११ सी दि······शो.

अयेयम् । अयेयुः । अत्र "याम्युमोर°" [ १२३ ] इत्यादिनेयमियुसौ ॥

चतुर्दशः पादः समर्थितः ॥

अयेयम् । अयेयुः । अत्र "नामिनो गुणोक्ङिति" [ १ ] इति गुणः ॥ अक्ङि-तीति किम् । श्रितम् । अशिश्रियत् ॥

नाधूनोन्नातनोत्खड्गं तेषु येबिभयुर्युधि ।
हेपयन्मल्लयोद्धृन्नामेदघ्ञागरितः श्रमे ॥ ८८ ॥

८८. युधि येबिभयुर्भीतास्तेषु भीरुषु विषये कर्णः खड्गं नातनो-द्वाताय न व्यापारयत्किं बहुना नाधूनोन्नाकम्पयदपि । एतेन क्षत्रि-योत्तमत्वोक्तिः । नन्वसौ कदापि शस्त्रश्रमाकरणेन यथाकालमनभो-जनेन च सर्वाङ्गीणमतिमेदुरत्वादस्त्रं व्यापारयितुमेव न शक्ष्यतीत्या-शङ्क्याह । नामेदन्नोपचितमेदोधातुरभूत् । कीदृक्सन् । श्रमे खड्गाद्य-भ्यासे जागरितः सदोद्यतोत एव मल्लयोद्धृन्मल्लभटान्हेपयन्पराजयेन लज्जयन् । श्रमे ह्यकिंचित्करत्वहेतुमेदोधातूपचयो न स्यात् ॥

धर्मे जजागृवानर्थे जजागर्वान्स वेत्रिणा ।
इदं व्यज्ञपि यद्द्वारि चित्रकृत्कश्चिदासरत् ॥ ८९ ॥

८९. स कर्णो वेत्रिणेदं व्यज्ञपि । कीदृक्सन् । धर्मे जजागृवान्सो-द्यमस्तथार्थे द्रव्ये जजागर्वान्स्वस्ववेलायां धर्मार्थौ साधयन्नित्यर्थः । किं

१ डी नाधुनो°. २ सी डी °र्विभयु ३ ए श्रमा ।. ४ ए °गृवान°.

१ डी °येयुः. २ ए सी पाद स°. ३ सी डी °र्विभयु°. ४ डी °पु विषयेषु क°. ५ बी बहूना. ६ सी डी नन्वभा. ७ ए ई °न म°. ८ ए बी सी डी °मेदधा°. ९ ए °भयन्पयपरा°. १० ई °तुमदो°. ११ ए बी सी डी °मेदधा°. १२ ए °वाश्वस्व°. १३ सी डी °स्ववे°. १४ ए °मार्थोसमा°. सी° मार्थो सा°.

व्यञ्जपीत्याह । द्वारि सिंहद्वारे कश्चिदज्ञायमानश्चित्रकृच्चित्रकर आसर-त्कुतोपि स्थानादाययौ ॥

स आनर्च्छ बहून्देशानदर्शच्चाद्भुतानि सः ।
यानि संचस्करुः पृथ्वीं वितरुर्यानि विस्मयम् ॥ ९० ॥

९०. स चित्रकृद्बहून्देशानानर्च्छ भ्रान्तवानत एव सोद्भुतान्याश्चर्यकारिवस्तून्यदर्शच्च । यान्यद्भुतानि पृथ्वीं संचस्कुरतिशायित्वेनालं चक्रुर्यत एव यानि विस्मयमाश्चर्यं वितरुर्ददुः । अर्थाल्लोकानाम् । एतेनासौ राज्ञोपि किंचिदद्भुतं दर्शयिष्यति तस्मात्प्रवेश्यतामिति राज्ञो वेत्रिणा ज्ञापितम् ॥

सोथानृच्छान्नृपादेशात्प्रणम्योचे कृताञ्जलिः ।
न के सस्मरुरारुस्त्वां तन्मया सर्यसेर्यसे ॥ ९१ ॥

९१. अथैवं विज्ञप्त्यनन्तरं स चित्रकृन्नृपादेशात्कर्णाज्ञयानृच्छान्नृपान्तिकमागतः सन्प्रणम्य कृताञ्जलिरूचे । यथा राजन् यस्मात्त्वां के नरा न सस्मरुः के च नारुर्नाययुः । न्यायपालकत्वौदार्यादिगुणोपेतत्वेन सर्वैरपि त्वं स्मर्योभिगम्यश्चेत्यर्थः । तत्तस्माद्धेतोर्मया सर्यसेर्यसे गम्यसे च ॥

अरार्यमाणाः सास्वर्यमाणास्तीर्त्वा नदीः क्रमम् ।
विसर्यासं शमर्यासं कीर्तिचर्च्येत्युपागमम् ॥ ९२ ॥

१ ए °ज्ञाप्रण°. २ बी माश्चय°. ३ ए नदा हृ°. ४ ए विस्मार्या°. ५ ए चेन्येत्यु°. ६ डी °त्युपोग°.

१ ए सी पृथ्वी स°. २ ए °स्करुस्ति°. ३ ए °चिदद्भु°. ४ ए °पितम्. ५ बी सी °ज्ञप्त्यन°. ६ ए °त्रकन्न°. ७ ए °पातिक°. ८ ए° सत्प्रण°. ९ ए °रुनाययुः°. १० ए णोपित°. ११ सी डी °र्योभ्यग°. १२ बी °तोमया.

९२. हे कीर्तिचेच्य । यशसोत्यर्थमुपचायक । अहमुपागमं त्वत्समीपमागतः । किं कृत्वा । अरार्यमाणा अत्यर्थं प्रसरन्तीरत एव सोस्वर्यमाणा अत्यर्थं शब्दायमाना नदीस्तीर्त्वातिविषमं बहुमार्गमुल्लङ्घ्येत्यर्थः । कस्मादित्याह । क्लमं मार्गश्रमादिकृतां ग्लानिमहं विस्मर्यासं त्वद्दर्शनेन विस्मरेयं तथा शं सुखमर्यासं प्राप्नुयामिति हेतोः ॥

दध्यां दधति वाचस्ते दध्ययन्त्यर्थिनश्च ताः ।
दिष्ट्या मय्यपि दीधित्र्यो वेवित्र्यो दधयन्तु ताः ॥ ९३ ॥

९३. हे राजंस्ते वाचो दध्यां दधीवाचरन्ति । क्विप् लोपे दधंयनं "शंसिप्रत्ययाद्" [५.३. १०५] इत्यः । माधुर्येण दध्न इवाचरणं दधति धारयन्ति । तथार्थिनश्च याचकाश्च तास्त्वद्वाचः कर्म दध्ययन्ति दानकाले माधुर्येण दधीवाचरन्तीः प्रयुञ्जते । दधिशब्दात्क्विब्बन्तोण्णिग् । तास्त्वद्वाचो दिष्ट्यानन्देन मय्यपि दधयन्तु दधीवाचरन्तु । यूयं मधुरवाग्भिर्मामप्यालपतेत्यर्थः । कीदृश्यः सत्यो दीधित्र्यो दीप्तिमत्य ओजोगुणान्विता इत्यर्थः । तथा वेवित्र्यः कान्तिगुणोपेताश्च । दीधीङ् दीप्तिदेवनोः । वेवीङ् वेतिना तुल्ये । वेतिना वींक् धातुना तुल्यर्थे वर्तेते । एतावपरपेठितौ ॥

१ डी °ध्यो विश्यो. २ प °वित्रो द°.

१ बी साश्चर्यं°. २ प °र्स्तार्व्वा इति. ३ प कस्यादि°. ४ प श सुख°. ५ सी डी क्विपि लो°. ६ ई लोपो द°. ७ डी °धन श°. ८ प बी सी °याद इ°. ई °या इ°. ९ प °रन्ती प्रयुञ्जति । द°. १० प °ब्दात्किप्पु°. ११ प सी °न्ताणिग्. १२ बी °न्दे म°. १३ प यूअ म°. १४ प °ग्भिमाम°. १५ प °त इत्य°. १६ प °गुणोचिता. १७ प °श्च । दीधीड दीप्ति°. १८ सी ल्यर्थे व°. डी °ल्यर्थे । वे°. १९ बी °पचितौ. सी °पवितौ.

वेव्यते दीध्यते लक्ष्म्या भवानग्रेधुनानया ।
यदि वेवीत दीधीतेत्यालेख्यपटमार्पयत् ॥ ९४ ॥

९४. चित्रकृदालेख्यपटं चित्रपटमार्पयद्राज्ञे ददौ । कथम् । इत्येवमुक्तिदानप्रकारेण । इत्युक्त्वेत्यर्थस्तमेवाह । हे नृपाग्रे पूर्वं भवांस्त्वं[2] लक्ष्म्या राज्यश्रिया कर्त्र्या वेव्यते[3] धीरललितनायकत्वात्काम्यते । तथा दीध्यते । अन्तर्भूतणिगर्थत्वाद् रम्यते च । अधुना सांप्रतं पुनरनयालेख्यपटस्थकन्यकया सहितां लक्ष्मीं यदि वेवीत दीधीत च । इच्छा मे यदि कामयेत[5] रमयेच्चेत्यर्थः[6] । असंजातपूर्वसपत्नीका लक्ष्मीरधुनानया ससपत्नीका यदि भवेत्तदा ममात्यभिप्रेतं स्यादिति भावः । अत्र "कामोक्तावकच्चिति" [ ५. ४. २६ ] इति कामोक्तौ गम्यमानायां सर्वविभक्त्यपवादा सप्तमी । यदि च भवानग्र इति पाठस्थाने पूर्वमेष इति पाठः स्यात्तदा सर्वापीयमुक्तिः कवेः स्यात्ततश्च पूर्वमेष कर्णो लक्ष्म्या वेव्यते दीध्यते चाधुना त्वेषोनया सहितो[9] लक्ष्मीं यदीति[10] यथार्थे । यथा वेवीत[11] दीधीत च । वर्तमानार्थेपि[12] सप्तमी दृश्यते । ततश्च यथाभिलषति[13] क्रीडयति चेति हेतोरालेख्यपटमार्पयदिति सरल एवान्वयः स्यात् । विशिष्टाम्नायविद्भिरन्यथा[14] वैतदर्थः[15] स्वयं व्याख्येयः ॥

अतनोत् । अधूनोत् । इत्यत्र "उश्नोः" [ २ ] इति गुणः ॥

अबिभयुः । ह्रेपयन् । इत्यत्र "पुस्पौ" [ ३ ] इति गुणः ॥

१ ए ई °त देधी°.

१ सी डी °मुक्तदा°. २ ए सी भवास्त्व ल°. ३ ए वेव्येते. ४ ए ई °त देधी°. ५ बी °येच्च र°. सी डी °येत् र°. ६ ए °येचेत्य°. ७ बी सी डी °वकिच्चि°. ए °वकिन्विति. ८ बी °वादः स°. ९ बी सी डी °हितां ल°. १० ए °दी य°. ११ ए ई° त देधी°. १२ ए° र्तकमा°. १३ बी ई °षते क्री°. सी डी °षयते क्री°. १४ सी डी °यवद्भि°. १५ बी ई °था चैत°.

योढून् । इत्यत्र "लघोरुपान्त्यस्य" [ ४ ] इति गुणः ॥

अमेद्यत् । इत्यत्र "मिदः श्ये" [ ५ ] इति गुणः ॥

जागरितः । अत्र "जागुः क्विति" [ ६ ] इति गुणः ॥ जजागृवान् । इत्यत्र कस्मान्न स्यात् । जागर्तेः क्वसुरनभिधानाद्भाषायां नास्तीत्येके ॥ गुणमेवेच्छन्त्येके । जजागर्वान् ॥ अपरे तु क्वसुकानयोर्गुणप्रतिषेधमेवाहुः । जजागृवान् ॥

आसरत् । अदर्शत् । इत्यत्र "ऋवर्णदृशोऽङि" [ ७ ] इति गुणः ॥

संचस्करुः । आनर्च्छ । वितेरुः । अत्र "स्कृच्छृत°" [ ८ ] इत्यादिना गुणः ॥ अकीति किम् । आनृच्छ्वान् ॥

सस्मरुः । आरुः । इत्यत्र "संयोगादृदर्तेः" [ ९ ] इति गुणः ॥

स्मर्यसे । अर्यसे । सास्वर्यमाणाः । अरार्यमाणाः । विस्मर्यास्मि । अर्यासम् । अत्र "क्ययङाशीर्ये" [ १० ] इति गुणः ॥

चेच्य । इत्यत्र "न वृद्धिश्च°" [ ११ ] इत्यादिना न गुणः ॥ केचित्त्वप्रत्यये णिगि च दध्यां दध्ययन्ति इत्यत्रापि । गुणवृद्ध्योः प्रतिषेधमिच्छन्ति । तन्मतसंग्रहार्थं क्विल्लोपे सत्यविति प्रत्यये परे गुणवृद्धी न स्यातामिति व्याख्येयम् । विति तु दधयन्तु ॥ केचित्तु दीधीवेव्योरिवर्णे यकारे वान्तस्य लुकमन्यत्र तु गुणवृद्धिनिषेधमारभन्ते । दीधिभ्यः । वेविभ्यः । दीधीत । वेवीत । दीध्यते वेव्यते ॥

१ ए °गवान्. २ ए °दरर्शत्. ३ ए अउ कृच्छृ°. ४ ए चेच । इ°. ५ ए °त्ययो णि°. ६ ए °र्थं जल्लो°. ७ ए °ति सु द°. ८ °बी रे चान्त°. ९ बी °त्र गु°. सी डी °त्र गुणनि°. १० बी °भ्यः । वीवि°. ११ ए वेध्यत.

तत्रेक्ष्य लिखितां कन्यामुत्कोभूद्राड्वाच च ।
ईदृग्रत्नं सुवै रत्नगर्भाप्येवं न चिन्तयेत् ॥ ९५ ॥

९५. तत्रालेख्यपटे लिखितां कन्यामीक्ष्यालोक्य राङ्कर्ण उत्कः कन्यां प्रत्युत्कण्ठितोभूत्तथोवाच च । यथेदृक्सर्वोत्कृष्टं रत्नं कन्यारूपमहं सुवै जनयितुं समर्था मतान्तरेणात्र समर्थनायां पञ्चमी । एवं कर्मतापन्नं रत्नगर्भाप्योस्तामरत्नगर्भा योषिदादीनि रत्नानि गर्भे यस्याः सापि भूरपि न चिन्तयेन । संभावनेत्र सप्तमी ॥

अभूत् । इत्यत्र "भवतेः सिज्लुपि" [ १२ ] इति न गुणः ॥
सुवै । अत्र "सूतेः पञ्चम्याम्" [ १३ ] इति न गुणः ॥

प्रमोमुदीति वंशः को जुहृत्या श्रियमेनया ।
बन्धुतां यन्ति के चास्या नाम तेजुहवुश्च किम् ॥९६ ॥

९६. अनया कन्यया कृत्वा को वंशः प्रमोमुदीत्यत्यर्थं प्रमोदते । यतो रूपादिगुणातिशयेन वंशस्यैव श्रियं शोभां जुहृत्या ददत्या । तथास्याः कन्यायाः के च बन्धुतां स्वजनतां यन्ति प्राप्नुवन्ति तथा ते बन्धवोस्याः किं नाम(मा)जुहवुर्ददुः ॥

अधियानस्तदेतस्या अधीयानोन्यदप्यहो ।
ब्रूह्ययानि यथा तोषं वसु ते जुहवानि च ॥ ९७ ॥

१ ई तत्रैक्ष्य. २ ए °त्रेख्य लि°. ३ ए सी डी °न्धुता य°. ४ सी डी °म् ॥ एतया. ५ ए ब्रूह्यया°. ६ ए वस्तु ते.

१ ए °न्यामेख्यालो°. ई °न्यामक्ष्या° २ डी च । ईदृ°. ३ ए °र्था गता°. ४ डी° प्यास्तां म° ५ ए बी सी डी °दी र°. ६ ए मिज्लुपि. ७ ए सूते प°. ८ ए यति प्रा°.

९७. अहो चित्रकृद्[१]स्याः कन्यायास्तद्वंशादि ब्रूहि । यतोस्यास्तद्-धियानः[२] स्मर्तुं शक्तः स्मरणशीलो वा तथान्यदपि कलाकौशलाद्यधी-यानो यथाहं तोषमयानि प्रा[३]प्रवानि तथा ते तुभ्यं व[४]सु द्रव्यं यथा जु[५]हवानि च[६] ददानि च ॥

प्रमोसुदीति[७] । इत्यत्र "थ्युक्तोपान्त्य°" [ १४ ] इत्यादिना न गुणः ॥[८]

जुहुत्या । यन्ति । इत्यत्र "ह्विण(णोः)[१०]°" [ १५ ] इत्यादिना वयौ ॥ अ[११]प्वितीति कि[१२]म् । पुं[१३]स् । अजुह[१४]वुः ॥ विन् । जुहवानि । अयानि[१५] ॥

अधि[१६]यानः । अधीयानै[१७]ः । इत्यत्र "इको वा" [ १६ ] इनि वा[१८] यकारः ॥

अकुटित्वेति राज्ञोक्तोनुत्कोटो नुवितेति सः ।
वचोनुत्कोटयन्स्माहालेखनीयकृतां वरः ॥ ९८ ॥

९८. आलेखनीयकृतां[१९] चित्रकृतां वरः श्रेष्ठ आह स्मो[२०]चे । कीदृक्सन् । अकुटित्वा[२१] कौटिल्यमकृत्वेत्युक्तरीत्या[२२] राज्ञा कर्णेनोक्तोत एवानुत्कोटोकुटिलमनस्कोत एवं[२३] वचोनुत्कोटयन्नकुटिलयन्सन्निति[२४] वक्ष्यमाणे[२५]रीत्या नुविता कन्यावंशा[२६]दे: स्तोता[२७] ॥

१ ए °यन्माहा°

१ ई °दस्या क°. २ ए °याना स्म°. ३ ए प्राप्तवा°. बी सी डी प्राप्नुवा°. ४ ए वस्तु द्र°. ५ बी जुहुवा°. ६ ए °नि वदामि च. ७ सी डी च ॥ प्र°. ८ ए °ति । अत्र. ९ बी सी डी ई थ्युक्त इ°. १० ए ह्विणोरप्वितिव्यौ इति यकारवकारादेशौ ॥ अ°. ११ डी अविती°. १२ बी सी डी ई °म् । अ°. १३ ए पुम्स अहहवुः. १४ बी सी डी ई °वुः । जु°. १५ सी °नि । अधीया°. १६ ए °यानिः । अ°. १७ बी सी डी ई °नः । अत्र. १८ बी डी ई वा यः ॥. सी वा य ॥. १९ डी ई °तां व°. २० ए स्मोवाच । की°. २१ ए °टिलस्वाकौ°. २२ ए ई °त्या क°. २३ बी डी °व च व°. २४ ए °न्नि व°. २५ ई °णया री° २६ बी °शादे स्तो°. २७ ए स्तो ॥.

अवाच्यां स्फरिकाश्र्यस्ति नाम्ना चन्द्रपुरं पुरम् ।
कंडकस्फलकस्त्रैणं धर्मानुद्विजित्प्रजम् ॥ ९९ ॥

९९. अवाच्यां दक्षिणस्यां दिशि नाम्ना चन्द्रपुरं पुरमस्ति । कीदृक् । स्फरिका स्फुरन्ती श्रीर्लक्ष्मीर्यत्र तत् । "तद्धिताक" [ ३.२.५४ ] इत्यादिना न पुंवत् । तथा कंडकानि माद्यन्ति स्फलकानि सविलासानि स्त्रैणानि यत्र तत् । तथा धर्मादनुद्विजिभ्योनुद्विजमानाः प्रजा यत्र तत् । एतेनात्रार्थकामधर्माणां संपदुक्ता ॥

अकुटित्वा । नुविता । इत्यत्र "कुटादेर्" [ १७ ] इत्यादिना प्रत्ययो ङिद्वत् ॥ अञ्णिदिति किम् । अनुत्कोटः । अनुत्कोटयन् ॥ कुटादेरिति किम् । आलेखनीय ॥ अपरे कंडस्फरस्फुलान्कुटादौ पठित्वा पाठसामर्थ्याद् ञ्णिति वृद्धिनिषेधमिच्छन्ति । कंडक । स्फरिका । स्फलक ॥

अनुद्विजित् । इत्यत्र "विजेरिट्" [ १८ ] इतीड् ङिद्वन ॥

दिशां प्रोर्णुविता कीर्त्या द्विषां प्रोर्णवितौजसा ।
राजेह जयकेशी यं स्तुतो वित्तश्च रोदसी ॥ १०० ॥

१ ए बी अपाच्या. २ सी °च्या स्पुरि°. ३ बी कड क°. ई कटक°. ४ बी °करफुल°.

---

१ बी अपाच्या. २ ए °क । स्फुरि°. ३ सी डी ई °क्ष्मी यत्र. ४ ई कटका°. ५ बी °न्ति स्पल°. ६ ए यव त°. ७ सी डी °नाथ°. ८ ए इत्योदि°. ९ डी °त्यया ङि°. १० ए अञ्जिदि°. ११ ए °त्कोटय°. डी °त्कोट । अ°. १२ ए °म् । ले°. १३ ई कटस्फ°. सी कडस्फुला°. १४ ई कटक. १५ °टका । स्फ°. १६ बी स्फरक । स्फ°. १७ ए °लका । अ°. १८ ए °रिटीति्ट.

१००. इह[1] चन्द्रपुरे जयकेशी नाम राजास्ति । कीदृक् । ओजसा प्रतापेन बलेन वा द्विषां प्रोर्णविता छादकोत एव कीर्त्या दिशां प्रोर्णुविता[2] व्यापकोत एव च यं जयकेशिनं रोदसी स्तुतः श्लाघेते वित्तश्च जानीतश्च ॥

कन्या जयति तस्यैषा मयणल्लेति नामतः ।
समीधेस्या न दध्वंसे कान्तिर्निन्ये जगन्मुदम् ॥ १०१ ॥

१०१. नामतो मयणल्लेति मयणल्लाख्यैषा[3] चित्रपटस्था तस्य जयकेशिनः कन्या पुत्री जयति सर्वस्त्रैणादुत्कर्षेणास्ति । यतोस्याः कन्यायाः कान्तिः कमनीयता समीधे दिदीपे[4] न दध्वंसे न क्षीणा । अत एवास्याः कान्तिर्जगन्मुदं हर्षं निन्ये प्रापयत् ॥

प्रोर्णुविता[5] । प्रोर्णविता । इत्यत्र "वोर्णोः" [ १९ ] इतीड्वा ङिद्वत् ॥

स्तुतः । वित्तः । अत्र "शिदवित्"[6] [ २० ] इति शिद्[7] ङिद्वत् ॥ अविदिति किम् । जयति ॥

समीधे । निन्ये । अत्र[8] "इन्ध्यसम्°" [ २१ ] इत्यादिना परोक्षा किद्वत् ॥ इन्ध्यसंयोगादिति किम् । दध्वंसे[9] ॥

यौवनेनाथ सस्वञ्जे सा विकारैर्न सस्वजे ।
नष्ट्वा याति स्मराख्यायामास्ते नंष्ट्वालिनर्मणि[1] ॥ १०२ ॥

१०२. अथ सा मयणल्ला यौवनेन सस्वञ्जे आलिङ्गिता परं

१ ए °लिमर्म°.

१ ए ई °ह पु°. २ ए प्रोर्णवि°. ३ ए °ययण°. ४ डी दिद्दीपे. ५ ए °ता । इ°. ६ ई शिदिति. ७ ए शिङ्द्वित् ॥. ८ ए अत्रेध्यस°. बी अत्रेन्धस°. ९ ए दध्वसो ॥.

सौभाग्यदर्पात्कापि वरे चित्तस्यानिवेशनाद्विकारैः मरागप्रेक्षितादिभिः स्मरविकृतिभिर्न सस्वजे । अत एव स्मराख्यायां कामप्रधानवार्तायां नष्ट्वा याति । तथालिनर्मणि सखीनां हास्यकर्मणि नंष्ट्वास्ते ॥

भक्त्वापाङ्गं भ्रुवं भङ्क्त्वा प्रेक्षते पुरुषं न सा ।
आस्ते कौमारमर्तित्वा ऋतित्वापि हि यौवनम् ॥ १०३ ॥

१०३. सा मयणल्ला पुरुषमस्यानुरूपत्वान्न प्रेक्षते । किं कृत्वा । अपाङ्गमक्षिप्रान्तं भक्त्वा कुटिलीकृत्य भ्रुवं भङ्क्त्वा च । अतश्च सास्ते । किं कृत्वा । यौवनमृतित्वापि प्रार्थ्यापि हि स्फुटं कौमारं बाल्यमर्तित्वेव । इवो लुप्तोत्र ज्ञेयः ॥

अकर्शित्वाप्यमर्षित्वापीषून्किरति मन्मथे ।
तृषित्वास्यां कृशित्वाथ मृषित्वास्थुः स्फुटं न के ॥१०४॥

१०४. के राजपुत्राः स्फुटं नास्थुः । किं कृत्वा । अस्यां तृषित्वा साभिलाषीभूयात एव कामातिरेकात्कृशित्वा कृशीभूयाथ मृषित्वा मन्मथेषूनेव क्षान्त्वा च । क सति । मन्मथे शरान्किरति क्षिपति । किं कृत्वा । अकर्शित्वाप्यतनूभूयापि बलिष्ठीभूयापीत्यर्थः । तथामर्षित्वापि । कुपित्वापीत्यर्थः । यद्यप्यतितरां स्मरः प्रहरति तथाप्यस्या अनिच्छुत्वादस्या अभिलाषुकाः सर्वेपि राजपुत्राः स्मरशरान्क्षान्त्वैवास्थुः । न कोपि प्रतीकारोजनीत्यर्थः ॥

१ ए भक्तापा°. २ ए °व भुङ्क्त्वा. ३ ए न कः

१ ए °पाकापि. २ सी °स्याविवे°. ३ ए °कारा स°. ४ ए °दिभि स्मरे° ५ ए भ्रुक्ता च. ६ ए ई °त्वा कु°. ७ ए °प्यन°. ८ ए °वास्थः । न.

वञ्चित्वालं वयो जन्मालं वचित्वेतिवादिनीः ।
वृणोम्यननुरूपं किं तर्षित्वेत्याह सा सखीः ॥ १०५ ॥

१०५. सा मयणल्ला सखीराह । कथमित्याह । हे सख्यस्तर्षित्वा तृष्णां विधायाननुरूपं स्वस्यामदृशं वरं किं वृणोमीति । यतः कीदृशीर्वयो यौवनं वञ्चित्वा । अन्तर्भूतणिगर्थो गमनार्थोत्र वचिः । ततो गमयित्वालं वरानङ्गीकरणाद्वयोतिक्रमेण सृतामित्यर्थः । एवं जन्म वचित्वालमित्येवंवादिनीः ॥

रत्नैर्ग्रथित्वा ग्रन्थित्वाञ्जेर्गुफित्वोत्पलैः स्रजः ।
पुष्पैः सान्यैश्च गुम्फित्वार्चत्युमां मुवरेच्छया ॥ १०६ ॥

१०६. स्पष्टः । किं त्वन्यैश्च पुष्पैर्मालत्यादिभिः ॥

लुचित्वा श्मश्रु लुञ्चित्वा शिरो ये तेपिरे तपः ।
ते लेखित्वा मुदित्वास्या भाविनं सत्पतिं जगुः ॥ १०७ ॥

१०७. श्मश्रु दंष्ट्रिकास्थान्केशाल्लुँचित्वापनीय शिरः शिरःस्थान्केशाल्लुँञ्चित्वा ये बौद्धादिमुनयस्तपो व्रतं तेपिरे चक्रुस्तेस्या मयणल्लाया भाविनं भविष्यन्तं सत्पतिं शोभनं वरं जगुः । किं कृत्वा ।

१ ए °लं वचि°. २ बी °ञ्जैर्गुफि°. ३ ए °ग्रजा । पुष्फरन्यै°. ४ बी. पुष्फैः सा°. ५ ए °र्चंतोमां. ६ बी °त्वा श्मश्रु.

१ ए °वचित्वा. २ सी ई वचित्वा. ३ ए बी °त्वातभू°. ४ बी ई °त्र वचिः ५ ए बी °लं बरा°. ६ बी °योरति°. ७ बी °त्यर्थ । ए°. ८ ए बी पुष्फैमा°. सी डी पुष्फैमा°. ९ ए °काम्वान्के°. १० ई °रःस्था°. ११ सी डी °क्रुस्तस्या. १२ ए °ष्यंति स°. १३ सी °त्वा । लिखत्वा. डी °त्वा । लिखि°

लेखित्वा लग्नादि गणयित्वा तथा मुदित्वा भाव्युत्कृष्टपतिलाभदर्शनेन हर्षं गत्वा । शोभनोस्याः पतिर्भविष्यतीति ज्ञानबलेनोचुरित्यर्थः ॥

मोदित्वा त्वां लिखित्वागादन्येद्युः कोपि चित्रकृत् ।
तस्या मुमुदिषोः सख्या मुमोदिष्वा स दर्शितः ॥ १०८ ॥

१०८. अन्येद्युः कोप्यज्ञातैश्चित्रकृच्चन्द्रपुर आगात् । किं कृत्वा । मोदित्वा त्वद्रूपातिशयेन हर्षित्वात्र त्वां चित्रपटे लिखित्वा ततो मुमुदिषोरनुरूपवरदर्शनाज्जिहर्षिषोर्हर्षिष्यमाणया इत्यर्थः । तस्याः मयणल्लायाः सख्या स चित्रकृत्तस्या एव दर्शितः ॥

तस्यालिलिखिषच्छ्लाघ्ये पश्यन्तीं त्वां पटे तदा ।
दिदेविषुं तां कामोस्त्रैर्देवित्वा व्यलिलेखिषत् ॥ १०९ ॥

१०९. कामो देवित्वा क्रीडित्वा वल्गित्वेत्यर्थः । अस्त्रैः शरैस्तां कन्यां व्यलिलेखिषद्विदारयितुमैच्छत् । यत आलिलिखिषद्भिरालेखितुमिच्छद्भिश्चित्रकरैः श्लाघ्ये प्रशस्ये तस्य चित्रकृतः पटे त्वां तदा पश्यन्तीं तथा दिदेविषुं त्वया सह रिरंसुम् ॥

सस्वजे सस्वञ्जे । अत्र "स्वञ्जेर्न वा" [ २२ ] इति परोक्षा वा किद्वत् ॥

भक्त्वा भङ्क्त्वा । नष्ट्वा नंष्ट्वा । अत्र "जनशोनि°" [ २३ ] इत्यादिना क्त्वा किद्वद्वा ॥

१ ए °स्या मोमुदि°. २ ए °लिपिष°. ३ बी सी डी ई श्यन्ती त्वां. ४ ए °टेस्तदा.

१ ए °तिभवि°. २ ई °तन्चित्र°. ३ डी °त्वा तद्र°. ४ ए °ष्यता इ°. ५ ए °स्या मिय°. ६ ए °खिखिष°. ७ सी डी °लपितु°. ८ सी डी °था देदिवि°. ९ ए °क्षाढा वा.

ऋतित्वा अर्तित्वा । तृषित्वा तर्षित्वा । मृषित्वा अमर्षित्वा । कृशित्वा अकर्शित्वा । वचित्वा वञ्चित्वा । लुचित्वा लुञ्चित्वा । ग्रथित्वा ग्रन्थित्वा । गुफित्वा गुम्फित्वा । इत्यत्र "ऋतृष°" [ २४ ] इत्यादिना क्त्वा किद्वद्वा ।

मुदित्वा मोदित्वा । मुमुदिषोः मुमोदिष्वा । लिखित्वा लेखित्वा । आलिलिखिषत व्यलिलेखिषत । इत्यत्र "वौ°" [ २५ ] इत्यादिना क्त्वासनौ वा किद्वत् ॥ अय्व इति किम् । देवित्वा । दिदेविषुम् ॥

त्वयास्या द्युतितं चित्ते द्योतितं च मनोभुवा ।
सद्यः प्रद्युतिता भावाः प्रद्योतितसखीजनाः ॥ ११० ॥

११०. अस्याः कन्यायाश्चित्ते त्वया द्युतितं विलसितं मनोभुवा चास्याश्चित्ते द्योतितम् । सद्यो मनोभूद्योतनानन्तरमेव भावाः स्तम्भस्वेदादयः प्रद्युतिता उल्लसितुमारब्धाः । किंभूताः । प्रद्योतितो हर्षोत्कर्षाद्विलसितुमारब्धः सखीजनो येषु ते ॥

यया न रुदितं बाल्ये क्रीडयापि न रोदितम् ।
सा स्मरार्ता प्ररुदिता प्ररोदितसखीजना ॥ १११ ॥

१११. स्पष्टः प्रायः । किंतु क्रीडया प्रीतिकौतुकेनापि । प्ररुदिता रोदितुमारब्धा ॥

द्युतितम् द्योतितम् । प्रद्युतिताः प्रद्योतित । रुदितम् रोदितम् । प्ररुदिता प्ररोदित । इत्यत्र "उति°" [ २६ ] इत्यादिनादौ क्तौ वा किद्वत् ॥

१ सी डी यथा न.

१ डी मृषित्वा. २ ए मुमोदि°. ३ सी डी लेषित्वा. ४ ए °लिष°. ५ ए °सनो वा. ६ ए अय्व इ°. ७ ए °ततान°. ८ डी °म्भखेदा°. ई °म्भश्वेदा°. ९ ए हर्षान्क°. १० ए °रब्ध स°. ११ बी °जना ये°. १२ ए सी प्राय । किं. १३ ए °यार्पाति°. १४ ए °नितः । रु°. १५ बी सी डी °तिता । रु.° ए °त । प्र°. १६ बी सी डी °दि त प्र°. १७ सी ना क्तो वा.

शयिता पविते तल्पे स्मरबाणप्रधर्षिता ।

सा पृच्छति तवोदन्तमुदग्डयितपक्षिणः ॥ ११२ ॥

११२. सा कन्योदीच्या उत्तरस्या दिशो डयिता उड्डीना ये पक्षिणस्तान्कर्णपार्श्वादमी आगता इति तवोदन्तं कुशलवार्तां पृच्छति । किंभूता सती । स्मरबाणप्रधर्षिता कामास्त्रैः परिभूतात एव पविते पवित्रे तल्पे शयिता ॥

प्रस्वेदिताप्रमेदिता धैर्याप्रक्ष्वेदितापि सा ।

न मर्षितवती तापं सेवित्वाप्यम्बुजस्थितिम् ॥ ११३ ॥

११३. सा कन्याम्बुजस्थितिं कमलपत्रशय्यायामवस्थानं सेवित्वापि तापं स्मरोद्रेकोत्थं संतापं न मर्षितवती न क्षान्तवती पद्मसेवया तस्यात्यन्तं समुल्लासात् । कीदृशी । प्रस्वेदिता सात्विकविकारोज्जृम्भणात्स्वेदं क्षरितुमारब्धा । तथा धैर्याप्रक्ष्वेदितापि धैर्येणामुक्ताप्यप्रमेदितामेदुरा कृशेत्यर्थः ॥

डयित । शयिता । पविते । प्रधर्षिता । अप्रक्ष्वेदिता । प्रस्वेदिता । अप्रमेदिता । इत्यत्र "न डीङ्°" [ २७ ] इत्यादिना क्तौ न किद्वत् ॥

मर्षितवती । इत्यत्र "मृषः क्षान्तौ" [ २८ ] इति न किद्वत् ॥

सेवित्वा । इत्यत्र "क्त्वा" [ २९ ] इति किद्वत्त्व ॥

१ डी ताप से°.

१ ई उड्डीना. २ ई °तात. ३ ए पठिते. ४ सी °वित्रे. ५ ए ई °पं न. ६ बी सी डी पद्मासे°. ७ ए °स्वेवि°. ८ सी डी °यितः । श°. ९ ए °ना क्तो न. १० ए न किं वृत्. ११ ए °ति विकि°.

स्यन्त्वा स्वेदमियं स्कन्त्वा मा गादिति सखीजनैः ।
अनास्कन्द्याभ्युपस्कद्य पयः प्रस्यन्द्य धार्यते ॥ ११४ ॥

११४. इयं कन्या स्वेदं प्रस्वेदं स्यन्त्वा क्षरित्वात एव स्कन्त्वा परिशुष्य मा गान्मा विने(न ?)शदित्यर्थः । इति हेतोः सखीजनैर्धार्यते जीव्यत इत्यर्थः । किं कृत्वा । अनास्कन्द्यापरिशुष्य[1] । स्नेहातिरेकादार्द्रहृ[2]-दयीभूये[3]त्यर्थः । अत एवाभ्युपस्कद्याभि[4]मुख्येन समीपे[5] गत्वा तथा पयो जलं प्रस्यन्द्य क्षरित्वा ॥

प्रस्यद्यालं पयः सख्यो गुधित्वालं जलार्द्रया ।
क्षुधित्वालं क्लिशित्वालमुदित्वा सेति मूर्छति ॥ ११५ ॥

११५. सा कन्या मूर्छति । किं कृत्वा । [6]उदित्वोक्त्वा । किमित्याह । हे सख्यः पयः प्रस्यद्यालं जलश्रा(स्रा)वणे[7]न सृतं तथा जलार्द्रया क्लिन्नवाससा करणेन गुधित्वालं परिवेष्टनेन सृतं तथा क्षुधित्वा बुभुक्षयालं तथा क्लिशित्वा युष्मत्क्लेशेनालमिति ॥

हृद्युषित्वा कुषित्वास्त्रं मृदित्वा[1]मूं क गच्छसि ।
अमृडित्वा[2] रुदित्वेति सख्योस्याश्चुक्रुशुः स्मरम् ॥ ११६ ॥

११६. [8]अमृडित्वासुखं कृत्वा रुदित्वा चास्याः सख्यः स्मरं चुक्रुशुः[9] । कथमित्याह[10] । रे स्मरे[11] क त्वं गच्छसि । किं कृत्वा हृद्यस्या-

१ डी °त्वामुं क. २ ए °त्वा क्रुचित्वेति संख्यास्या°.

१ डी °ध्य । श्रेहा°. २ बी °दाद्रह°. ३ ए °त्यर्थात. ४ डी °मुखेन. ५ बी °पेन ग°. ६ ई °दित्वे । कि°. ७ ए °णे निसृ°. ८ ए असृत्वित्वा°. ९ डी °क्रुशुः । क°. १० ई °ह । स्म°. ११ ए र कथं ग°. सी डी °र कथं ग°.

श्चित्त उषित्वा स्थित्वा तथाखं शरं कुपित्वा पूर्वं न्यस्तं निष्कृष्यात[1] एवामूं[2] मृदित्वा पीडयित्वेति ॥

मुषित्वेव मुमुषिषुः पृष्ट्वेव च पिपृच्छिषुः ।
विदित्वेव विविदिषुर्गृहीत्वेव[1] जिघृक्षकः ॥ ११७ ॥
सुप्त्वेव च सुषुप्सुस्तामहं[2] रुरुदिषुर्मुहुः ।
आलिख्यास्मिन्निहानीयाभूवं कृतचिकीर्षितः[3] ॥ ११८ ॥

११७–११८. अहं कृतचिकीर्षितः कृतकृत्योभूवम्[3] । किं कृत्वा मुहुर्वारंवारं रुरुदिषुस्तद्दुःखेन[4] रोदितुमिच्छुः संस्तां कन्यामस्मिन्पट आलिख्य तथेह त्वत्समीप आनीय यथा मुमुषिषुश्चोरयितुमिच्छुर्मुषित्वा मोष्यं चोरयित्वा यथा पिपृच्छिषुः[5] प्रच्छनीयं पृष्ट्वा यथा [6]विविदिषुर्जिज्ञासुर्विदित्वा ज्ञेयं ज्ञात्वा यथा जिघृक्षको ग्राह्यं गृहीत्वा यथा सुषुप्सुः सुप्त्वा कृतचिकीर्षितः स्यात् ॥

असंशिशयिषुस्त्वेशं[4] सा बुभुत्सुरबुद्ध च ।
तां भुत्सीष्ठाः कृषीष्ठास्तद्वेदभ्यां यन्नलोकृत[5] ॥ ११९ ॥

११९. सा कन्यासंशिशयिषुः[7] संशयितुमनिच्छुर्निःसंशया सती[8] त्वामेवेशं प्रियं बुभुत्सुर्ज्ञातुमिच्छुरभूदबुद्ध[9] च ज्ञातवती च मम भर्ता

१ प °पुगृही°. २ ई पुत्सुस्ता°. ३ प सी °षित ॥ अ°. ४ प °शं ता बु°. ५ प °कृतः ॥ सा.

१ प निकृष्या°. ई निःकृष्या°. २ प °वासूं मृ°. डी वामुं मृ°. ३ प कृXXXष्यं. ४ बी सी °दुखे°. ५ प °च्छिषु पृच्छनीयं. सी °च्छिषु प्र°. ६ प विवदिषुजिज्ञा°. ७ प °न्याशंसिश°. ८ ई °ती त्वात्वा°. ९ प °भूतबुद्ध.

कर्ण एवेति मनसा प्रतिज्ञातुमैच्छत्प्रतिज्ञातवती चेत्यर्थः । अतश्च तां कन्यां त्वं भुत्सीष्ठा उक्तस्वरूपामवगम्याः । तथा नलो नैषधिर्वैदर्भ्यां दमयन्त्यां विषयेकृत तत्त्वं तस्यां कृषीष्ठास्तां प्राणेश्वरीं क्रिया इत्यर्थः ॥

स्कन्त्वा । स्यन्त्वा । अनास्कन्द्य । प्रस्यन्द्य । इत्यत्र "स्कन्दस्यन्दः" [३०] इति क्त्वा किद्वन्न ॥ केचित् उपस्कद्य प्रस्यद्य इति यपः कित्त्वमिच्छन्ति । तन्मतसंग्रहार्थं क्त्वेति द्वितकारो निर्देशस्तकारादिः क्त्वेत्यर्थः ॥

क्षुधित्वा । क्लिशित्वा । कुषित्वा । गुधित्वा । अमृडित्वा । मृदित्वा । उदित्वा । उषित्वा । इत्यत्र "क्षुध०" [३१] इत्यादिना क्त्वा किद्वत् ॥

रुदित्वा । रुरुदिषुः । विदित्वा । विविदिषुः । मुषित्वा । मुमुषिषुः । गृहीत्वा । जिघृक्षकः । सुप्त्वा । सुषुप्सुः । पृष्ट्वा । पिपृच्छिषुः । अत्र "रुदविद०" [३२] इत्यादिना सन् क्त्वा च किद्वत् ॥

चिकीर्षितः । अत्र "नामिनोनिट्" [३३] इति सन् किद्वत् ॥ अनिडिति किम् । असंशिशयिषुः ॥

बुभुत्सुः । अत्र "उपान्त्ये" [ ३४] इति सन् किद्वत् ॥

अबुद्ध । भुत्सीष्ठाः । अत्र "सिज्०" [३५] इत्यादिना किद्वत् ॥

अकृत । कृषीष्ठाः । अत्र "ऋवर्णात्" [३६] इति किद्वत् ॥

१ ए कन्या त्वां भु°. २ ए °त्सीपुष्फक्त°. ३ ए °धियद्वै°. ४ ए °र्धाम्वास्तां. ५ ए र्सा° श्वरीं क्रि°. ६ ए °न्त्वा । स्यन्त्वा । अ°. ७ ए प्रस्कन्द्य. ८ ए °द्वत्त ॥ के. ९ ए बी सी डी °त् अप°. १० डी °स्कद्या प्र°. ११ ए °रादिक्त्वं°. १२ डी उषि°. १३ बी सी क्षुध् इ°. ई क्षुधिधेत्या°. १४ डी नाXXXसन्. १५ ए °दिपु वि°. १६ ए °पुः । नुषि°. १७ ए °नो अनडिति. १८ ए अनडि°. १९ ए अशंशि°. २० सी शयपु। बु°. २१ ए °यिषु। पुभु°. २२ ए °बुद्धः । भु°. २३ ए °कृतः । कृ°.

यथा समगतोमेशे श्रीः कृष्णे समगंस्त च ।
संगंसीष्ट त्वयि तथा सा शुभैः संगसीष्ट च ॥ १२० ॥

१२०. यथेशे शंभावुमा गौरी समगत संवद्धाभूद्यथा कृष्णे श्रीः समगंस्त च तथा सा कन्या त्वयि संगंसीष्ट संबद्धीभूयात्तथा शुभैः पुत्रलाभादिभिः संगसीष्ट च ॥

समगत समगंस्त । संगसीष्ट संगंसीष्ट । इत्यत्र "गमो वा [३७] इति वा किद्वत् ॥

मा ते व्याहत विघ्नोत्रेत्युक्त्वा चित्रकृति स्थिते ।
रागमन्तर्गतं राज्ञो रोमोद्गम उदायत ॥ १२१ ॥

१२१. राज्ञः कर्णस्य रोमोद्गमो रोमाञ्चोन्तर्गतं रागमुदायतासूचयत् । दोषाविष्करणं चात्र धैर्यगाम्भीर्यगुणान्वितस्य राज्ञो रागदोषस्य प्रकटनात् । क सति । चित्रकृति स्थिते । किंकृत्वा । उक्त्वा । किमित्याह । हे राजन्नत्र मयणल्लाविषये ते तव विघ्नोन्तरायो मा व्याहत मा व्याघातं कार्षीदिति ॥

व्याहत । इत्यत्र "हनः सिच्" [३८] इति सिच् किद्वत् ॥

उदायत । इत्यत्र "यमः सूचने" [३९] इति सिच् किद्वत् ॥

उपायत नृपो रत्नान्युपायंस्त च काञ्चनम् ।
अदितास्मै गृहीत्वासौ प्रास्थिताधित संमदम् ॥ १२२ ॥

१ डी °म् । आदि°.

१ बी °मो विति. २ ए कृत्वेकत्वा. सी डी कृत्वेत्युक्त्वा. ३ बी सी डी ई °ये त.° ४ ई सिच कि°. ५ बी सी डी °त । अत्र.

१२२. नृपः कर्णो रत्नानि जयकेशिना प्राभृतार्थं[1] प्रेषितांश्चित्रकरे[2]णोपढौकितान्मणीनुपायंत[3] स्वीकृतवान्काञ्चनमुपायंस्त[4] च । ततो नृपो रत्नानि काञ्चनं च गृहीत्वास्मै चित्रकृतेऽदित[5] ददौ । ततश्चासौ चित्रकृत्प्रास्थित प्राचालीत् । तथा संमदं कार्यसिद्धिजं हर्षमधित दधार ॥

उपायंत[6] उपायंस्त । इत्यत्र "वा स्वीकृतौ" [४०] इति सिच्[7] किद्वद्वा ॥

प्रास्थित[8] । अदित । अधित । इत्यत्र "इश्च स्थादः" [४१] इति सिच् किद्वत्संनियोग इकारश्च ॥

अत्रान्तरे च पुष्पेषुः[1] पुङ्खान्मार्ष्टा मृजन्निषून् ।
मार्जन्धनुरधिज्यत्वमनैषीन्[2]न्यधुवीदपि ॥ १२३ ॥

१२३. अत्रान्तरे च पुष्पेषुः स्मरो धनुरधिज्यत्वमनैषीदारोपयदित्यर्थः । न्यधुवीदपि ज्याकर्षेणाकम्पयच्च । कीदृक्सन्पुङ्खान्[9] शरपत्राणि मार्ष्टा करस्पर्शेन समारचनशीलस्तथेषून्मृजन्नुत्तेजनेन[10] निर्मलीकुर्वन् । तथा धनुर्मार्जंश्चिरम[11]व्यापारणादुद्भूतस्य रजोमलादिसङ्गस्यापनयनेन निर्मलयन् ॥

मार्ष्टा । इत्यत्र "मृजोस्य वृद्धिः"[12] [४२] इति[13] वृद्धिः ॥

मार्जन् मृजन् । इत्यत्र "ऋतः स्वरे[14] वा" [४३] इति ऋतो वा वृद्धिः ॥

---

१ प °ष्पेपुन्र्मुखान्मार्ष्टा सृज°. सी °ष्पेपुपुपान्मा°. २ प °षीन्नधु°.

---

१ प °र्थं प्रकर्षितां. २ प °रेणौप°. ३ प °य स्वी°. ४ प °वान्काञ्चमुपायं च मु°. ५ प °ते द°. डी °त आदि°. ६ सी °पायं°. ७ ई सिच कि°. ८ डी °त । आदि°. ९ प °न्पुखान्. १० सी डी °जनुत्ते°. ११ प °र्मांजश्चि°. १२ सी डी °द्धिः । मा°. १३ बी इत्यस्य वृ°. १४ प स्वरो वा.

अनैषीत्। इत्यत्र "सिचि" [ ४४ ] इत्यादिना वृद्धिः । अङ्कितीति किम् ॥ न्यधुवीत् ॥

न काप्यराङ्क्षीन्नादेवीन्नारौत्सीदिङ्गितं नृपः ।
प्रौर्णावीन्नाकृतिं नौत्क्यं प्रौर्णवीत्सोकणीत्परम् ॥ १२४ ॥

१२४. कामेन धनुषि कम्पिते स नृपः कापि शयनासनभोजनादौ नाराङ्क्षीन्नारज्यन्नादेवीजलक्रीडादिक्रीडाभिर्नाक्रीडत् । तथेङ्गितं मयणल्लारूपलेखनादिस्मरविकारचेष्टितं नारौत्सीत्स्मरोद्रेकेण धैर्यभ्रंशान्न संवृतवान । तथाकृतिं स्तम्भादिविकारान्वितमाकारं न प्रौर्णावीन्न संवृतवांस्तथौत्क्यं मयणल्लाविषयोत्कण्ठां न प्रौर्णवीत्परं केवलमकणीत्कामोत्थसंतापातिरेकेणार्तस्वरं व्यलपत् ॥

सोकाणीद्यावदज्वालीदत्सारीच्च तदुत्सुकः ।
आव्राजीदित्यवादीच्च तावन्ना जयकेशिनः ॥ १२५ ॥

१२५. स कर्णस्तदुत्सुको मयणल्लायामुत्कण्ठितः सन्यावदज्वालीत्समतात्प्सीदत एवाकाणीदार्तस्वरं व्यलपदत्सारीच्च शून्यचित्ततयालीकगतिं च चक्रे तावज्जयकेशिनो ना पुरुष आव्राजीदाययाविति वक्ष्यमाणमवादीच्च ॥

---

१ ए सी °दिगितं. २ ए °कृतं नौक्यं प्रौ°. ३ ए °त्सुका । आ°. सी °त्सुक । आ°.

---

१ ए सिचि इ°. २ ए वृद्धौ ॥ अ°. ३ ई °दिभि°. ४ ए °भिर्न्नात्तथे°. ५ ए °नाविस°. ६ ए सी °कृतिस्त°. ७ ए °थौत्त्यं म°. बी °थौक्ष्यं म°. ८ ए °त्कण्ठा न. ९ ई °पन् ॥ सो°. १० बी °दुत्सको. ११ ए °ण्ठितासत्यावदद्वतली°. १२ डी °त्समन्तादता°. १३ बी सी डी °दार्त व्य°. १४ ए सी °रीश्च शू°. १५ सी डी °कमतिं. १६ बी सी डी °तिं चक्रे च ता°.

अरौत्सीत् । इत्यत्र "व्यञ्जनानामनिटि"[1] [ ४५ ] इति वृद्धिः ॥ बहुवचनं जात्यर्थं तेनानेकव्यञ्जनव्यवधानेपि स्यात् । अराङ्क्षीत्[3] ॥ अनिटीति[4] किम् । अदेवीत् ॥

प्रौर्णावीन् प्रौर्णवीत् । इत्यत्र "वोर्णुगः सेटि" [४६] इति वृद्धिर्वा ॥

अकाणीन् अकणीत् । इत्यत्र "व्यञ्जनादेर्[5]" [ ४७] इत्यादिना वा वृद्धिः ॥

अवादीत् । आव्राजीत् । अज्वालीत् । अत्सारीन । इत्यत्र "वद०" [४८] इत्यादिनां वृद्धिः ॥

मां शसीन्मा ग्रहीत्कश्चिन्मा श्वयीदिति तर्जना ।
भर्त्रा नः प्रेषिता रत्नोपदास्ति श्रीरिव स्वयम् ॥ १२६ ॥

१२६[8]. नोस्माकं भर्त्रा[9][10] स्वामिना जयकेशिना रत्नोपदा[11] माणिक्यढौकनं[12] जात्यत्वेना[13]तिसश्रीकत्वात्स्वयं मूर्ता श्रीरिव लक्ष्मीदेवीव प्रेपितास्ति । किंभूतेन । तर्जता । कथमित्याह् । युष्मासु मध्ये रत्नोपदां मां[14] कश्चिच्छसीद्धिनीनर्श[15][16]त्तथा कश्चिन्मा ग्रहीत्तथा मा श्वयीद्युष्मत्पार्श्वादेषोपदा मा यासीदिति । अत्यादरेणैषा रक्ष्येत्यादिशतेत्यर्थः[17][18] ॥

यत्सदाजागरीः शत्रूनक्षणीः[2] साम चास्यमीः ।
नाहयीर्नाकखीस्तन्नः[3] स्वामीभान्प्राहिणोच्च ते ॥ १२७ ॥

१ ए ना. २ बी °क्षर्णा मा°. ३ ई °कस्वीस्तन्यः स्वा°.

---

१ ए °निदि इ°. २ ए °त्यर्थि नं°. ३ ए अर्वाक्षीन्. ४ डी °निटाविति. ५ ए °देरिना. ६ सी वदेरित्या°. ७ सी डी °ना वा वृ°. ८ बी सी ई ॥ भर्त्रा ज°. ९ ए भर्त्ता स्वा°. १० डी °त्रा ज°. ११ ए° पदा मा°. १२ ए °कन जा°. १३ ई जाजात्य°. १४ ई मा मा क°. १५ सी डी ई °सीन्नर्नी°. १६ ए °शस्तथा. १७ ए रक्षंत्या°. १८ सी °दिनाश°· डी दिना शपते°.

१२७. तत्तस्माद्धेतोर्नोऽस्माकं स्वामी जयकेशी ते त्वदर्थमिमान्प्राहिणोच्च। चः पूर्ववाक्यापेक्षया समुच्चये। यच्चस्माद्धेतोस्त्वं सदाजागरीरुद्यम्यभूस्तथा शत्रूनक्षणीरर्हिंसीस्तथा साम मधुरवाक्यमस्यमीश्चावोचश्च। प्रियवाक्यैः सर्वमप्यसुग्वय इत्यर्थः। तथा नाहर्याविपद्यपि नाक्रमीर्न व्यपद इत्यर्थः। तथा नाकर्षीः संपद्यपि नाहमीर्नाहृष्य इत्यर्थः। त्वं महाराजो महापुरुषश्चेति तात्पर्यार्थः॥

श्रान्तांस्तानसवीन्नागान्भाजयन्द्रून्परिच्छदः।

अभाजि तु मया देवो नायि चात्मा पवित्रताम्॥ १२८॥

१२८. परिच्छदो मम परिवारः श्रान्तान्बहुमार्गातिक्रमेण खिन्नांस्ताञ्जयकेशिप्रेषितान्नागान् गजानसवीद्वृक्षेष्ववबध्नात्। कीदृक्सन्। द्रून्वृक्षान्भाजयन्नागैः सेवयन्। मया तु मया पुनर्देवः कर्णोऽभाजि सेवितो देवसेवयात्मा पवित्रतामनायि नीतश्च। देवसेवया ह्यात्मा पवित्रः स्यात्॥

तं न नापीपटद्राजापपटन्किं तु तुष्टिमान्।

मा नागौ जहलन्मा चकलन गच्छेति चादिशत्॥१२९॥

१२९. राजा कर्णस्तुष्टिमांस्तुष्टः संस्तं जयकेशिनरं न नापीपटन्न

१ ए °यन्दृन्प°. २ सी °जि त म°. ३ ए °नाय चा°. ४ सी डी °गा हृजल°. ५ डी गच्छति.

१ बी सी डी °क्यार्थापे°. २ ए °तोस्त्व म°. ३ ए °नक्षोणर°. ४ डी °स्यमी. प्रावो°. ५ ए °वोचः प्रि°. ६ ई °थः। स्तथा. ७ ए °कपीः म°. ८ ई °पि माह°. ९ ए °र्नाद्धष्य. १० ए °र्थ.। त्व म°. ११ ए °कमन्वृत्रक्षा°. १२ डी °या पु°. १३ ए कर्णोभा°. १४ ई °र्णतुष्टि°. १५ ए °रतटिमास्तष्टः स°. १६ ए °टन्न न.

न पटुं दक्षमाख्यत्किं त्वपपटत्पटुमाख्यत् । तथा तेमादिशश्च । कथमित्याह । नागा गजा मा जह्लन ह्लिं महद्धलं मा ग्रहीषुस्ततो मा चकलन् मा मिथः कलिं ग्रहीषुस्तस्माद्गच्छ नागान्तिके याहीति ॥

मा श्वयीन् । अजागरीः । मा शमीत् । अक्षणीः । मा ग्रहीन । अम्यमीः । अह्यीः । अकखीः । इत्यत्र "न श्वि°" [ ४९ ] इत्यादिना वृद्धिर्न ॥ वकारान्तस्यापि प्रतिषेधमिच्छत्यन्यः । अमवीत ॥

अभाजि । भाजयन् । इत्यत्र "ञ्णिति" [ ५० ] इति वृद्धिः ॥

अनायि । इत्यत्र "नामिनः°" [ ५१ ] इत्यादिना वृद्धिः ॥ कलिहलिवर्जं नाम्नोपि । तेन अपीपटत् इत्यत्र वृद्धावन्त्यस्वरादिलोपे चासमानलोपित्वात्सन्वद्भावः सिद्धः ॥ कलिहलिवर्जनं किम् । मा चकलन् । मा जहलन् ॥ अन्ये तु नाम्नो वृद्धिमनिच्छन्तोन्त्यस्वरस्योकारस्यैव णिचि लोपमिच्छन्तः समानलोपित्वात्सन्वद्भावप्रतिषेधेपपटदित्याहुः ॥

अजागारि यथा मार्गे जजागार तथा स ना ।
शतं दायीव दायार्थे यावन्नादाय्युपायनम् ॥ १३० ॥

१३०. यावदुपायनं रत्नादिढौकनं तेन नादायि कर्णाय न दत्तं तावत्तेन यथा मार्गेजागार्युपायनरक्षार्थमुद्यतं तथा तत्रावासेपि स ना जयकेशिनगे जजागार । यथा शतं द्रम्मादिशतं दायी दास्यन्नधमर्णो दायार्थे दानं दायो योर्थः कार्यं तस्मिन् शतदानविषये जागर्ति ॥

---

१ ए तवा स. २ ए सी डी °दाय्युपा°. बी °दानुपा°.

१ ए °माक्षर्त्कि त्वपट° २ ए तमदिशश्च । क°. ३ ई °गा राजा. ४ ई °हृद्धलं. ५ ई °च्छन्नांगा°. ६ ए नागीन्ति°. ७ ई °ति ॥ नाश्व°. ८ बी शमीत्. ९ डी अक्षीणः । मा. १० डी °र्जXX न किम. ११ ई °नाम्नो° १२ ए °वन्त्यिस्व° १३ ए °लत । मा. १४ ए °च्छत्योन्त्य°. १५ ए °य द°. १६ ए °पि ना. १७ डी शने दा°.

अजागारि । जजागार । इत्यत्र "जागुर्ञिणवि" [ ५२ ] इति वृद्धिः ॥

दाय । शतं दायी । अदायि । इत्यत्र "आत ऐः कृञ्ञौ" [ ५३ ] इत्यैत् ॥

किं जातिप्रजना जन्ययोग्या ब(व?)ध्या बै(व?)धोद्यतैः ।
इतीभान्वीक्षितुं राजा छन्नोगात्सह वेत्रिणा ॥ १३१ ॥

१३१. इभान्वीक्षितुं वेत्रिणा सह राजा कर्णेश्छन्नो वेपपगात्रतादिना गुप्तः सन्नगात् । कस्मादित्याह । किममी इभा जातौ भद्रजातौ प्रजनो जन्म येषां ते जातिप्रजनाः किं जात्यास्तथा किं जन्ययोग्याः संग्रामार्हास्तथा किं ब(व?)धोद्यतैर्बन्धनोद्यतै राजभिर्ब(वं?)ध्या आलानयितुं योग्याः किं सुलक्षणा इत्यर्थः । इति हेतोः ॥

यत्राजनि तदावासो गजव्यूहः स चावधि ।
तत्रारामेविशद्राजा शमदोशमकात्मनाम् ॥ १३२ ॥

१३२. स्पष्टः । किं तु अवधि वृद्धः । अशमकात्मनां बलाद्यवलेपेनाशाम्यतां द्विपां शमदो दर्पभङ्गेनोपशमकः ॥

न जात्वशमि यैर्यश्चाजौ क्रीडाकाम्यरामि च ।
जयश्रीकामुकोपश्यत्तान् गजान्सोविरामकः ॥ १३३ ॥

१३३. मदोत्कटत्वाद्यैर्गजैर्जातु कदाचिदपि नाशमि सदा कुपित-

१ ए बन्धोद्यतै । इतीभीन्वी°. २ ए °गा सह. ३ बी चावधि. ४ ए °शम ये°. ५ ए °रापि च. ६ ए °त्तानाजानवि°. ७ ई °रामिकः.

१ ए °जागरि. २ ए दायः । श°. ३ सी °यीत्य°. ४ ए. कृञ्जाविल्येत्. ५ ए °क्षित्री वे°. ६ ए °र्णेच्छन्नो. ७ बी °र्होथा. ८ बी° तैव-ध° ९ ए °भिर्वृद्धा आ°. १० ए हेतो ॥. ११ सी °वलोपे°. १२ ए दोदाभिङ्ग°. ई °दो दोभंङ्ग°. १३ डी °भङ्गोप°. १४ ए जैजातु.

मेवेत्यर्थः । अत एव यैराजौ रणे क्रीडा रेणकेलिरकामि च वाञ्छिताऽरामि च युद्धेनाजौ क्रीडितं च रणे यैर्निर्व्यूढमित्यर्थः । तान् गजान्स कर्णोविरामको दर्शनादनिवर्तमानः सन्नपश्यन्नतो जयश्रीकामुकः ॥

व्यायामच्छेदकामेन तेनागामि लैतागृहे ।
दृष्टा चागामुका श्रीर्नु काप्यायामकचक्षुषा ॥ १३४ ॥

१३४. तेन कर्णेन लतागृहेगामि गतं यतो व्यायामच्छेदकामेन खेदापनोदेच्छुना । तत्र च कापि नायिका श्रीर्नु रूपाद्यतिशयेन लक्ष्मीरिवागामुकागच्छन्ती तेन दृष्टा च । कीदृशा सता । आयामके तद्दर्शनाद्विशेषेण दीर्घीभवन्ती चक्षुषी यस्य तेन ॥

नानाम्यायामि हर्षाम्भोत्राम्याचामि सुधेव च ।
उन्नामिकाभ्रुवस्तस्य दृशा निर्नामपक्ष्मणा ॥ १३५ ॥

१३५. तस्य कर्णस्य दृशाक्ष्णा नानामि न नीचैर्भूतम् । कीदृशस्य सतः । उन्नामिके अद्भुतरूपदर्शनेन विस्मयत्वादुन्नमन्त्यावूर्ध्वीभवन्त्यौ भ्रुवौ यस्य तस्य । यतः किंभूतया । रूपदर्शनभङ्गभयान्निर्नामानि निर्नमनानि निर्मीलनरहितानीत्यर्थः । पक्ष्माणि यस्यास्तया । किं त्वायामि दीर्घीभूतम । तथा हर्षाम्भ आनन्दाश्रु । अत्रामि च क्षरितं च यतः सुधेवाचामि सुखेदरूपावलोकनेनामृतमिवास्वादितम् ॥

१ बी °च्छेदिका°. २ ए लगागृ°. ३ ए डी दृष्ट्वा चा°.

१ ए °त्यथो ए°. २ सी डी रणे के°. ३ ई °रकका°. ४ ए कर्णावि°. ५ बी °के उद्भु°. ६ ए °रत्यादुन्नमत्यावू°. ७ बी सी डी °स्तथा । किं. ८ ई किं त्वया°. ९ ई °म्भयान°. १० सी डी °श्रु । आचामि. ११ ए क्षरतं. १२ ए °खलरू°.

वामाचामं सुधाचामकानां मेने चमं नृपः ।
पुलकोद्दामको दृष्ट्या तस्या लावण्यचामतः ॥ १३६ ॥

१३६. पुलकोद्दामको रोमाञ्चोद्भवान्नृपः कर्णः सुधाचामकानाममृतास्वादकानां देवानां चमं चम्यते चमः कर्मणि घञ् । भक्ष्यं सुधां वामाचामं प्रतिकूलजेमनं मेने । कस्मात् । तस्या नायिकाया दृष्ट्या दर्शनेन कृत्वा लावण्यचामतः सौन्दर्यास्वादाद्धेतोः । तल्लावण्यमास्वाद्यामृतमवाहीलयदित्यर्थः ॥

प्रजनाः । जन्य । अजनि । बध । वध्याः । अवधि । इत्यत्र "न जनवधः" [ ५४ ] इति न वृद्धिः ॥

शम । अशमक । अशमि । इत्यत्र "मोकमि°" [ ५५ ] इत्यादिना न वृद्धिः॥ कम्यादिवर्जनं किम् । कामेन । कार्मुकः । अकामि । न्यायाम । आयामक । आयामि । आरामे । अविरामकः । अरामि । निर्नाम । उन्नामिका । अनामि । आगामुकाः । अगामि । वाम । उद्वामकः । अवामि । आचामम् । आचामकानाम् । आचामि ॥ आचम इति किम् । चमम् ॥ अन्ये तु सामान्येन निषेधमिच्छन्ति । चामतः ॥

यस्यां विश्रामकं चक्षुर्मनो विश्रमकं च मे ।
सा श्रीविश्रमभूः केयं कामविश्राममन्दिरम् ॥ १३७ ॥

१ ए °न्नृपकः सु°. २ ए भक्ष्य सु°. ३ ई ततस्या. ४ ए °वण्याचा°. ५ ई °तमिवा°. ६ ए °लर्यद°. ७ ए सी °जना । ज°. ८ ई अबधि. ९ ए न द्धिः. १० डी शमः । अ°. ११ ए °मका । अ°. १२ ई °त्यत्रामो°. १३ ए °द्धिः ॥ काम्या°. १४ सी °मुक । अ°. १५ डी °म । अया°. १६ डी° मि । अ°. १७ बी °का । आगा°. १८ ए सी डी ई °मक । अ°. १९ सी डी आचाम. २० सी °मत ॥.

यया चित्रपटे व्यश्राम्यथ व्यश्रमि मे हृदि ।
दृक्पथं किल निनय तां निनायोद्यमं स्मरम् ॥ १३८ ॥
संशयोपरमायास्या रौमि रोरोत्वसावपि ।
अस्याः सखी वा रोरोतु जुहोतु मम निर्णयम् ॥१३९ ॥
वितर्क्येति यथोर्णाति ज्योत्स्नामूर्णोति चन्दनम् ।
ऊर्णोनोति मधूर्णोनौत्यमृतं स तथाब्रवीत् ॥ १४० ॥

१३७–१४०. स कर्णस्तथा तेनाह्लादकत्वसंतापापहारकत्वशैत्यमाधुर्याद्यतिशयरूपेण प्रकारेणाब्रवीद्यथा यः प्रकारो ज्योत्स्नामूर्णौत्याच्छादयति । अधः करोतीत्यर्थः । तथा चन्दनमूर्णोति तथा मधूर्णोनोति । अत्यर्थमधः करोतीत्यर्थः । तथामृतमूर्णोनौति । किं कृत्वा । वितर्क्य । किमित्याह । यस्यामित्यादि । तत्राद्यः श्लोकः स्पष्टः । किं तु विश्रामकं मुखेन स्थास्नु । तथा यया नायिकया चित्रपटे व्यश्रामि स्थितमथ तथा यया मे हृदि व्यश्रम्युषितम । किलेति संभावने । संभावयामि तां नायिकामहं दृक्पथं दृग्गोचरं निनय प्रापयं तथा

१ ए °पटे व्यश्रम्यथव्यश्र°. २ ए °नयिना. ३ सी ई अस्या म°. ४ ई यथोर्णो°. ५ डी °थोर्णानि. ६ ई °निज्योत्स्ना°. ७ डी °मृर्णानि. ८ सी डी °र्णोनाति. ९ सी डी °र्णोनोत्य°.

१ ए सी डी ई °मृर्णौत्या°. २ सी °रोनि । तथा XXXमृ°. ३ ए सी डी ई °मूर्णाति. ४ डी °धूर्णोनानि. ५ ए बी डी °रोति । त°. ६ डी °र्णोनोति. ७ सी डी नायक°. ८ ए °कन्या चि°.

किल स्मरमहमुद्यममुत्साहं निनाय कृतास्मरणे परोक्षात्र । तथास्या नायि-[1]कायाः कर्मणो यः संशयो मत्कर्तृकः संदेहस्तस्योपरमाय निवृत्तय[2] उक्तरीत्या संशय्यमाणा(ना)या अस्याः संदेहनिवृत्तय इत्यर्थः । रौ-[3]म्यहं वदाम्यसावपि नायिकापि रोरोत्वत्यर्थं वदतु । अथ वाम्याः स-[4]खी रोरोतु । ततो मम निर्णयं जुहोतु ददात्विति ॥

विश्राम विश्रम । विश्रामकम् विश्रमकम् । व्यश्रामि । व्यश्रमि । इत्यत्र[5] "विश्रमेर्वा" [ ५६ ] इति वा न वृद्धिः ॥

उद्यमम् । उपरमाय । इत्येतौ "उद्यमोपरमौ" [ ५७ ] इति निपात्यौ ॥

निनय निनाय[6] । इत्यत्र "णिद्वान्त्यो णव्" [ ५८ ] इति णव्वा णित् ॥[7]

रौमि । इत्यत्र "उत और्" [ ५९ ] इत्यादिना-औः ॥ अद्वेरिति किम् । जुहोतु । रोरोतु[8] ॥ केचिद्यङ्लुबन्तस्यापीच्छन्ति । रोरौतु ॥[9]

ऊर्णौति[10] ऊर्णोति[11] । इत्यत्र[12] "वोर्णोः" [ ६० ] इति वा-औः ॥ अद्वेरित्येव । ऊर्णोनोति ॥ यङ्लुबन्तस्यापीच्छन्त्यन्ये । ऊर्णोनौति ॥

सुभ्रु[1] त्वां मा स्म भीः प्रोर्णोत्स्वं प्रोर्णोर्मा स्म वा मयि ।
तृणेढि संशयं मूर्तिः[2] कुलं चोच्चैर्ब्रवीति ते ॥ १४१ ॥

१ ए °भ्रु मा स्म भीः प्रोर्णो न मा स्म वा प्रोर्णोस्त्व म°. २ ए सी मूर्ति कु°.

१ सी नायका°. २ ए °काया क°. ३ ए संसय्य°. ४ सी डी °शयमा°. ५ ए °श्रामः विश्रमः । व्यश्रागकं व्य°. ६ डी °य । एतौ. ७ डी निना°: ८ ए णदाणि°. सी डी णवो णि°. ९ ए °होतुः । रो°. १० डी ऊर्णोति ऊर्णौति. ११ ए °र्णां ऊ°. १२ ए °ति । अत्र°

१४१. हे सुभ्रु भीरेदृष्टपूर्वमदर्शनोत्था भीतिः कर्त्री त्वां मा स्म प्रोर्णोद्व्यापत् । मा स्म वा । वा समुच्चये । मा स्म च मयि विषये स्वमात्मानं त्वं प्रोर्णोराच्छादयेर्यथावस्थितमात्मानं प्रकटयेरित्यर्थः । यतस्ते मूर्तिराकृतिरेव संशयमद्भुतगुणत्वादिविषयं संदेहं तृणेढ्यपनयति तथोच्चैरुन्नतं कुलं वंशं ब्रवीति च । आकृतिरेव त्वदीयं स्वरूपं वंशं चोन्नतं वक्तीति तवात्मनोपह्नवो निरर्थक एव यत इत्यर्थः ॥

मा स्म प्रोर्णोत् । मा स्म प्रोर्णोः । अत्र "न दिस्योः" [ ६१ ] इति–औने ॥

तृणेढि । इत्यत्र "तृहः श्नादीत्" [ ६२ ] इति–ईत् ॥

ब्रवीति । इत्यत्र "ब्रूतः परादिः" [ ६३ ] इति–ईत् ॥

बोभवीष्यप्सराः किं किं बोभोष्युद्यानदेवता ।
यत्ते वर्वर्ति लावण्यं दिव्यतां वावदीति तत् ॥ ४२ ॥

१४२. किं त्वमप्सरा देवी बोभवीष्यत्यर्थं भवसि किं वोद्यानदेवता बोभोषि । यस्माद्यत्ते लावण्यं वर्वर्त्यतिशयेन वर्तते तल्लावण्यं ते दिव्यतां स्वर्गभवत्वं वावदीति ॥

तौषि क वंशे काम्बेति स्तौषि तातेति रौषि च ।
किं तवीष्यत्र कं वा संस्तवीषि न रवीषि किम् ॥ १४३॥

१४३. क वंशे तौषि वर्तसे । क कस्यां स्त्रियामम्बेति मातेति

१ ए °त्र किं वा सस्त°.

१ ए °रदृष्ट°. २ बी °मदर्श°. सी °मदृर्श°. ३ ए °दयोर्य°. सी °दययथा°. ४ ए दिश्योः इ°. ५ ए औनं ॥ तृ°. ६ ए °यानम्बे°.

स्तौषि वर्णयसि । वदसीत्यर्थः । तथा कस्मिंस्तातेति जनकेति रौषि च वक्षि च । तथात्रास्मिन्स्थाने किं किमिति तवीपि वर्तसे कं वा पुरुषं संस्तवीपि परिचितोपि कस्ते बन्धुरित्यर्थः । किं न रवीपि किमिति न किंचिद्ब्रवीपि ॥

बोभवीपि बोभोषि । तवीपि तौपि । रवीपि रौपि । संस्तवीपि स्तौपि । इत्यत्र "यङ्लु°" [६४] इत्यादिना वा-ईत् ॥ क्वचिन्न स्यात् । वर्वर्ति ॥ क्वचिन्नित्यम् । वावदीति ॥

कुतो वाव्यथितेवासीरकार्पीरश्रु यत्किल ।
किमासीद्दुर्लभः कोपि यस्तेकार्पीत्पदं हृदि ॥ १४४ ॥

१४४. कुतः कस्माद्धेतोस्त्वं वाव्यथितेवात्यर्थं दुःखितेवासीरभूः । ननु कथं मे व्यथा त्वया ज्ञायते तत्राह । अकार्पीरश्रु यत्किलेति । किलेति सत्ये । यदिति क्रियाविशेषणम् । यत्त्वमश्रु नेत्राम्भ्वकार्पीर्यत्त्वमरोदीरित्यर्थः । अथ व्यथाहेतुं स्वयमेवाशङ्क्य पृच्छति । यस्ते हृदि चित्ते रूपाद्यतिशयेन पदमवस्थितिमकार्पीत् स किं कोपि युवा दुर्लभ आसीत् ॥

अकार्पीत् । अकार्पीः । आसीत् । आसीः । इत्यत्र "स°" [६५] इत्यादिना-ईत् ॥

१ ए °सीचकार्पीरस्रु य°.

१ ए °मि । वेद°. २ ए °षि व°. ३ डी °पि । तौपि नवीषि । र°. ४ ए रवौषि. ५ बी यङलु. ६ ए सी ईत ॥ क°. ७ ए मे यथा. ८ बी °श्रा का°. ९ ए °रस्रु य°. १० ए °त्ये । यदि°. ११ ए °त्राभ्वकार्यय°. १२ ए अच ध्य°. १३ सी °त् ॥ XXX व पीटि°.

यच्चोलकमधास्तन्नाद्यापि कन्यात्वमत्यगाः ।
आर्तेवास्था यदत्र त्वं स्मरस्त्वां शरैरदात् ॥ १४५ ॥

१४५. यत्त्वं चोलकं कन्योचितं सर्वाङ्गीणकञ्चुकविशेषमधाः परिधानेनाधारयस्तज्ज्ञायते त्वमद्यापि कन्यात्वं नात्यगा नात्यक्रमीः । तथा यत्त्वमत्र शैत्यरम्यत्वादिसुखकारिसर्वगुणोपेतकदलीगृह आर्तेव पीडितेवास्थास्तज्ज्ञायते त्वां स्मरः शरैरदादखण्डयन् । अत्र हि स्थाने कामार्तिं मुक्त्वान्या पीडा न स्यादेवेत्यर्थः । एतेन मनोभीष्टः कोपि ते दुर्लभोस्तीति द्रढितम् ॥

अथ दुर्लभमेव नामादिना स्पष्टं पृच्छति ॥

सुभगं कं दृशापास्त्वं येन तेभूदशेदृशी ।
अङ्गोष्माश्रूण्यधासीद्यच्छ्वासोधादधरच्छविम् ॥ १४६ ॥

१४६. त्वं कं सुभगं वल्लभं दृशापा अपिबः किं नामाद्युपेतं सुभगं त्वं सतर्षमपश्य इत्यर्थः । येन सुभगेन हेतुना ते तवेदृशी दशावस्थाभूदर्तिक यदङ्गोष्माङ्गसंतापोश्रूणि नेत्राम्बून्यधासीदपाद्गण्डस्थलोपरि पतितान्यशोषयदित्यर्थः । यच्च श्वासो दुःखान्निश्वसनमधरच्छविं सरसत्वरूपामधरशोभामधादशोषयत् ॥

अथोद्यानसंभविनावन्यावपि व्यथाहेतू आशङ्क्य पृच्छति ॥

किं वा किंपाकमच्छासीरघ्रासीश्चेह दारुणम् ।
अच्छा अघ्रा अयुक्पर्णं वाथ यत्सुभ्रु दूयसे ॥ १४७ ॥

---

१ ए °त्वसत्य°. २ ए °दव त्वं. ३ ए °मीर्ष्वह. ४ ए यसुभ्रु.

१ बी डी °चितस°. २ ए °मधा प°. ३ ए °स्तद्जाय°. ४ बी डी °ते तत्त्वम°. ५ ए °त्यरगा. ६ बी डी °पेते क°. ७ ए °मार्तमु.° ८ सी °ति ॥ दु°. ९ ए यबश्वा°.

१४७. वा यद्वेहोद्याने दारुणमुग्रगन्धि किंपाकं विषवृक्षफलमे-च्छासी रम्यत्वेन कौतुकादत्रोटयस्तथाघ्रासीश्च । वाथ यद्वायुक्पर्णं सप्तच्छदपुष्पमच्छा अघ्राश्च । हे सुभ्रु यत्त्वं दूयसे कर्मकर्तरि प्रयोगोयम् । यत्त्वमेवमार्तीभवसीत्यर्थः । किंपाकफलाघ्राणं हि मूर्च्छाहेतुत्वेन सप्तच्छदपुष्पाघ्राणं चातिमदकत्वेन पीडके स्याताम् ॥

मा नरः शोत्सरो मा स्म शासीद्याधिश्च मा स्म सात् ।

हृत्स्थो माधिश्च सासीत्त्वां ब्रूहीति विभज व्यथाम् ॥ १४८ ॥

१४८. व्यथां सुभगस्मरणादुत्थां पीडां ब्रूहि ततो विभज मय्यपि विभागेन स्थापय । व्यथा ह्युक्ता निर्मलाशयत्वात्सज्जने दर्पण इव संक्रामति । स्वव्यथा निवेदकस्य लघूस्याच्च । यदुक्तम् । निवेद्य दुःखं सुखी भवतीति । कुत इत्याह । हृत्स्थस्त्वद्धृदयवर्ती नरः सुभगस्त्वां मा शाद्दुःखोत्पादनेन मा तनूकार्षीत्तथा हृत्स्थः स्मरो मा स्म शासी-त्तथा व्याधिश्च स्मरोत्थः किंपाकाद्याघ्राणोत्थो वा संतापादिस्त्वां मा स्म सान्मान्तं नैषीत्तथाधिश्च मानसी व्यथा च त्वां मा सासी-दिति हेतोः ॥

अपाः । अत्यगाः ॥ दासंज्ञ । अदात् । अधाः । अभूत् । अस्थाः । अत्र "पिबैति°" [६६] इत्यादिना सिचो लुप् ॥

अधात् अधासीत् । अघ्राः अघ्रासीः । मा शात् मा स्म शासीत् । अच्छाः

१ ए °रः स्मात्सरो. २ सी शास्मरो. ३ ए °सीश्चाधि°. ४ डी स सात्.

१ ए °णसुग्र°. २ ए °मत्सारसी. ३ डी रम्यत्वे°. ४ ए वाव य°. ५ डी °घ्रा-णे हि. ६ ए °ण हि मूर्छाहेतुत्वेन सप्तच्छदपुष्पाघ्राणं चा°. ७ ए सी °युत्था पी°. ८ सी डी मयापि. ९ ए °स्यास्व । य°. सी डी °स्यात । य°. १० बी °ध दुरकं सु°. ११ ए °कार्षं तथाद्धत्स्थः. १२ ए °थाविश्च. १३ सी अत्य°. १४ सी पिबेत्या°. १५ बी °बैत्या°.

अच्छासीः । मा स्म सात् मा सासीत् । इत्यत्र "ट्धेशा°" [६७] इत्यादिना वा सिचो लुप् ॥

अथ प्रथममाशङ्कितं कं चित्सुभगमेतेनापि स्त्रीरत्नेनाभिलष्यमाणतया धन्यं मन्यमानोसौ श्लोकद्वयेन स्तौति ॥

तीर्थेतत स किं दानमतनिष्ट तपः स किम् ।
अतनिष्ठा रतिं यस्मिन्नुत्कण्ठामतथास्तथा ॥ १४९ ॥

१४९. स सुभगस्तीर्थे गयादौ किं दानमतत ददावित्यर्थः । तथा स किं तपोतनिष्ट चक्रे यस्मिंस्त्वं रतिं मनःप्रीतिमतनिष्ठास्तथा यस्मिन्नुत्कण्ठामतथाः ॥

वरं कस्यासनिष्टोमा हरोसातासत स्मरः ।
असनिष्ठा दृशं यत्र मनोसाथा यशोसथाः ॥ १५० ॥

१५०. उमा गौरी कस्य वरं प्रसादमसनिष्टादात्तथा कस्य हरो वरमसात तथा कस्य स्मरो वरमसत । यत्र नरे त्वं दृशमसनिष्ठा दर्शनायादास्तथा यत्र मनोसाथा अनुरागेणादां अत एव यत्र यशो रूपगुणाद्यतिशयोत्थां कीर्तिमसथाः ॥

अततं अतनिष्ट । अतथाः अतनिष्ठाः । असत असनिष्ट । असथाः असनिष्ठाः । अत्र "तन्भ्यो वा°" [ ६८ ] इत्यादिना सिचो लुब्वा । तत्संनियोगे नणयोश्च लुप् ॥

---

१ बी अतिनि°. २ ए °स्मिन्नुत्कण्ठात°.

---

१ ए °च्छासीं । मा. २ सी डी मा स सा°. ३ बी °थमा°. ४ ए °माशंसितं. ५ डी °तं किंचि°. ६ ए °मनत. ७ ए चक्रो य°. ८ ए °तथा ॥. ९ ए °सासद°. १० डी °दात् अ°. ११ ए °योत्था की°. १२ ए °तता अ°. १३ ए °निष्टः । अ°. १४ ए °निष्टा । अ°. १५ ए °सता अ°. १६ ए °निष्टाः । अ°. १७ ए तभ्यो वा. १८ ए लुप्वा । त° १९ ए णवोश्च.

अमात[1] असत। अमाथाः अमथाः। अत्र "सनस्तत्रा वा"[2] [६९] इति लुपि सत्यां वा–आत्॥

कृथा[1] मय्यप्रसादं मा विरुद्धा मेति वादिनि[2]।
भूपेकृत ह्रियं वक्तुं सोपारुद्ध सखीं[3] भ्रुवा॥ १५१॥

१५१. सा मयणल्ला ह्रियं लज्जामकृत[3]। ततो भ्रुवा भ्रूसंज्ञया सखीं सन्निहितवयस्यां वक्तुमुपारुद्ध[4] प्रेरितवती। क सति। भूपे कर्णे[5]। किंभूते। मयि विपर्ययप्रमादं[6] मा कृथाः[7] मयि मा विरुद्धा विरोधं[8] मा कृथा इति वादिनि॥

सख्यूचे त्वमभापिष्ठा अभापिष्ट यथा सुहृत्।
इमामन्वग्रहीः पृच्छन्यच्च सत्सु चकाधि तत्॥ १५२॥

१५२. सख्यूचे[9]। हे महापुरुष त्वमिमां तथा भापिष्ठा यथा सुहृन्मित्रमभापिष्टावादीत्। यच्च यत्पुनः पृच्छन्कुलादिकं प्रश्नयन्निमां कन्यामन्वग्रहीः[10]। अस्यां यत्त्वं प्रमादं चकर्थेत्यर्थः[11]। तत्सत्सु सज्जनेषु त्वमेव चकाधि शोभस्व॥

चकाद्ध्यवहितः श्रोतासि चेदेषा हि नः सखी।
अनया द्योतयामाहे कदम्बकुलमुज्ज्वलम्॥ १५३॥

१५३. चेद्यदि त्वं श्रोतासि भवसि तदावहितः सावधानः संश्रकाद्धि शोभस्व सावधानो भवेत्यर्थः। एषा कन्या हि स्फुटं नोस्माकं

१ ए कृत्वा म°. २ डी °नि नृपे°. ३ ए सखी भ्रु°.

१ सी डी °सात् अ°. २ डी सतस्त°. ३ बी °तस्ततो. ४ ए °मुद्दारु°. ५ ए कर्मे। किं°. ६ ए °पर्येःप्र°. ७ सी °थास्तथा म°. ८ ए विरुद्धं मा कुरु इ°. ९ ए °ख्यूचो। हे. १० ए °न्यायाम°. ११ ए चकार्येत्य°.

सखी । तथानयासत्सख्योज्ज्वलं निष्कलङ्कं कदम्बकुलं कदम्बाख्यवंशो द्योतयामाहे स्त्रीरत्नत्वेनाशोभ्यत ॥

दक्षिणा द्योतयामासे येन योऽब्धिमधुक्षत ।
अदिग्धादुग्ध गां तस्य पुत्रीयं जयकेशिनः ॥ १५४ ॥

१५४. तस्य जयकेशिनो राज्ञ इयं कन्या पुत्री येन दक्षिणा दिग् द्योतयामासे स्वामित्वेनाशोभ्यत तथा योऽब्धिमधुक्षत प्रभुत्वाद्रत्नान्य-क्षारयत्तथा यो गां पृथ्वीमदिग्ध दिह उपचय इत्येके । न्यायपालनेनोप-चितीचक्रे तथादुग्ध रत्नान्यक्षारयच्च ।

अदृष्टेष्टवरा नान्नमलीढाघुक्षताशयम् ।
न्यगूढाकारमेषा को न यथा समधिक्षत ॥ १५५ ॥

१५५. एषा कन्या दृष्टेष्टवरा सती तथान्नं नालीढ नाभुक्त तथै-षाशयमिष्टवराप्राप्त्यसमाहितं चित्तं तथा महाकष्टेनाघुक्षत संवृतवती । तथैषाकारमिष्टवराप्राप्तिदुःखोद्भवं मुखविकारादि तथातिकष्टेन न्यगूढ यथा को न समधिक्षत न संदिग्धवान् । किं तु सर्वोप्येवंविधावस्थासौ किं जीविष्यति न वेति संदेहे पपातेत्यर्थः ॥

नैषालिक्षत यत्तस्मालिक्षातां पितरावपि ।
सुखेदरिद्रीत्स्वजनोदरिद्रासीत्सखीजनः ॥ १५६ ॥

१५६. यद्यस्मादेषा कन्या नालिक्षत नाभुक्त तत्तस्माद्धेतोः पितरा-

१ ए अदुग्धा॰. २ बी ॰म् । न्यगू॰. ३ ए ॰क्षता ॥. ४ डी ॰जनाः ॥.

१ ए ॰न्यासयं॰. २ ए राज इ॰ ३ ए योऽब्धिम॰. ४ बी ॰था पृ॰. ५ डी ॰चितां च॰. ६ ए ॰हे यथाते॰.

वपि नालिक्षातामत एव स्वजन एतद्बन्धुवर्गः सुखेदरिद्रीद्दरिद्रोभूत्सुखरहितोभूदित्यर्थः । तथा सखीजनः सुखेदरिद्रासीत् ॥

उपारुद्ध । मा विरुद्धाः । अकृत । मा कृथाः । अत्र "धुड्°" [ ७० ] इत्यादिना सिचो लुक् ॥ अनिट इति किम् । अभापिष्ट । अभापिष्ठाः ॥

अन्वग्रहीः । इत्यत्र "इट ईति" [ ७१ ] इति सिचो लुक् ॥

चकाधि चकाद्धि । इत्यत्र "सो धि वा" [ ७२ ] इति सस्य वा लुक् ॥

असि ॥ हस्त्वेति । द्योतयामाहे । अत्र "अस्तेः सि हस्त्वेति" [ ७३ ] इति सस्य लुगेकारे तु हः ॥ परोक्षाया एकारे नेच्छन्त्यन्ये । द्योतयामासे ॥

अदुग्ध अधुक्षत । अदिग्ध समधिक्षत । अलीढ अलिक्षत । न्यगूढ अघुक्षत । इत्यत्र "दुहदिह°" [ ७४ ] इत्यादिना सको लुग्वा ॥

अलिक्षाताम् । अत्र "स्वरेतः" [ ७५ ] इति सकोस्य लुक् ॥

अदरिद्रीत् अदरिद्रासीत् । इत्यत्र "दरिद्रोद्यतन्यां वा" [ ७६ ] इत्यन्तस्य लुग्वा ॥

दरिद्रांचक्रुषामन्तर्दरिद्रामीति कोप्यदात् ।
कर्णरूपं लिखित्वास्या अदरिद्रायकोन्यदा ॥ १५७ ॥

१५७. कोपि चित्रकरोन्यदा कर्णरूपं लिखित्वास्याः कन्याया अदात् । कीदृक्सन् । दरिद्रांचक्रुषामन्तर्दरिद्राणां मध्ये दरिद्राम्यहं दरिद्रोस्मीति हेतोरदरिद्रायको दरिद्रिष्यन्नीश्वरीभवितुमित्यर्थः ॥

१ प °चक्षुषा°. सी °चक्षपा°. २ डी °रिद्रोमी°.

१ प °क्षातां त. २ सी °द्रीभू°. ३ प °त्यथाः । त°. ४ प °पिष्टं । अ°. ५ प सी °ग्रहीदित्य°. ६ प °ति तस्य. ७ डी °तम् । अ°. ८ प अली°. ९ सी °ढम् अ°. १० सी डी °क्षत् । न्य°. ११ प अधुक्ष°. १२ प दुहिदुह. १३ बी ई °रे इ°. १४ प लुग्व ॥. १५ प °चक्षुष्वा°. १६ प °र्दलिद्रा°. १७ प °स्मी हे°.

एषादरिद्राणमुद्यददरिद्रायिका[1] ददौ ।
तस्यातोदिदरिद्रासोर्न[2] दरिद्रायिकाभवत् ॥ १५८ ॥

१५८. एषा कन्या यद्द्रव्यादि[1] ददौ । कीदृक्सती । अदरिद्रायिको[2]दारा तथाविद्यमानं दरिद्राणं[3] दारिद्र्यं यस्याः सा तथा मुत्कर्णरूपदर्शनोत्थो हर्षो यस्याः सा तथा। अतस्तस्माद्दानाददिदरिद्रासोरीश्वरीबुभूपोस्तस्य[4][5][6] चित्रकृतो दरिद्रायिका दारिद्र्यं नाभवत् ॥

कान्तेरददरिद्रावद्रूपमेषाबिभश्च तत् ।
न नाचकाः किं त्वचकादमुनेति न कोन्वशात्[3] ॥१५९॥

१५९. तत्कर्णरूपमेषा कन्याबिभश्चात्मपार्श्वेऽधारयच्च। यतः कान्तेः[7] सौन्दर्यादिशोभायाः सकाशाददरिद्रावददरिद्रितं परिपूर्णकान्तीत्यर्थः। ततश्चैतां को नान्वशान्नावदत्। कथमित्याह । हे कन्येमुना कर्णरूपेण कृत्वा[8] त्वं न नाचका न नाशोभथाः[9] किं त्वचकादत्यन्तं त्वमेवाशोभथा[10] एवेत्यर्थ इति[11] ॥

मां रुणो विरुणन्मा[3] स्म मां भिनः संभिनत्स्म[4] मा ।
वशं जङ्गमिता तेस्मीत्येषावावद्यत स्मरम् ॥ १६० ॥

१६०. कर्णरूपदर्शनेन स्मरपरवशत्वादेषा[12][13] कन्या स्मरमवावद्यता[14]भीक्ष्णमवोचत् । कथमित्याह[15] । हे स्मर त्वं मां मा स्म रुणो मा बाधिष्ठास्तथा मा स्म मां विरुणन्मा विद्धिक्षस्तथा त्वं मां स्म मा मा[16] स्म भिनो

१ प बी सी ई °द्रायका. २ सी डी °न ॥ कर्ण°. ३ प °रुणो-मा. ४ प °नत्समा.

१ प यद्रव्यदि. २ प बी सी ई °द्रायको°. ३ सी डी °द्राणां दा°. ४ प सी °द्रासौरी°. ५ बी °रीबभू°. ६ प °भूपास्त°. ७ प कान्त मौ°. ८ सी °त्वा त्वमे°. ९ प °भयाः किं. १० प °भया ए°. ११ प ई °ति ॥ मा रु°. १२ प °रपवरश°. १३ प °षा कंन्या. १४ डी °रमवावाव°. १५ प °त्या ह°. १६ प मा साभि°.

बाणैर्विदारयस्तथा स्म मा संभिनत्सम्यग्विदार्यो यतोस्म्यहं ते तव वश-मायत्ततां जङ्गमिता कुटिलं गन्ता नृत्यन्ती [नृत्यं ?] करिष्यामीत्यर्थ इति ॥

कर्णे शाशयिताहे शाशय्यिताहेथ पावके ।
[1]संमिधिष्यति समिधिष्यमाणेत्याग्रहीदियम् ॥ १६१ ॥

१६१. इयं कन्याग्रहीन्निर्बन्धं चक्रे । कथमित्याह । कर्णे कर्ण-समीपेहं शाशयिताहेत्यर्थं[1] स्वप्स्याम्येथाथ[2] वा यदि कर्णसमीपे शयनं न स्यात्तदाहं सम( मि ? )धिष्यति[3] प्रज्वलितत्वात्काष्ठान्यभिलषिष्यमाणे पावकेग्नौ शाशय्यिताहे[4] । कीदृक्सती । संमिधिष्यमाणा[5] । काष्ठतु-ल्यीभविष्यन्तीति ॥

[2]संमिध्यिष्यति कामाग्नौ द्राक्[3]संमिध्यिष्यते ह्यसौ ।
नान्यो भिषजितात्रार्थे कर्ण एव भिषज्यिता ॥ १६२ ॥

१६२. हि स्फुटमसौ कन्या समिध्यिष्यति काष्ठान्यभिलषिष्य-माण इव । अतिप्रज्वलिष्यतीत्यर्थः । कामाग्नौ द्राक्समिध्यिष्यते समि-दिवाचरिष्यति । कामाग्निसंतापेनासौ भस्मसाद्भविष्यतीत्यर्थः । अत्रार्थे कामाग्निसंतापरोगविषयेन्यो न भिषजिता न चिकित्सिता[6] । भिषजि[7]धातुः कण्ड्वादौ चिकित्सितार्थः[8] । किं तु कर्ण एव भिषज्यिता ॥

दरिद्रांचकृषाम्[9] । अत्र "अशिति॰" [ ७७ ] इत्यादिनान्तस्य लुक् ॥ अशि-तीति किम्[10] । दरिद्रामि ॥ स्सनादिवर्जनं किम् । सनि । अदिदरिद्रासोः[11] ॥

१ ए बी सनधि॰. २ बी समध्यि॰. ३ ए ॰कसमिध्येक्ष्यते.

१ सी डी गता नित्यं क॰. २ ए ॰म्यथथ वा. ३ ए ॰धिष्टाति. ४ ए ॰शयिता॰. ५ बी सी डी समधि॰. ६ ए ॰कित्सता. ७ ए ॰षजधा॰. बी ॰षज्धा॰. ८ बी सी डी ॰कित्सार्थः. ९ ए ॰शिशीत्या॰. १० ए डी ई ॰मि । स्सनादि॰. सी ॰मि । स्मना॰. ११ सी डी ॰द्रासो ॥ ण॰.

णकचि । अदरिद्रा[1]यकः ॥ "पर्यायार्ह°" [ ५.३. १२० ] इत्यादिना णके । दरिद्रायिका ॥ "णकतृचौ[2]" [५.१.४८ ] इति णके । अदरिद्रायिका[3] ॥ अनटि[4] । अदरिद्राण ॥ केचिद्दरिद्रातेरनिटि[5] कसावालोपं नेच्छन्ति । तन्मत इट् आम्[6] चाभिधानान्न स्याताम् । अददरिद्रावत् ॥

अन्वशात् । अबिभः । अत्र "व्यञ्जनाद्°" [ ७८ ] इत्यादिना देर्लुक् यथासंभवं धातुसस्य च दः ॥

अचकास्त्वम् अचकास्त्वम् । स्म मा भिनः स्म मा संभिनत् । मा स्म रुणः[7] मा स्म विरुणत् । इत्यत्र "सेः[8] स्द्धां च रुर्वा" [ ७९ ] इति सेर्लुक् सकारदकारधकाराणां च वा रुः ॥

जङ्गमिता । शाशयिताहे[9] । अत्र "योऽशिति"[ ८० ] इति यस्य लुक् ॥ शीङो (ङः?) शयादेशे व्यञ्जनान्तता ॥ अन्ये तु लाक्षणिकव्यञ्जनान्तेभ्यो यलोपं नेच्छन्ति । तेन शाशय्यिताहे । तन्मतसंग्रहार्थं व्यञ्जनान्ताद्धातोर्विहितस्येति विहितविशेषणं कार्यम् ॥ अशितीति किम् । अवावर्[10]धत ॥

समिधिष्यति समिध्यिष्यति । समिधिष्य[11]माणा समिध्यिष्यते[12] । अत्र "क्यो[13] वा" [ ८१ ] इति क्यनूक्य[14]ङोर्वा लुक् ॥ केचित्तु यकोपि लुग्विकल्पमिच्छन्ति । भिषजिता भिषज्यिता । तन्मतसंग्रहार्थं केनोपलक्षितो[15] यः क्य इति व्याख्येयम् ॥

---

१ डी °द्राकः. २ प कनृचौ अति. ३ प °यिक । अनदि । द°. ४ प सी डी ई°टि । द°. ५ डी °रनटि. ६ डी आमचा°. ७ प °णः मा स्म रुणः मा. ८ सी सेः सं द्दा च. ९ प शासयि°. १० प °धच ॥ स°. ११ सी °ष्यंत. १२ प °मिधिष्य°. १३ प °क्यो व्येति. १४ प °क्यनोर्वाल्लुक्. १५ प सी °तो य क्य. डी °तो य् क्य.

वरयित्रीमिमां कर्णं तद्देशेत्राटिटत्पिता ।
उपायनं प्रेषितवान् गजैरगणितैस्तथा ॥ १६३ ॥

१६३. तत्तस्माद्धेतोः । कर्णं वरयित्रीमीप्सन्तीमिमां कन्यामत्र देशे गूर्जरत्रायां पिता जयकेश्याटिटत्प्रेषितवान् । तथागणितैरसंख्यातैर्गजैः सहोपायनं रत्नोपदां प्रेषितवान् ॥

वरयित्रीम् । अत्र "अतः" [ ८२ ] इत्यस्य लुक् ॥

आटिटत् । इत्यत्र "णेरनिटि" [ ८३ ] इति णेर्लुक् ॥ अनिटीति किम् । वरयित्रीम् ॥

अगणितैः । प्रेषितवान् । इत्यत्र "सेट्क्तयोः" [ ८४ ] इति णेर्लुक् ॥

स्पृहयालुः स्पृहयाय्यं वरयामास यं सखी ।
भूमण्डयन्तो घोषेण गदयित्नुर्न सोसि किम् ॥ १६४ ॥

१६४. स्पृहयालुरभिलाषुका सती सख्यस्मद्वयस्या स्पृहयाय्यं स्पृहयालुं यं कर्णं वरयामासेप्सामास स त्वं कर्णः किं नासि । कर्ण एव त्वमित्यर्थः । यतः कीदृक् त्वम् । भूमण्डयन्तो रूपादिगुणातिशयेन पृथ्व्या भूषणम् । तथा महापुरुषत्वाद्घोषेण कृत्वा गदयित्नुर्मेघो मेघगम्भीरस्वर इत्यर्थः ॥

वरयामास । मण्डयन्तः । स्पृहयालुः । स्पृहयाय्यम् । गदयित्नुः । अत्र "आमन्त°" [ ८५ ] इत्यादिना णेरयादेशः ॥

---

१ ए °शेवाटि°.

१ ए °त्राया पिता के°. २ ए °वा तथागणितै° ३ ए °होपय°. ४ ए °टिवत्. ५ ए डी °यालु यं. ६ डी °मामैप्मा°. ७ सी डी °यतो रू°. ८ ए °गुणोनि°. ९ ए °यित्नुर्मे°. १० सी °यन्त । स्पृ° ११ ए °हयांय्यतोरू°. १२ ए बी सी °यित्नु । अ°.

नृपानवगणय्यान्यान्खेदं प्रापय्य नः सखी ।
कर्णं प्राप्य मनोत्रागादप्रमित्य वचोसि किम् ॥ १६५ ॥

१६५. नोस्माकं सख्यत्र गूर्जरत्रायामागात्[1] । किं कृत्वा । अन्यान्नृपानुद्वोढुमिच्छून् राज्ञोवगणय्यावज्ञाय । अत एव तान्खेदं प्रापय्य ततो मनः स्वचित्तं कर्णं प्राप्य नीत्वानुरागेण कर्णं मनसि[2] कृत्वेत्यर्थः । तस्माद्वचोहं कर्णं इति वचनमप्रमित्याप्रतिदाय [3]किमसि किमिति तिष्ठसि । प्रतिवचनं दत्त्वेत्यर्थः ॥

अप्रमाय करं कर्णश्चेत्[1]स्मराजय्यतां भजेत् ।
अयशोक्रय्यमक्षय्यमेषा प्रक्षीय दास्यति ॥ १६६ ॥

१६६. चेत्कर्णः करमप्रमायैतत्कर[4]ग्रहणपूर्वं [5]स्वपाणिमदत्त्वैतामपरिणीये[6]त्यर्थः । स्मराजय्यतां स्मरस्य कतुर्जेतुमशक्यतां भजेद्धैर्यातिशयात्स्मरेण जेतुमशक्यो यदि स्यादित्यर्थः । तदैषा कन्या प्रक्षीय विनश्यायशो दास्यत्यर्थात्कर्णस्य । किंभूतम् । अक्रय्यमकस्मादुपनतमित्यर्थः । अक्षय्यमनेकावदातैरपि क्षेतुमशक्यम् ॥

[7]अवगणय्य । इत्य[8]त्र "लघोर्यपि" [ ८६ ] इत्यय् ॥
प्रापय्य प्राप्य । इत्यत्र "वाप्नोः" [ ८७ ] इति वा[9]य् ॥
अप्रमित्य अप्रमाय । इत्यत्र "मेङो वा मित्" [ ८८ ] इति वा मित् ॥
प्रक्षीय । इत्यत्र[10][11] "क्षेः क्षी(क्षीः)" [ ८९ ] इति क्षीः ॥
अक्षय्यम्[12] । अजय्यताम् । अत्र "क्षय्यजय्यौ[13][14]" [ ९० ] इत्यादिना निपात्यौ ॥
क्रय्यम् । इति "क्रय्यः क्रयार्थे" [ ९१ ] इति निपात्यम् ॥

---

१ ए °श्चेत्स्मरा°.

---

१ ए °जरात्रा°. २ ए बी 'सिकृत्येत्य°. ३ बी सी किमि°. ४ सी डी °त्करग्र°. ५ ए स्वप्राणि°. ६ डी °णीयो इ°. ७ ए बी डी अनव°. ८ ए °त्यव ल°. ९ बी वाप्नोतिरिति. १० ए वाइय्. सी वाडय्. ११ डी °त्र क्षः क्षी. १२ सी °म् । अजय्यम् । अ°. १३ ए °जयौ क्षय्य इ°. १४ बी °य्यां क्षय्य इ°.

शृण्वत्यवात्सीदिति राज्ञि चिन्तासौ मे दिदीयानधृतिर्दिदीये ।
नाल्यः पपुंस्त्वामवितास्मि कर्णः कष्टे हहो तस्थिथ चेत्यथाह्वत्
॥ १६७ ॥

१६७. शृण्वति पूर्वोक्तमाकर्णयति राज्ञि कर्णे इत्येवंविधा चिन्तावात्सीदुवास । चिन्तामेवाह । असौ मयणल्ला दिदीयाना मद्वियोगेन क्षीणा धृतिः स्वास्थ्यं यस्याः सा तथा सती मे मदर्थं दिदीये क्षीणा । अथैवं चिन्तानन्तरं मयणल्लामाह्वावदच्च । कथमित्याह । हे मयणल्ले । हहा खेदे । त्वं कष्टे दुःखे तस्थिथ स्थितवती । परमाल्यः सख्यस्त्वां न पपुर्न ररक्षुरधुनाहं कर्णस्त्वामवितास्मि रक्षिष्यामीति । इन्द्रवज्राछन्दः ॥

पाणिं ते व्यतिले नतभ्रु गुरवो यत्त्वामदुर्मे ततो
ग्लेयाद्भूपजनस्त्वदिच्छुरखिलो ग्लायाच्च दिव्यो जनः ।
धेयास्त्वं महिषीपदं मम रतिं देया विहेयास्त्रपां
निष्पेया मधुपर्कमित्यभिदधत्तां पर्यणैषीन्नृपः ॥ १६८ ॥

१६८. नृपः कर्णस्तां पर्यणैषीत् । कीदृक्सन् । अभिदधद्वदन् । किमित्याह । हे नतभ्रु यद्यस्मात्ते गुरवः पितरस्त्वां मे मह्यमदुस्ततस्तस्मादहं ते पाणिं व्यतिले विनिमयेन गृह्णामि । ततस्त्वत्पाणिग्रहणानन्तरं त्वदिच्छुरखिलो भूपजनो ग्लेयात्क्षीणहर्षो भूयात्तथा त्वदिच्छुर्दिव्यो जनो देवौघो ग्लायाच्च । तथा त्वं मधुपर्कं दध्ना संयुक्तं मधु निष्पेयाः । विवाहकाले हि वधूवरौ मधुपर्कं पिबत इत्याचारः । मत्पत्नी भूया इत्यर्थः । तथा महिषीपदं पट्टराज्ञीपदवीं धेया धार्या-

---

१ ए °पुंस्त्वाम°. २ ए °हा वस्थि°. ३ ए मग र°. ४ ए देया वि°. ५ ए निष्फेया. बी निप्पेया.

---

१ ए °ह्वत् । अवदत्त्व क°. २ ए °ष्टे त°. ३ ए °रक्षतांह. ४ ए गुरुवः. ५ ए ाणि व्य°. ६ सी डी विनम°. ७ ए तस्त्व°. ८ ई °पर्के द°.

स्तथा [1]त्रपां रतिकाले लज्जां विहेया[2]स्त्यज्या अत एव [3]रतिं सुखं देया इति । शार्दूलविक्रीडितं छन्दः ॥

गेयासं गीतैर्वा सुसूत्रेण [1]मेयासं स्थेयासं चाग्रेवसेयास[2]मं[3]हः ।
[4]अभ्यागात्तत्राथेति जेगीयमानं बन्धूनां स्त्रैणं कुङ्कुमापीतपा[5]र्ष्णि ॥ १६९ ॥

१६९. अथेत्यारम्भे । अथ विवाहारम्भकाले बन्धूनां [4]वधूवरस्वजनानां स्त्रैणं तत्रोद्वाहस्थानेभ्यागात् । कीदृग्जेगीयमा[5]नमत्यर्थं गायद्व[6]द्वा । किमित्याह । हे [7]वधूवरौ वां युवा[8]महं गीतैर्विवाहोचितगानै[9]र्गेयासं गायानि । तथाहं सुसूत्रेण सुष्ठु कुमारि[10]काकर्तितत्वात्त्रुटितत्वादि[11]शास्त्रो[12]क्तगुणोपेतत्वाच्छोभनं यत्सूत्रं तेन कृत्वा मेयासं पु[13]ङ्खणं क्रियासमित्यर्थः । तथाहमग्रे लवणोत्तारणाद्यर्थं युवयोः पुरः स्थेयासं तथा[14]हमंहश्चक्षुर्दोषाद्युद्भवं पापं कष्टमित्यर्थः । अवसेयासं लवणा[15]द्युत्तारणेनान्तं नयेयमिति । तथावृत्त्या व्याख्याने जेगी[16]यमानं कुटिलं गच्छत्सलीलगा[17]मीत्यर्थः । तथा कुङ्कुमेनापीता आरक्ताः पा[18]र्ष्णयो घुटिकाधोभागा अपि यस्य तत्कुङ्कुमपिञ्जरितसर्वाङ्गमित्यर्थः । एतेनास्या[19]विधवत्वोक्तिः । वैश्वदे[20]वी छन्दः ॥

१ ई मेघासं. २ सी °समहं । अ°. ३ ई °मंह । अ°. ४ प अभ्यगात्तथे° ५ प °पार्ष्णिः ॥. ई °पाष्णि ॥.

---

१ प त्रपा र°. २ बी सी डी °यास्त्याज्या. ३ बी रतिसु°. ४ ई वरवधूस्व°. ५ प °नमित्यर्थः गा°. ६ ई ° दत् । कि°. प °दद्य कि°. ७ प वधौव°. ८ प °महंगी°. ९ प °सं गीया°. सी °सं गेया°. १० ई °काकीतितत्वात् त्रुटित्वादि°. ११ प °दिशोक्तो°. १२ प °गुणापे°. १३ प पुखणं. सी पुस्वणं. १४ प °हमहचक्षु°. १५ बी सी °णादुत्ता°. १६ ई °गीअमा°. १७ ई °गामित्य°. १८ प पाष्णयो. १९ ई °विधिवत्वोक्तिः. २० ई °वी छं ॥.

तेष्ठीयेते तौ स्म पेपीयमानौ दृष्ट्यान्योन्यं धाम देधीयमानौ[1] ।
देदीयन्तेऽर्थान[2]मेमीय्यमानान्स्माप्ताश्चाचारा[3]नसेषीयमाणा[4]: ॥१७०॥

१७०. धामोद्वाहसंबन्धोत्थं[1] श्रीविशेषं देधीयमानावत्यर्थं बिभ्रतौ तौ वधूवरौ तेष्ठीयेते स्मात्यर्थं स्थितौ । कीदृशौ सन्तौ । दृष्ट्या कृत्वान्योन्यं पेपीयमानावत्यर्थं पिबन्तौ । तारामेलकं कुर्वाणावित्यर्थः । तथाप्ता वधूवरयोः प्रत्ययि[2]ताः स्वजना अमेमीय्यमानानत्यर्थ[3]मसंख्या[4]नर्थान्द्रव्याणि देदीयन्ते स्मात्यर्थमन्योन्यं वितेरुर्यत आचारान्दानादीनि विवाहकर्माण्यसेषीयमाणा अत्यर्थमविनाशयन्तः । शालिनी छन्दः ॥

जेहीयन्ते ये मदं नैव येद्रीन्मा[5]मायन्तेऽङ्गैरहीनै[6]र्गजांस्तान् ।
चौलुक्यः[7] संबन्धिभि[8]र्दीयमानानादायाथामीयमानांश्चाल[9]
॥ १७१ ॥

१७१. अथ विवाहविध्यनन्तरं चौलुक्यः कर्णश्चचाल । किं कृत्वामीयमाना[5]नप्रतिदीयमानांस्तर्था[6] संबन्धिभिः श्वशुरवर्ग्यलो[7]कैर्दीयमानांस्तान् गजानादाय ये[8] मदं नैव जेहीयन्ते नात्यर्थं परिहरन्ति न कदापि मदरहिता इत्यर्थः । तथा येहीनैश्चत्वारिंशद्वर्षत्वेन परिपूर्णैरङ्गैः कृत्वाद्रीन्मामायन्तेत्यर्थं मिमते येद्रिप्रमाणाङ्गा इत्यर्थः ॥

अमीयमानैरविषीयमाणैर्निधीयमानैः पथि पौरलाजैः ।
आस्थीयमानः स नवोढवध्वा तया सहोच्चैर्निजहर्म्यमागात्
॥ १७२ ॥

१७२. स कर्णस्तया नवोढवध्वा सहोच्चैरुन्नतं निजहर्म्यमागात् । कीदृक्सन् । पौरलाजैर्नागरा[9]क्षतैः पथ्यास्थीयमान आश्रीयमाणः । किं-

---

१ ए °नौ । दिदी°. २ ए °र्थानिमे°. ३ ई °रान्नसे°. ४ ए बी सी °माणा ॥. ५ ए °न्मानाय°. ६ ए °नैगजां°. ७ ए °लुक्य स°. ८ ए °भिदीय°. ९ ए °चाल: ॥ अ°.

---

१ सी °न्धोत्थश्री°. २ बी °यिना स्व°. ३ ए °र्थमं°. ४ ए °ख्यामर्था°. ५ डी °नान्प्र°. ६ ई °थाXXXयेहीनैश्च. ७ ए °वर्गलो°. सी °वर्गलो°. ८ सी डी ये गजा म°. ९ बी सी डी °गरिकाक्ष°.

भूतैः । अमीयमानैरसंख्यैरविषीयमाणैः प्रचण्डवातादिनाविनाश्यमानै-र्निधीयमानैर्निक्षिप्यमाणैः[1][2] ॥

अवात्सीत् । इत्यत्र "सस्तः सि" [ ९२ ] इति सस्य तः ॥

दिदीये । दिदीयान । इत्यत्र[3] "दीय्°" [ ९३ ] इत्यादिना दीय्[4] ॥

पपुः । आह्वत् ॥ इद । तस्थिथ ॥ एत् । व्यतिले ॥ पुस्[6] । अदुः । इत्यत्र "इडेद्°[5]" [ ९४ ] इत्यादिनातो लुक् ॥

ग्लेयात् ग्लायात् । अत्र "संयोगा°" [ ९५ ] इत्यादिना वा-एत् ॥

गेयासम्[8] । निष्पेयाः । स्थेयासम् । अवसेयास्म् । दासंज्ञ[10] । देयाः । धेयाः ॥ मेयासम् । विहेयाः[11] । अत्र "गापा°" [ ९६ ] इत्यादिना-एत्[12] ॥

गै गांङ्गा[13] । जेगीयमानम्[14] । गीतैः ॥ पा । पेपीयमानौ । आपीत[15] ॥ स्था । आस्थीयमानः । तेष्ठीयेते[16] ॥ मो । अविषीयमाणैः । असेपीयमाणाः ॥ दासंज्ञ[17] । दीयमानान्[18] । देदीयन्ते । निधीयमानैः[19] । देधीयमानौ[20] ॥ मा इति मामाङ्मेङां त्रयाणां ग्रहणम्[21][22] । मा माङ्ग । अमीयमानैः । अमेमीय्यमानान्[23] ॥ मेङ् । अमीयमानान् । हाक् । जेहीयन्ते । अहीनैः । अत्र "ईर्व्यञ्जनेयपि"[24] [९७] इति-ईः ॥ मातेर्नेच्छन्त्यन्ये । मामायन्ते । अयपीति किम् । आदाय ॥ उपजातिश्छन्दः[25] ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्रा-भिधानशब्दानुशासनद्व्याश्रयवृत्तौ नवमः सर्गः ॥

१ ई °माणैर्नि°. २ सी डी °णैः ॥ आवा°. ३ ई °त्र देयीत्या°. ४ प दीया ॥ प°. ५ प °स्थिथा ॥ ए°. ६ प पुरु । अ°. ७ प ई °डेत्या°. ८ सी गेयाः । स्थे°. ९ प °यासाम्. १० प °संज्ञः । दे°. ११ प °हेया । अ°. १२ प °त् । गौगाङ्गी । जंगी°. डी °त् । गैगा°. १३ ई गाङ् । जे°. १४ प °मानाम्. १५ प °पीता ॥ स्था. १६ प °ते ॥ सौ । अ°. १७ प °संज्ञा । दी°. १८ ई °न् । दिदी°. १९ प ई °मानौ । दे°. २० प ई °मानैः ॥ मा. २१ प °हणाम् । मोमोङ्गा ।. २२ सी °म् । माङ्गा.२३ सी डी °न् । हा°. २४ प बी ईव्यञ्ज°. २५ बी सी डी ई °तिश्छन्दः.

## दशम सर्गः ।



जेघ्रीय्यमाणोरुयशा नृपः सा देध्मीय्यमानैकसतीव्रता च ।
जेघ्रीत उच्चैः शिवयोः श्रियं स्म जाघ्रीत आभां स्म च विष्णुलक्ष्म्योः ॥ १ ॥

१. नृपः कर्णः सा च मयणल्ला च शिवयोर्हरगौर्योरुच्चैरतिशयितां श्रियं शुभसंबन्धरूपां शोभां जेघ्रीतः स्मात्यर्थं जिघ्रतः स्म । जगृहतुरित्यर्थः । तथा विष्णुलक्ष्म्योराभां च जाघ्रीतः स्म । कीदृग्नृपः । जेघ्रीय्यमाणं सुरभित्वादत्यर्थं लोकैराघ्रायमाणम् । संकीर्त्यमानमित्यर्थः । उरु महद्यशो यस्य सः । सा च कीदृशी । देध्मीय्यमानं निर्मलत्वाल्लोकैरत्यर्थं संकीर्त्यमानमेकमसाधारणं सतीव्रतं यस्याः सा ॥

जेघ्रीय्यमाण । देध्मीय्यमान । इत्यत्र "घ्राध्मोर्यङि" [ ९७ ] इति-ईत् ॥ यङीति किम् । जाघ्रीतः । अत्र "एषामीर्व्यञ्जनेदः" [ ४ २.९८ ] इति-ईः ॥ अन्ये यङ्लुप्यपीच्छन्ति । जेघ्रीतः ॥ सर्गेस्मिन्नुपजातिच्छन्दः ॥

१ ए °घ्रीयामा°. बी °घ्रीयमा°. २ ई देध्मीय्य°. ३ ए आभा स्म. ४ सी °भां सि च. डी °भां स च.

---

१ ई सा म°. २ ए °योर्हेर°. ३ बी °शयतां. ४ ए °यिनं श्रि° ई °यिता श्रि°. ५ ए जेघ्रीःत स्मा°. ६ ए °कीर्यमा°. ७ ए सः । स च. ८ ई देध्मीय्य°. ९ ए °ल्लोकेर°. १० ए बी °माणा । दे°. ११ सी डी °ध्मीयमा°. १२ ए °म् । जोघ्री°. १३ ए °मीर्व्यज°. १४ ए अडे य°.

जेघ्नीयते[1] यां न हि[2] नो जघानं[3] तां मे प्रजां जङ्घनितां[4] नु कोपि।
आसीदसूनोरि[5]ति धैर्यघाती नृपस्य चिन्ताकुलि[6]शाभिघातः ॥ २ ॥

२. धैर्यघाती धैर्यं व्यसनेप्यकातर्यं[1] तद्विनाशी नृपस्य कर्णस्य चिन्ताकुलि[2]शाभिघातश्चिन्तैवातिदुःखकत्वाद्वज्राघा[3]तोभूत् । कथमित्याह । तां मे ममासूनोर्निष्पुत्रस्य[4][5] सतः प्रजां लोकम् । नु इति संभावने । संभावयेहं कोपि जङ्घनितां मत्तोनन्तरं[6] कुटिलं गमिष्यत्यभिषेणयि[7]ष्यतीत्यर्थः । अत्यर्थं हनिष्यति वा । यां न[8] हि नैव कोपि जेघ्नीयते[9]त्यर्थं हिनस्ति न जघानं वेति[10] ॥

योनेशदाघानि[7] मया स नाजो नश्यामि नो नाप्यनशं स्वयं च ।
परस्त्रियो नाश्वमवोचमास्थं कथं न्वपप्तं विप्लुतत्वदुःखे ॥ ३ ॥

त्वमात्मजेनाभ्युदियाः[8] प्रतीयास्तत्स्पर्शसौख्यं प्रतियाः[9] प्रमोदम् ।
मयीत्यसंशय्य समुह्यते स्म यंद्ध्यानशय्यैस्तदु[10] किं नु शेते[11] ॥ ४ ॥

मां संततीयन्[12]धियासमास्तूयासं[13] शुचीभूय भृशायमानः ।
चेचीयमानः[14] परिचीयमानं वल्गूयदोजास्तदहं[15] समाधिम्[16] ॥ ५ ॥

१ सी डी जेर्घ्नीय°. २ प हि भोज°. ३ प °न ता मे. ४ सी °ना न को°. ५ सी डी °नोरति. ६ ई °कुलशा°. ७ प °नि यमा स. ८ ई °भ्युदयाः. ९ प °तिया प्र°. १० प यद्वानशय्योथर्तिक नु. ११ ई शेतम् ॥ मां. १२ प °न्न--स°. १३ बी °समांस्तू°. १४ प °मान प°. १५ प °स्तमहं. १६ प °धि ॥ मा°.

१ प °कातर्य तद्वि°. २ ई °कुलशा°. ३ प °द्वजाघा°. ४ प °नोनिष्पु°. बी °नोनिष्पुत्र°. ५ ई °निंत्पुत्र°. ६ प °तामुत्तो°. ७ बी °णयषती°. ८ प न दि नै°. ९ प सी डी जेघ्नीय°. १० बी ई °न चेति.

मात्रीयतामापदि यात्र मात्रीयते[1]थ मात्रीभवति क्रियाभि[2]ः ।
क्रियात्कृपामह्रियमाणभक्ते[3]र्जेह्रीय्यमाणा तपसाद्य सा मे ॥ ६ ॥
इत्थं सुतीयन्स वितर्क्य[4] दीप्रीकृतैर्दिवाभूतनिशं प्रदीपैः ।
श्रीवेश्म मालीकृतकेतु यातोदन्याशनायो विधनाय आपत्[5] ॥७॥

३–७. स कर्णः श्रीवेश्म लक्ष्मीदेवताभवनमापत्प्राप[1] । कीदृक्सन्[2] । सुतीयन्पुत्रमिच्छन्नत[3] एव याते विगते उदन्याशनाये[4] भोजनेच्छोदकेच्छे[5] यस्य सः । तथा विगता[6] धनाया[7] धनेच्छा यस्य स निर्लोभश्च । कीदृशं श्रीवेश्म । दीप्रीकृतैः प्रज्वालितैः प्रदीपैः कृत्वा दिवाभूता[8] दिवसीभूता निशा यत्र तत् । तथा मालीकृतकेतु पङ्क्तीकृतध्वजम् । किं कृत्वा । वितर्क्य । कथमित्याह[9] । आजौ रणे योनेशन्नष्टः स मया नाघानि न हतस्तथाहं स्वयं[10] चाजौ नो नश्यामि नाप्यनशं न नष्टस्तथाहं परस्त्रियो[11] नाश्वं नागमं[12] नावोचं नालपं[13] न चाश्वं सतीत्वेन मद्वचोमन्यमाना नाहं तिरश्चक्रे । नष्टप्रहारादीनि क्षात्रधर्मबाधकानि महापापानि मया न कृतानीत्यर्थः । ततो नु इति संशये । संशयितोस्मि कथमहं[14] विसुतत्वदुःखेपुत्रत्वकष्टेपप्तं पतितः । तथा ध्यानमेव सदा विश्रामसुखहेतुत्वाच्छय्या येषां तैर्योगिभिरसंशय्य सम्यग्ज्ञानेन[15] निश्चित्य मयि विषये यत्समुह्यते स्म चिन्तितम् ।

---

१ ए °तेस मा°. २ ई °भिः । कृया°. ३ ए °क्तेयह्री°. ४ ए °तर्का दी. ५ सी डी °त् । पञ्चभिः कुलकम् । स.

---

१ बी °तामुव°. २ ए °त्प्राप् । कीदृन्. ३ सी डी °यत्पुत्र°. ४ ए °न्याराना°. ५ ए बी °दकोच्छे. ६ ए °ता या ध°. ७ ई °नाय ध°. ८ ए दित्वाभू°. ९ बी °मिथ्याह. १० ई °यं आजौ. ११ ए परिस्त्रियो. १२ बी °मं नोवाचं. १३ ए नालंप न. १४ सी °हं वसु°. १५ ए °म्यग्जाने°.

कथमित्याह । आत्मजेन पुत्रेण कृत्वा त्वमभ्युदिया अभ्युदितपुत्रो भूया इत्यर्थः । तथा[1] तत्स्पर्शसौख्यं[2] पुत्रस्पर्शसुखं प्रतीया अनुभवे-[3]र्जीवेन्पुत्रे[4]सुखं पश्येरित्यर्थः । तथा प्रमोदं पुत्रराज्याभिषेकाद्युद्भवं हर्ष[5] प्रतिया इति । उ इति संबोधने । तर्तिक[6] नु शेते यन्नाद्यापि पुत्रो भवतीत्यर्थः ॥ तत्तस्माद्धेतोरहं वल्गूयच्छोभनमोजः सत्त्वं यस्य सोतिसात्त्विकोत एव शुचीभूय[7] बाह्याभ्यन्तरमलप्रक्षालनेन निर्मलीभूय परिचीयमानमभ्यस्यमानं[8] समाधिं[9] चित्तैकाग्र्यं चेचीयमानोत्यर्थं[10] पोषयन्संन्मां[11] लक्ष्मीदेवतामधियासं संस्मर्यासमास्नूयासं संकीर्तयेयम्[12] । यतः कीदृशोहं संततीयन्संततिमिच्छंस्तथा भृशायमानः संततिप्राप्तौ त्वरमाणः । तथात्र जगति या लक्ष्मीरापदि मात्रीयतां मातरमिच्छतां नृणां क्रियाभिः पालनपोषणादिभिः कृत्वा मात्रीयते मातेवाचरत्यथाथ[13][14] वा मात्रीभवति जननयेव स्यात् सा लक्ष्मीरद्याह्रियमाणभक्तेर्निश्चलभ-[15]क्तेर्मे मम तपसा जेह्रीय्यमाणात्यर्थमावर्ज्यमाना सती कृपां दयां क्रियान्ममैवेत्थम् ॥

जेघ्नीयते[16] । अत्र "हनो घ्नीर्वधे[17][18]" [ ९९ ] इति घ्नीः[19] ॥ वध इति किम् । गतौ जङ्घनिता ॥ केचिद्धन्तेर्वधे घ्नी-आदेशं[20] वाहुस्तन्मते वधार्थेपि जेङ्घनितेति[21] स्यात् ॥

अभिघातः । धैर्यघाती[22] । इत्यत्र[23] "ञ्णिति घात्" [ १०० ] इति घात् ॥

अघानि । जघान । इत्यत्र "ञिणवि घन्[24]" [ १०१ ] इति घन् ॥

१ ई °था स्तत्स्प°. २ सी °सौत्यर्थः । तत्त°. ३ ए °वेजीर्वन्पु°. ४ बी डी °वत्पुत्र°. ५ ए ई °त्रमुखं. ६ ए तत्कं नु. ७ ए° चीय. ८ डी °मस्य°. ९ सी °माधिं. १० बी °यमनो°. ११ ई °न्समां ल°. १२ ए °णा मा°. १३ बी °चरित्य°. १४ डी °त्यथ°. १५ बी °निश्चिल°. १६ ई °यत । अ°. १७ ए °नोघ्नी वधे. १८ बी घ्नीवधे. १९ ए °ति घ्नी ॥ व°. बी सी डी °ति घ्नी ॥ व.° २० ए °शं चाहु°. ई °शं नाहु°. २१ बी जघनि°. २२ ए ई धैर्यघा°. २३ ए °त्र ञिणति. २४ ए घङ् इ°.

अनेशत् अनशम्। अत्र "नशेर्नेश्वाङि"[1] [ १०२ ] इति वा नेश्[2] ॥ अङीति किम्। नश्यामि

अश्वम्। आस्थम्। अवोचम्। अपप्तम्। अत्र "श्वयति°" [ १०३ ] इत्यादिना श्व-अस्थ-वोच-पप्ताः[3] ॥

शेते। अत्र "शीङ एः शिति" [ १०४ ] इत्येत् ॥

असंशय्य। ध्यानैर्शय्यैः[4][5]। अत्र "क्ङिति यि शय्"[6] [ १०५ ] इति शय् ॥

समुह्यते। अत्र "उपसर्गाद्°" [ १०६ ] इत्यादिना ह्रस्वः ॥

अभ्युदियाः। अत्र "आशिषीणः" [ १०७ ] इति ह्रस्वः ॥ ननु प्रतीयाः इत्यत्र समानलक्षणे दीर्घे सति कथं न ह्रस्वः। न। दीर्घे सत्युपसर्गात्परस्येणो-भावात्। केचिदत्रापीच्छन्ति। प्रतियाः ॥ इकोपि समानदीर्घत्व इच्छन्त्येके। अधियासम्[7] ॥

च्वि। शुचीभूय ॥ यङ्। चेचीयमानः ॥ यक्। वल्गूयत् ॥ क्यन्। संततीयन् ॥ क्यङ्। भृशायमानः ॥ क्य। परिचीयमानम्[8] ॥ आस्तूयामम्। अत्र "दीर्घश्च्वि°"[9] [ १०८ ] इत्यादिना दीर्घः ॥ बहुवचनात्क्यशब्देन क्यन्क्यङ्[10] क्यङ्य(?)क्यानामविशेषेण ग्रहणम् ॥

मात्रीभवति। जेह्रीयमाणा[11]। मात्रीयताम्[12]। मात्रीयते[13]। अत्र "ऋतो री'(रीः)' [ १०९ ] इति[14] रीः ॥

क्रियाभिः। अह्रियमाण। क्रियात्। इत्यत्र[15] "रिः श°" [ ११० ] इत्यादिना रिः ॥

---

१ ई °शेनेश्वा°. २ ए नेश ॥ अ°. ३ ए सी °पप्ता ॥ शे°. ४ ए °नशाय्यैः. ५ ई °शय्यै। अक्ङि°. ६ बी यि शिय्. ७ ए ई °म्। च्वि। शु°. ८ ए सी डी °म्। अ°. ९ ए °दीर्घश्चि इ°. १० ए क्यच्क्य°. ११ सी डी °ह्रीयमा°. १२ ए सी °ता। मा°. १३ डी °यन्ते। अ°. १४ ए बी सी ई °ति री ॥ क्रि°. १५ ए °त्यव रिःशदित्या°.

दीर्म्रीकृतैः । मालीकृत । इत्यत्र "ईश्च्वौ°" [ ११ ] इत्यादिना-ईः ॥ अनव्य-यस्येति किम् । दिवाभूतैः ॥

सुतीयन् । इत्यत्र "क्यंनि" [ ११२ ] इति-ईः ॥

अशनायोदन्याधनायाः । "क्षुत्तृड्°" [ ११३ ] इत्यादिना निपात्याः ॥

तत्रावृषस्यन् गुरुणाप्यनश्वस्यता रहोध्यापितलक्ष्मिमन्त्रः ।
वारिस्यतां विस्मयमप्यवार्यस्यंस्तापसानां नृपतिस्ततान ॥ ८ ॥

८. तत्र श्रीवेश्मनि नृपतिः कर्णोवार्यस्यन्वार्यपि पातुमनिच्छन्संन्वा-रिस्यतां वारि पातुमिच्छतां तापसानामपि । अपिरत्र योज्यः । आस्ता-मन्येषामित्यप्यर्थः । विस्मयमाश्चर्यं ततान चक्रे । कीदृशः । अवृष-स्यन् । वृषं मैथुनमनिच्छन् । तथा गुरुणापि मन्त्राचार्येणाप्यनश्वस्य-ताश्वं मैथुनमनिच्छता सता रह एकान्तेध्यापितलक्ष्मिमन्त्रः पाठितल-क्ष्मीदेवतामन्त्रः ॥

अवृषस्यन् । अनश्वस्यता । इत्यत्र "वृष°" [ ११४ ] इत्यादिना सो(स्सो?)न्तः ॥

वारिस्यताम् । अवार्यस्यन् । इत्यत्र "अस् च लौल्ये" [ ११५ ] इति सो-(स्सो?)स् चान्तः ॥

पञ्चदशः पादः संपूर्णः ॥

---

१ ए दीर्म्रीकृ°. २ ए °नाई ॥ अ°. ३ ए °व्ययः । से°. ४ ए °त ॥ स्तृती°. ५ ए सी क्यति इ°. ६ बी °दन्यध°. ७ ए बी सी °नाया । क्षु°. ८ ए °न्वापि. ९ बी °च्छन्वा°. १० ए °न्सस्वारि°. ११ ए °मामनि°. १२ बी वृषं मै°. १३ ए इण्णादि°. १४ ए °ता । अ°. १५ ए °स् चालोल्यति.

न पर्यभूत्कं चनं न व्यवोचज्जपाक्षरं स्मास्ति रहो ब्रुवाणः ।
स्त्रीणां समाजे समजे त्वजानां विवाय दृष्टिं स वशी न जातु ॥९॥

९. स कर्णं उपशमिततमोगुणत्वेन कं चन शत्रुमपि न पर्यभून्न न्यक्कृतवांस्तथा कं चन न व्यवोचन्न विरुद्धं भाषितवांस्तथोपशमितरजोगुणत्वाद्वशी जितेन्द्रियः सन्सोजानां छागीनां समजे नु समूह इव स्त्रीणां समाजे वृन्दे जातु दृष्टिं न विवाय रागेर्णं न चिक्षेप किं तु रह एकान्ते जपाक्षरं जापवर्णं मन्त्रं ब्रुवाण उच्चार्यन्नस्ति स्म तस्थौ ॥

स द्विट्घ्नमज्यां तनुगां प्रवेतांहः प्राजिता प्राजनवत्तपोभिः ।
द्राक्प्रावयण्यं कलयद्भिरब्जैर्विघ्नान्प्रवेतुं श्रियमर्चति स्म ॥ १० ॥

१०. स कर्णोब्जैः कृत्वा श्रियमर्चति स्म । किंभूतैः । विघ्नानन्तरायान्प्रवेतुं क्षेप्तुं प्रावयण्यं तोत्रदण्डतां कलयद्भिर्धारयद्भिः । सौरभातिशयेन विघ्नविनायकानां वशीकारित्वाद्विघ्नक्षेपदक्षैरित्यर्थः । कीदृक्सन् । प्राजनवत्तोदनतुल्यैरतितीक्ष्णैरित्यर्थः । तपोभिः कृत्वा तनुगामन्तरङ्गां द्विट्घ्नमज्यां कामाद्यरिषड्कसभां द्राक्प्रवेता क्षेप्तात एवांहः पापं प्राजिता ॥

१ ए °र्यभूत्कं च. २ ए न च व्य°. ३ डी °जे त्वजा°. ४ ए विचार्यं दृष्टिं स. ५ ए जातुः ॥ स. ६ डी प्रवातां°. ७ ए °क्प्राचवण्यं. ८ ए °रद्भैर्वि°. ९ ए °मर्थति.

---

१ बी °नां छगी°. २ ए °जे वन्दे. ३ ए विवरनवविमेणचि°. ४ सी डी °ण चि°. ५ ए °न्ते पा°. ६ सी °वर्णं म°. ७ ए °त्रं ध्रुवा°. ८ ए °यन्वस्ति स तस्थौ. ९ ए र्णोब्जैकृ°. १० ए °मर्थति. ११ ए °यद्भि । सौ°. १२ डी °भाविजये°. १३ ए °द्विश्रक्ष°. १४ ए °रङ्गा द्वि°. १५ ए एवाहः.

क्शाता न हि प्राजितुमप्यनिष्टख्यातारमों ब्रह्म स किं नु चक्शे ।
ब्रह्मा न चख्शे[1] मुरजिन्न चख्ये न चाचचक्षे[2][3] च यथेन्दुमौलिः ॥ ११ ॥

११. स कर्ण उपशान्तत्वादनिष्टख्यातारमप्यप्रियवक्तारमपि नरं प्राजितुं निराकर्तुं न हि नैव क्शाता वक्ता किं तु ब्रह्म परमध्येयमोमो[1]ङ्कारं तथा चक्श उच्चारितवान् यथा ब्रह्मा न चख्शे[2] यथा[3] मुरजिद्विष्णुर्न[4] चख्ये यथेन्दुमौलिश्च हरश्च नाचचक्षे ॥

पर्यभूत् । व्यवोचत् । इत्यत्र "अस्ति°" [ १ ] इत्यादिना भूवचौ[5] ॥ अशितीति किम् । अस्ति[6] । ब्रुवाणः[7] ॥

विवाय । इत्यत्र "अघञ्°[8]" [ २ ] इत्यादिना वीः ॥ अघञ्क्यबलचीति[9] किम् । समाजे । समज्याम्[10] । समजे । अजानाम् ॥

[11]प्रवेता प्राजिता । [12]प्रावयण्यम् प्राजन । इत्यत्र "अने वा" [३] इति वा वीः ॥ अन्ये त्वने प्रत्यये यकाररहिते व्यञ्जनादौ[13] चाविशेषेण विकल्पमिच्छन्ति । प्रवेता प्राजिता । प्रवेतुम् प्राजितुम् ॥

क्शाता[14] । ख्यातारम् । अत्र "चक्षो वाचि°" [ ४ ] इत्यादिना क्शाङ्ख्याङौ ॥

[15]चक्शे । चख्शे । चख्ये । अत्र "न वा°" [ ५ ] इत्यादिना वा क्शाङ्ख्याङौ ॥ पक्षे । आचचक्षे ॥ [16]चख्शे । अत्र "शिड्याद्यस्य द्वितीयो वा" [ १.३.५९ ] इति कस्य खः ॥

---

१ ए बी °ख्शे मुर°. २ बी °चक्ष्ये च. ३ ए °क्षेथ य°.

१ ए °मो ओङ्कार त°. सी °मो आकार. २ सी °ख्शेन चख्शे मु°. डी ख्शे मु°. ३ ए °थामुर°. ४ बी °चख्शे य°. ५ ए °चौ ॥ प्रशि°. ६ ए °स्ति । ध्रुवा°. ७ सी डी °णः ॥ व्यवा°. ८ ए °घड् इ°. ९ ए बी ई °क्यवल°. १० ए °ज्या । समजो । अ°. ११ ए प्रचेता. १२ ए प्रायवण्यम् प्रोज°. १३ बी °दौ वावि.° १४ ए °ता । ख्योता°. १५ बी चक्शौ । च°. डी चक्षे । च° १६ ए चख्वे । अ°.

**भ्रष्टुं बलिं भ्रष्टुमथाज्यमाज्ञां प्रत्तः प्रदत्तः कुसुमानि राजा ।**
**नीत्ताहुतिस्तैर्गुरुवीत्तमन्त्रैर्देव्यै विदत्तासन आबभासे ॥ १२ ॥**

१२. राजा कर्ण आबभासे शुशुभे । कीदृक्सन् । गुरुणाचार्येण विशेषेण दीयन्ते स्म गुरुवीत्ता ये मन्त्रास्तैः कृत्वा देव्यै लक्ष्म्यै विदत्तासनो वितीर्णपीठस्तथा बलिमुपहारं भ्रष्टुं पक्तुमथ तथाज्यं घृतं भ्रष्टुं विलीनयितुमाज्ञामुत्तरसाधकानामादेशं प्रत्तः प्रदातुमारब्धस्तथा देव्यै कुसुमानि प्रदत्तः प्रदातुमारब्धस्तथा तैर्बल्याज्यकुसुमैः कृत्वा देव्यै नीत्ताहुतिर्दत्तहव्यः । पीठमन्त्रोच्चारपूर्वं देवीं पीठे स्थापयित्वा बलिभिः पुष्पैराहुतिभिश्च पूजयन् राजाभादित्यर्थः ॥

**जजाप नासाग्रनिदत्तनेत्रोक्षसूत्रसूत्ताङ्गुलिकः क्षितीशः ।**
**सुदत्तचित्खे विदवत्तमन्त्रैरनूत्तपुष्पैरनुदत्तहोमैः ॥ १३ ॥**

१३. क्षितीशः कर्णो जजाप । कैः कैः कृत्वा विदवत्तमन्त्रैर्विदा गुरुणावत्ता दत्ता ये मन्त्रास्तैस्तथानूत्तपुष्पैर्दत्तकुसुमैस्तथानुदत्ता ये होमा अग्नौ तिलादिहवनानि तैश्च मन्त्रजापं पुष्पजापं होमजापं च चकारेत्यर्थः । कीदृक्सन् । नासाग्रनिदत्तनेत्रस्तथाक्षसूत्रसूत्ताङ्गुलिको जपमालिकायां संस्थापिताङ्गुलिकस्तथा खे आकाशे सुदत्तचित्संनिवेशितचित्तोखिलेन्द्रियविषयव्यावृत्त्या निराकारध्यानं कुर्वन्नित्यर्थः ॥

१ ए °माज्ञा प्र°. २ ए नीत्याहु°. ३ सी डी °से ॥ म रा°. ४ ए नाशाग्र°. ५ बी डी °पुष्पैर°.

१ सी डी °ण दीय°. २ ए °यते स्म. ३ ए सी डी °वीत्ता म°. ४ ए भ्रष्टुं प°. ५ ए °तं स्रष्टुं. ६ ए °व्यैर्नीत्वाहु°. ७ ए °मन्त्रोच्चा°. ८ ए बहुलि°. ९ ए °मन्त्रैर्वि°. १० बी °माऽग्नौ. ११ सी डी °नादि तै°. १२ ए °क्षमूत्रसूत्राङ्गुलि°. १३ ए °पनालि°. १४ ए °चित्सनि°. १५ बी °त्तोखले°.

आत्तावदत्तैर्बलिभिः स इत्थं समाहितो धीतसुधारसो नु ।
स्थितः सितांहा अदितामितौजा दिनान्यमातानि तपःशिताङ्गः ॥ १४ ॥

१४. स कर्णोमातान्यसंख्यानि दिनानि स्थितः । कीदृक्सन् । इत्थमुक्तरीत्यात्तावदत्तैरात्ताः पूर्वमुत्तरसाधकेभ्यो गृहीता येवदत्ताः पश्चाल्लक्ष्म्यै प्रदत्तास्तैर्बलिभिः पूजोपकरणैः कृत्वा सितांहा विनाशितविघ्नस्तथा तपःशिताङ्गस्तपश्चरणकृशदेहोत एवादितामितौजा अप्रतिहतासंख्यतपःप्रभावस्तथा समाहितः समाधिवानत एव धीतसुधारसो नु पीतपीयूष इव ॥

अन्येद्युरच्छातनिशातबुद्धौ हित्वान्यकर्माच्छितसंशितेस्मिन् ।
अभूज्जहित्वा समयं स्वसामग्रिकामजाहित्व ऋतुर्घनानाम् ॥ १५ ॥

१५. अन्येद्युर्घनानामृतुर्वर्षाकालोभूत । किं कृत्वा । समयं स्वकालं जहित्वा त्यक्त्वाकाल इत्यर्थः । तथा स्वसामग्रिकां विद्युदादिसंपदमजाहित्वा गृहीत्वा । क सति । अस्मिन्कर्णे । किंभूते । अच्छाताखण्डिता निशाता तीक्ष्णा बुद्धिर्ज्ञानं यस्य तस्मिन् । तथान्यकर्म तपस इतरद्राज्यादि कार्यं हित्वाच्छितमखण्डितं संशितमसिधारातीक्ष्णं व्रतं यस्य तस्मिन् । यद्वा । अकर्मकत्वविवक्षायां संश्यति स संशितो व्रते यत्नवान् । अच्छितो यः संशितस्तस्मिन् ॥

१ ए बी सी आत्तावदत्तैर्बं°. २ ए °तः सतां°. ३ ए °तामिता°. ४ ए हितान्य°. ५ सी डी °र्माश्थित°.

१ ए बी सी °त्यात्तावदत्तैरात्ताः पू°. २ डी °दत्ताः प°. ३ डी °दत्तास्तै°. ४ ए पूजौप°. ५ ए °देशोत°. ६ ए °तपप्र°. ७ ए °तमुधा°. ८ बी °यूख इ°. ९ ए क्त्वा इका°. १० सी डी °त्वा क. ११ ए °त्वा इच्छि°. सी डी °त्वा स्थित°. १२ ए °क्षाया सं°. १३ ए संसितो. १४ ए अस्थितो. १५ ए °न् ॥ अष्टुं भ°.

भर्ष्टुम् भ्रष्टुम् । अत्र "भृज्जो भर्ज्" [ ६ ] इति वा भर्ज् ॥

प्रत्तः प्रदत्तः । अत्र "प्राद्दाग°" [ ७ ] इत्यादिना वा त्तः ॥

नीत्त निर्दत्त । वीत्त विदत्त । सूत्त सुदत्त । अनूत्त अनुदत्त । अवत्त अवदत्तैः । अत्र "निवि°" [ ८ ] इत्यादिना वा त्तः ॥

आत्त । इत्यत्र "स्वराद्°" [ ९ ] इत्यादिना त्तः ॥ अध इति किम् । समाहितः ॥

अवदत्तैः । अत्र "दत्" [ १० ] इति दत् ॥ अध इत्येव । धीत ॥

अदित । सित । अमित । स्थितः । अत्र "दोसोमास्थ इः" [ ११ ] इति-इः ॥ गामादाग्रहणेष्वविशेष इति मा-माङ्-मेङां ग्रहणम् । अन्यस्तु माङ्मेङो-रेवेच्छति । मातेस्तु । अमातानि ॥

अच्छित । अच्छात । शित निशात । इत्यत्र "छाशोर्वा" [ १२ ] इति वा-इः ॥

संशिते । अत्र "शो व्रते" [ १३ ] इति-इः ॥

हित्वा । इत्यत्र "हाको हिः क्त्वि" [१४] इति हिः ॥ यङ्लुपि । जहित्वा ॥ द्वित्वे पूर्वदीर्घत्वमपीच्छन्त्येके । अजाहित्वा । उभयत्रेटि-आतो लुक् ॥

**जग्धप्रकाशा विहितान्धकारा दिवं प्रजग्ध्याभिजिघत्सवः क्ष्माम् ।**
**मेघा जलौघैरघसन्सघासैः स्फुटप्रवासिप्रघसैर्दिगन्तान् ॥ १६ ॥**

१६. मेघा जलौघैर्दिगन्तानघसन्व्यापुः । कीदृशाः सन्तः । जग्ध-

---

१ प °वः क्ष्म्याम् । २ प जलोघे°. ३ प °प्रकामि°.

१ प भर्जे ॥ प्र°. २ डी °त्तः अ°. ३ प °त्र प्रद्दा°. ४ डी °दत्तः । वी°. ५ प ई °त्त । सुत्त. ६ डी °वद°. ७ प °दत्तेः । अ°. ८ प माडो°. ९ प डी अस्थितः । अ°. १० सी °च्छिनः । अच्छातः । शि°. ११ बी °ति-इः ॥. १२ बी °ति । हि°. १३ प °त्वे दीर्घपू°. १४ प डी °टि-अतो.

प्रकाशा भक्षितोद्योताः । अत एव विहितान्धकारास्तथा दिवमाकाशं प्रजग्ध्य व्याप्येत्यर्थः । क्ष्मामभिजिघत्सवो व्याप्तुमिच्छवः । कीदृशै-र्जलौघैः । सघासैर्विद्यमानतृणैस्तथा स्फुटं प्रवासिनां पान्थानां प्रघसैः पीडकैः प्रादन्तीत्यच्। यद्वा । प्रादनम् अलि प्रघसः । स्फुटः प्रवासिनां प्रघसः पीडा येषु तैः ॥

विहित । इत्यत्र "धागः" [ १५ ] इति हिः ॥

जग्ध । प्रजग्ध्य । इत्यत्र "यपि°" [ १६ ] इत्यादिना जग्धः ॥

अभिजिघत्सवः । अघसन् ॥ कर्मणि घञि । घासैः । प्रघसैः । अत्र "घस्लृ°" [ १७ ] इत्यादिना घस्लृः ॥

**श्रुतीर्जघासाद दृशो यथाब्दस्तथा ववौ नादमुवाय वज्रम् ।**
**नदीः पुपूर्वान्पपृवान्सरांसि स्थलीः शिशीर्वान् शशृवान् गिरींश्च ॥ १७ ॥**

१७. अब्दो मेघस्तथा नादं गर्जां ववौ संबद्धवान् । यथा श्रुतीः कर्णाञ्जघासाभक्षयदिव । तथा वज्रं विद्युतं तथोवायाग्चयद्यथा दृशो-क्षीण्याद गर्जां विद्युतं चातितीव्रां चकारेत्यर्थः । उत्तरार्धं स्पष्टम् ॥

**योद्रीन्दिदीर्वान्ददृवान्बलं तं वध्याः स्मरास्त्रैरथ घानिषीष्ट ।**
**त्वया वियोगी मरुतापि कोपि त्वां मा वधीदित्यरसन्नुमेघः ॥१८॥**

१८. मेघ इति न्विदमिवारसदवोचत् । किं तदित्याह । हे स्मर योद्रीन्दिदीर्वान्वज्रेणादारयत् । तथा यो बलं बलाख्यं दैत्यं ददृवांस्त-

१ ए बी °र्वांश्च°. २ सी डी गिरींश्च. ३ डी °रवघा°.

१ ए °जिघित्सवो व्याप्तुमि°. २ ए सी °ति हि ॥ ज°. ३ ए बी सी °जग्ध । इ°. ४ डी °जग्ध् ॥ अ°. ५ ए घङि । घा°. ६ ए बी घस्लृः ॥ श्रु°. ७ ए °बद्वा°. ८ ए सी डी °तीव्रं च°.

मिन्द्रं त्वमस्त्रैः शरैर्वध्या अर्थं तथा वियोगी कर्मतापन्नस्त्वया कर्त्रा मरुताप्यासतामस्त्राणि पुरोवातेनापि कृत्वा घानिपीष्ट हन्यतां तथा त्वां कोपि हरादिरपि मा वधीदिति । वर्षासु हि मेघा गर्जन्ति स्मरश्चातिजैत्रः स्यादित्येवमाशङ्का ॥

**पुष्पैः स्मरो व्याहृत नावधिष्ट शस्त्रैर्न मन्त्रायुधमध्यगाद्वा ।**
**प्रत्याययञ्शक्तिमगाज्जयं स वशं त्रिलोकीं गमयंस्तथापि ॥१९॥**

१९. यद्यपि स्मरः पुष्पैर्व्याहृत प्राहृरत्र तु शस्त्रैर्व्योमयानैरावधिष्ट न च मैन्त्रायुधं मन्त्रप्रधानमस्त्रं वायव्याद्यध्यगादस्मरत्तथापि स स्मरो वर्षामाहात्म्येन जयँमगात्प्राप । कीदृक्सन् । शक्तिं स्वसामर्थ्यं प्रत्याययञ्ज्ञापयन्नत एव त्रिलोकीं वशं स्वायत्ततां गमयन्प्रापयन् ॥

**केकारवैस्तन्त्र्यधिगम्यते यैर्व्यरावि पड्ढाधिजिगांसया तैः ।**
**सद्यश्च हंसैरजिगांस्यतार्थं स मानसस्याधिजिगांस्यते च ॥ २० ॥**

२०. यैर्मयूरैः केकारवैः कृत्वातिमाधुर्यात्तन्त्री वीणाधिगम्यते स्मार्यते तैर्मयूरैः पँड्जाधिजिगांसया षड्जस्वरपिपठिषया व्यरावि षँड्जस्वरः कृत इत्यर्थः । मयूरा हि पँड्जस्वरं कुर्वन्ति । तथा सद्यः केकाश्रवणकाल एव हंसैश्चाजिगांस्यत गन्तुमिष्टमँथानन्तरं मानसस्य सँरसोधिजिगांस्यते स्म च सुस्मूर्षितम् ॥

जघास आद । इत्यत्र "परोक्षायां न वा" [ १८ ] इति वा घँस्लृः ॥

उवाय ववौ । अत्र "वेर्वय्" [ १९ ] इति वा वय् ॥

१ डी °ध्यगीद्वा. २ बी °थ स्मा मा°.

१ ए °थ यथा. २ सी °न्न शास्त्रं°. ३ सी °स्त्रैरव°. ४ बी मत्रायु°. ५ डी °ध्यगीद°. ६ सी जमागा°. ७ ए °यमापत्प्रा°. डी °यमागा°. ८ डी षड्जाधि°. ९ डी षड्जस्व°. १० बी डी षड्जस्व°. ११ बी डी षड्जस्व°. १२ सी डी °श्चाधिजि°. १३ ए °मन्दान°. १४ डी सरोधि°. १५ सी घस्लृ ॥ उ°.

शश्रवान् शिशीर्वान् । दद्रवान् दिदीर्वान् । पप्रवान् पुपूर्वान् । अत्र "ऋः शृदृप्रः" [ २० ] इति [ वा ] ऋः ॥

वध्याः । अत्र "हन°" [ २१ ] इत्यादिना वधः । अत्राविति किम् । घानिपीष्ट ॥

मा वधीत् । इत्यत्र "अद्यतन्यां वा°" [२२] इत्यादिना वधः । वा त्वात्मने । आवधिष्ट । व्याहत ॥

अगात् । अध्यगात् । इत्यत्र "इणिकोर्गाः" [ २३ ] इति गाः ॥

गमयन् । अधिगम्यते । अत्र "णौ°" [ २४ ] इत्यादिना गमुः ॥ अज्ञान इति किम् । प्रत्याययन् ॥

इङ् । अधिजिगांस्यते ॥ ईक् । अधिजिगांमया ॥ इण् । अजिगांस्यत । इत्यत्र "सनीङश्च" [ २५ ] इति गमुः ॥

**स्वनद्धनेनाधिजिगापयिष्यमाणो मयूरोधिजगे सुनृत्तम् ।**
**तेनैव चाध्यापिपयिष्यमाणामध्यापिपत्स्वां दयितां च हृष्टः॥२१॥**

२१. मयूरो नृत्तमधिजगेधीतवांश्चकारेत्यर्थः । यतः स्वनद्धनेन गर्जता मेघेन कर्त्रा नृत्तमधिजिगापयिष्यमाणो गर्जया पाठयितुमिष्यमाण इव । तथा तेनैव च स्वनद्धनेनैव च नृत्तमध्यापिपयिष्यमाणां शिक्षयितुमिष्यमाणां स्वां दयितां च मयूरी च हृष्टः सन्मयूरो नृत्तमध्यापिपदपाठयत् । मेघगर्जां श्रुत्वा मयूरदम्पती नृत्ताविति तात्पर्यार्थः ॥

१ ए शृदृप्रः. २ डी °यत् । अ°. ३ सी डी इक । अ°. ४ ए सी डी अधिजि°. ५ डी °स्यते । इ°. ६ ए ई पाठितु°. ७ ए ई °व स्व°. ८ ई स्वनद्ध°. ९ ए °प XXX दपा°. १० बी °यिनां च. ११ ई च हृ°.

**अध्यैष्ट यांस्तान्पुनरध्यगीष्टाध्यजीगपन्स्त्रैणमितश्च रासान् ।**

**हल्लीसमध्यैष्यत चेद्भवत्यध्यगीष्य इत्याशु मिथो ब्रुवाणम् ॥२२॥**

२२. इतोस्मिन्वर्षाकृतौ स्त्रैणं यान् गमानध्यैष्टापाठीन् । तान्रासान् गेयकाव्यविशेषान्पुनर्भूयोप्यध्यगीष्टाध्यजीगपच्चान्यस्त्रैणमेव कर्मापीपठच्च रासान्स्वयं द्विस्त्रिर्वोच्चार्यान्यस्त्रैणेनोच्चारयामासेत्यर्थः । वृष्टौ हि स्त्रियः प्रमुदिता गमान्ददति । कीदृक् । मिथोन्योन्यं ब्रुवाणम् । किमित्याह । चेद्यदि भवती त्वं हल्लीसं नारीणां मण्डलीनृत्तमध्यैष्यताशिक्षयिष्यत तदाहमपि हल्लीसमाश्वध्यगीष्ये शिक्षिष्य इति । केचिद्भूतेपि हेतुफले क्रियातिपत्तिमिच्छन्ति तन्मते त्र क्रियातिपत्तिः ॥

**मूर्छीत्प्रिया मेत्यवदंश्चिरायाध्यायन्निरगायन्पथि कष्टमासन् ।**

**पान्थास्तदा व्योम्नि यदा पयोद आटीद्बलाकाततिराटदारात्**

**॥ २३ ॥**

२३. यदा व्योम्नि पयोदो मेघ आटीत्प्रससार तथारान्निकटे बलाकाततिराटद्भ्राम्यत्तदा पान्थाश्चिरायाध्यायन्नस्मरन्नवदंश्च । किमित्याह । प्रिया जातावेकवचनम् । वल्लभा मा मूर्छीदस्मद्वियोगे मा विचेतीभूदिति । अत एव निरायन्यस्मिन्देशे गता आसंस्ततो निर्गता अत एव च पथि जलदुर्गत्वात्कष्टमासन् ॥

**न चेद्धनाटिष्य इहाभविष्यं कथं तृषाहं भविता विहस्तः ।**

**चिरं तदास्स्वेति वदन्किलास्ते स्म चातकः पत्रपयोपि लिप्सुः॥२४॥**

२४. चातक आस्ते स्म तस्थौ । कीदृक्सन् । वदन् किल मेघदर्श-

१ ई °पस्त्रैण°. २ प सी °मध्येष्य°. ३ बी °यत्पथि.

१ प °षात्पुन°. २ प °मध्येष्य°. ३ ई °यिक्षन. ४ सी °ष्यति तदा°. ५ प °शिष्य°. ६ ई °ते क्रि°. ७ सी °त्प्रशसा°. ८ बी तदारा°. ९ सी °दबभ्रा°. १० प °म्यस्तदा. ११ प तस्थौ । की°.

नोत्थकूजितैर्भणन्निव । किमित्याह । हे घन चेत्त्वमिहाकाशे नाटिष्यस्तदाहं तृषा कृत्वा विहस्तो भविता व्याकुलो भवन्कथमभविष्यंस्तत्तस्माद्धेतोस्त्वं चिरं बहुकालमास्स्व तिष्ठेति । यतः पत्रपयोपि वृक्षपर्णोत्पतज्जलबिन्दुमात्रमपि मेघोन्मुक्तजलकणभ्रान्त्या लिप्सुः । एतेनास्य तृष्णाधिक्यमुक्तम् ॥

अधिजगे । अत्र "गा°" [ २६ ] इत्यादिना गाः ॥

अधिजिगापयिष्यमाणः अध्यापिपयिष्यमाणाम् । अध्यजीगपत् अध्यापिपत् । इत्यत्र "णौ सन्डे वा" [ २७ ] इति वा गाः ॥

अध्यगीष्ट अध्यैष्ट । अध्यगीष्ये अध्यैष्यत । इत्यत्र "वाद्यतनी°" [ २८ ] इत्यादिना वा गीङ् ॥

अवदन् । अध्यगीष्ट । अध्यगीष्ये । अत्र "अड् धातोर्°" [२९] इत्यादिना-अडादिः ॥ अमाङेति किम् । मा मूर्च्छीत् ॥

निरायन् । अध्यायन् । आसन् । इत्यत्र "एति°" [ ३० ] इत्यादिना वृद्धिः ॥

आटीत् । आटिष्यः । आटत् । इत्यत्र "स्वरादेस्तासु" [ ३१ ] इति वृद्धिः ॥

अभविष्यम् । भविता । इत्यत्र "स्तादि" [ ३२ ] इत्यादिना-इट् ॥ अशित इति किम् । आस्स्व । आस्ते ॥ अत्रोणादेरिति किम् । पत्र । उणादि । विहस्तः ॥

**चक्रे धनुष्कम्पितिसंगृहीतीर्जयं ग्रहीतुं शमसंवरीता ।**
**शरैर्जगत्प्रावरिता वरीता प्रीते रतेर्वा वरिता स देवः ॥ २५ ॥**

२५. शमसंवरीतेन्द्रियजयैस्याच्छादयिता प्रीतेर्वरीता वरो रतेर्वा

१ ई धनुःकम्पि°. २ सी डी °यं गृही°.

१ ई °ष्ठेत । य°. २ सी अत्र. ३ ए बी °माणम्. ४ डी अधैष्य°. ५ ई अद्भुतो°. ६ सी °ध्यास°. ७ सी डी पत्र । उ°. ८ सी डी °यस्यच्छा°.

वरिता स प्रसिद्धो देवः कामो धनुष्कम्पितिसंगृहीतीः अल्पस्वरत्वात्कम्पितेः प्राग्निपाते धनुषः संग्रहणानि कम्पनानि च चक्रे । यतो जयं ग्रहीतुं वर्षाबलेन प्राप्तं शरैर्जगत्प्रावरिता व्याप्नुवन ॥

तटान्दरित्रीर्विटपान्दरीत्रीर्नदीः सुखं तेरिथ नाथ कच्चित् ।
सद्यो रतिस्त्वां वरिपीष्ट विस्तरिषीष्ट चेत्थं पथिकं प्रियोचे ॥२६॥

२६. प्रिया पथिकमूचे । कथमित्याह । कच्चिदिष्टपरिप्रश्ने । हे नाथ नदीः सुखं सुखेन तेरिथ । कीदृशीरतिजलापूर्णत्वेन तटान्दरित्रीर्विदारयित्रीस्तथा विटपान्वृक्षान्दरीत्रीः । तथा सद्यो नदीतरणानन्तरमेव त्वां रतिः सुखं निधुवनं वा वरिपीष्ट सेवतां तथा रतिर्विस्तरिषीष्ट च विस्तृणीयाच्चेति ॥

व्यस्तारिषुः पट्चरणाः कदम्बान्यावारिषुर्वासवकार्मुकं च ।
समास्तरिष्टाम्बरमावरिष्ट व्यस्तीर्ष्ट गां प्रावृत शाद्वलं च ॥ २७ ॥

२७. पट्चरणा भृङ्गा व्यस्तारिषुर्बाहुल्याद्विस्तृता अत एव कदम्बानि कदम्बतरुपुष्पाणि कर्मावारिषुराच्छादयन । वर्षासु हि धाराकदम्बाः पुष्प(ष्य ?)न्ति । तथा वासवकार्मुकं चेन्द्रधनुश्च समास्तरिष्ट विस्तृतमत एवाम्बरं व्योमावरिष्ट व्याप । तथा शाद्वलं च । जातावेकवचनम् । सस्येन हरितानि स्थानकान्युपचाराद्धरिततृणानि वा व्यस्तीर्ष्टात एव गां पृथ्वीं प्रावृत ॥

१ ई कश्चित. २ ए °मामरि°.

१ ए °ता सः प्र°. २ बी °ष्कम्पति°. ३ ए सी डी °नि चक्र. ४ सी डी °यं गृहीं°. ५ डी °ष्टप्र°. ६ ए °ष्ट वि°. ७ ए °याश्चेति. ८ ए °णाभ्यङ्गा. ९ ए °दम्बोनि. १० ए बी सी °पुष्फाणि. ११ सी डी °राभिः क°. १२ ए °वान्तर. १३ ए °तनृणा°. १४ सी °श्वृतः ॥. ए °वृतः ॥ नृषी°.

वृषीष्ट केकां मृदु लास्यमास्तीर्षीष्टाशु[1] ते चेद्भवतास्मृषाताम् ।
पुरा हि ये व्यस्मरिपूर्वषातां[2] शि[3]खण्डिनी[4]तीव ललाप कान्तम्
॥ २८ ॥

२८. शिखण्डिनी मयूरी कान्तं मयूरं ललापेव मेघदर्शनोत्थस्व-रेणोवाचेव । कथमित्याह । हे कान्त भवता ये केकालास्ये हि स्फुटं पुरा वर्षाकालात्पूर्वं व्यस्मरिपूर्वषातां[1] व्यस्मरिषातां चिरं[2] त्यागाद्विस्मृ[3]ते ते केकालास्ये चेद्भवतास्मृषातां मेघालोकेन स्मृते तदाशु केकां भवा[4]-न्वृषीष्टाश्रीयात्तथा मृदु लास्यं[5] नृत्तमास्तीर्षीष्ट विस्तीर्या[6]दिति ॥

स्मृषीष्ट गोप्त्री भवतेष्टदेवी प्रगोपिता वा स्मरिषीष्ट देवः ।
यत्ते धवित्री[5] तरु[6]खण्डधोत्री भोः पान्थ झञ्झेत्यरमन्नु मेघः ॥२९॥

२९. मेघोऽरमन्नु गर्जयावोचदिव । किमित्याह । भोः[7] पान्थ[8] तरु-खण्डधोत्री वृक्षवनस्य कम्पिका झञ्झा सशीकरो[9] वातो यद्यस्मात्ते धवित्री[10] कामोद्दीपकत्वेन कम्पिका तस्माद्भवता गोप्त्री रक्षिके[11]ष्टदेवी स्मृषीष्ट स्मर्यतां प्रगोपितेष्टदेवो वा[12] भवता[13] स्मरिषीष्टेति ॥

ररन्धि[7]मैनं[8] न[9] न किं तु रे[10]ध्मापिस्फायिपुर्यो मदनं न चाना ।
पिस्फा[11]सुरस्त्वस्य नि[12]चायिता तत्केतकस्य ई[13]त्यूचुरिवालिनादैः[14]
॥ ३० ॥

१ प °र्षीष्टांशु. २ डी °ता कान्तललापेव शिषण्टिनीनि ॥ शिषण्डिनी म°. ३ प शिषण्डि°. ४ सी °नी म°. ५ प धरित्री. ६ डी ई °रुपण्ड°. ७ ई °न्धिमेनं. ८ बी °मैत न. ९ प बी डी ननु किं. सी न तु किं. १० डी रेध्मापि°. ११ प °पिस्पायि°. १२ प °चायता. १३ सी इत्युचूरि°. डी इत्युचु°. १४ प °नादौ ॥ के°.

१ प °रिपूर्वषातां चप त्या°. २ सी चिरत्या°. ३ प °द्विसरिते. ४ प सी °वान्नृषी°. ५ प लास नृ°. ६ बी विस्तायां°. ७ प भो भ्यान्थ. ८ डी पान्था त°. ९ बी ससीक°. १० सी डी धरित्री. ११ प ई रक्षके°. १२ बी वा स्म°. १३ प भविता.

३०. केतक्योलिनादैरूचुरिव। किमित्याह। अपिस्फायिपुर्वर्धितुमनिच्छुः सन्यो मदनं न चाता न पूजयत्येनं मुन्यादिजनं वयं नै न ररन्धिम न न हतवन्तः किं तु रेध्म वयमेव तं हतवन्त एवेत्यर्थः। तत्तस्माद्यः पिस्फासुर्जीवितव्यादिना वर्धितुमिच्छति सोस्य मदनस्य निचायिता पूजकोस्त्विति॥

प्याता घनः प्यायितृकाम एवं मनांसि निष्कोष्टुमलं जनानाम्।
ध्यानक्रियानिष्कुषितं तु राज्ञो मनो न निष्कोषितुमीपदासीत्॥ ३१॥

३१. एवमुक्तरीत्या प्याता वर्धिष्णुर्घनो जनानां मनांसि निष्कोष्टुमाक्रष्टुं कामवासनया व्याकुलीकर्तुमित्यर्थः। अलं समर्थ आसीत्। यतः प्यायिता वर्धिष्णुः कामो यत्र सः। राज्ञस्तु कर्णस्य पुनर्मनो निष्कोषितुमीपन्मनागपि नालमासीत्। यतो ध्यानक्रियानिष्कुषितं प्रणिधानेनाकृष्टं वशीकृतमित्यर्थः॥

संगृहीतीः। कम्पिति। इत्यत्र "तेर्" [३३] इत्यादिना-इट्॥

ग्रहीतुम्। संगृहीतीः। अत्र "गृह्ण" [३४] इत्यादिना दीर्घः॥

वृग्। संवरीता प्रावरिता। वृङ्। वरीता वरिता। ऋदन्त। दरीत्रीः

१ बी °यितृका°. २ ई °काम ए°. ३ ए मनांसि. ४ बी निःकोष्टु°. ५ ए ई °ष्कुषितं. ६ ए °ष्कोषितु°.

१ बी सी °त्येत मु°. २ ए ई न र°. ३ ए वयमे°. ४ ए °र्जीवित°. ५ ए °धित्तमि°. ६ ए पूजितो कोस्त्विति. ७ डी °धिष्णुर्घ°. ८ ए मनासि. ९ ई °ष्टुका°. १० ए सी °धिष्णुका°. ११ ए °ष्कोपितु°. १२ ए °कृष्ण व°. १३ बी °हीती। क°. १४ डी °ट॥ गृही°. १५ ए °रीत्या व°. १६ ए °ता। ऋद°. १७ ए ई दन्ता। द°. १८ ई दरित्रीः दरीत्रीः। अ°.

दरित्रीः । अत्र "वृतो न वा°" [ ३५ ] इत्यादिना वा दीर्घः ॥ परोक्षादिवर्जनं किम् । तेरिथ । वरिपीष्ट । विस्तरिपीष्ट । आवारिपुः । व्यस्तारिपुः ॥

प्रावृत आवरिष्ट । व्यस्तीर्ष्ट समास्तरिष्ट । वृषीष्ट वरिपीष्ट । आस्तीर्षीष्ट विस्तरिपीष्ट । इत्यत्र "इट्" [ ३६ ] इत्यादिनेड्वा ॥

अस्मृषाताम् व्यस्मरिषाताम् । स्मृर्षीष्ट स्मरिषीष्ट । इत्यत्र "संयोगादृतः" [ ३७ ] इतीड्वा ॥

धोत्री धवित्री । गोप्त्री प्रगोपिता । इत्यत्र 'धूगौदितः" [ ३८ ] इतीड्वा ॥

स्ताद्यशित इत्येव । रधांच । ररन्धिम ॥ अन्यस्त्वत्रापि विकल्पमिच्छति । रेध्म ॥ एके तु चायिस्फायिप्यायीनामपि विकल्पमिच्छन्ति । चाता निचायिता । पिस्फासुः अपिस्फायिषुः । प्याता प्यायितृ ॥

निष्कोष्टुम् निष्कोषितुम् । अत्र "निष्कुषः" [ ३९ ] इतीड्वा ॥

निष्कुषितम् । अत्र "क्तयोः" [ ४० ] इतीट् ॥

**व्रश्चित्व ऋद्धं तिमिरं जरित्वा देवित्व ऋक्षाध्वनि हार्युषित्वा ।**
**द्यूत्वास्तभूभृत्युषितः क्षुधित्वेवात्रान्तरं प्रोषितवान्दिनेशः ॥ ३२ ॥**

३२. अत्रान्तरेऽस्मिन्प्रस्तावे दिनेशो रविः क्षुधित्वेव बुभुक्षितीभूयेव प्रोषितवान्देशान्तरं ययौ । यतोस्तभूभृत्यस्ताचले द्यूत्वा विलस्योषितः स्थितः । पूर्वं कीदृग्भूत्वापि । ऋद्धं स्फीतं तिमिरं व्रश्चित्वा

१ ए °श्चित्त ऋ°.

१ ए °त्र वृतो. २ बी °ना दी°. ३ बी °ष्ट । अवा°. ४ ए °रिपु । व्य°. ५ ई °स्तोष्ट । स°. ६ सी डी °मानरि°. ७ ए इतोड्वा. ८ सी डी °ड्वा ॥ धात्रो. ९ ई 'न्धिन् ॥ अ°. १० सी डी °ध्म ॥ अपरे तु. ११ सी °ष्कोपि°. १२ ए ई नि कुषः. १३ ए ई निःकुषि°. १४ सी डी षितुम्. १५ ए ई °तोड् ॥. १५ ए क्षुधित्वव बुभु°. १६ ए °त्वा । ऋ°.

खण्डशः कृत्वा जरित्वा क्षयं नीत्वा च तै[1]र्थ[2]क्षाध्वनि व्योम्नि देवित्वा क्रीडित्वा तत्रैव हारि मनोज्ञं यथा स्यादेवमुपित्वा स्थित्वापि । योपीश ईश्वरः पृथ्व्यां हार्युपित्वास्तभूभृति क्षीणनृप आधारे द्यूत्वा व्यवहृत्य स्थितः स्यात्स क्षुधित्वा सर्वर्द्धिक्षयाद्बुभुक्षितो भूत्वा देशान्तरं यातीत्युक्तिलेशः ॥

गुहासु यद्वा[1]वसितं वने वा वावस्तवत्ते[2]त्क्षुधि[3]तं नु रक्षः ।
दृशो लुभित्वा लुभितालकश्रि शक्राश्चिताशां तिमिरं निराश ॥३३॥

३३. यद्गुहासु वावसितं[3]मत्यर्थं[4] स्थितं यच्च वने वा[5] वनगहने[5] वावस्तवत्तत्तिमिरं दृशोक्षीणि लुभित्वा व्याकुलीकृत्य शक्राश्चिताशां पूर्वा[7] निराशाभक्ष[6]यद्व्यापेत्यर्थः । कीदृक्सन् । लु[8]भिता आकुलीकृता ये[9]लकाः केशास्तद्वच्छ्रीर्यस्य तत्सर्वदिक्षु प्रसृमरं कृष्णं चेत्यर्थः । अत एव क्षुधितं नु रक्षो बुभुक्षितराक्षस इव । तदपि हि[10] गुहा[11]सु वने वावसति विसं[12]स्थुलवालं च स्यादत ए[13]व रौद्राकारत्वा[14]ल्लोकदृशो व्याकुलीकरोति क[15]या-द्यप्यत्ति च ॥

दिशो ध्वजैरश्चितवद्र[4]मांकोश्चित्वाभिपूतं परिपूतव[5]त्क्ष्माम् ।
वपुः पवित्वा[6] सुकलाश्च पूत्वाप्सरोगणोथो पवितः प्रपेदे[7] ॥ ३४॥

३४. अथो तिमिरप्रसरणानन्तरं पवि[16]तो रूपादिश्रिया पवि[17]त्रोप्स-

१ प ई वा चाव°. २ प °त्तक्षुधि°. सी °त्पुधि°. ३ डी तं तु र°. ४ °कोश्जित्वा°. ५ प °वक्ष्याम्. सी °वतक्ष्मा°. ६ सी डी °त्वा स्वक°. ७ प °पेदेः ॥ अ°.

१ सी डी तथार्क्षा°. ई नथाध्व°. २ प °थक्षाध्व°. ३ प °तमित्य°. ४ सी वा वावस्त°. ५ प बी °न वा वाव. ६ ई °क्षय्या°. ७ प °ह्याप्येत्य°. ८ प °भित्वा आ°. ९ बी सी °लका के°. १० प हि सुगुहासु भुव°. ११ ई °हाव°. १२ ई °स्थुल वा°. १३ बी सी डी °व च रौ°. १४ प °त्वालोक°. १५ ई क्याद्यप्य°. १६ बी °विता रू°. १७ °विवोप्स°.

रोगणो रमौको लक्ष्मीभवनं प्रपेद आगतः । किं कृत्वा । रमौको-[1]श्चित्वा पुष्पगन्धादिभिः पूजयित्वा । किंभूतम् । ध्वजैः कृत्वा दिशो[2]श्चितवत्पूजितवत्सर्वदिग्व्यापकध्वजान्वितमित्यर्थः । तथाभिपूतं[3][4] चन्दनच्छटादिना पवित्रम् । तथा क्ष्मां पृथ्वीस्थं लोकं परिपूतवद्दारि-द्र्यमलोच्छेदेन[5] पवित्रितवन्तम् । तथा वपुः स्वाङ्गं पवित्वा वेषेण संस्कृत्य । तथा कलाश्च गीतनृत्तादिकाः पूत्वा सतताभ्यासेन निर्मलीकृत्य ॥

**तन्त्र्या करावक्लिशितौ क्लिशित्वा क्लिष्ट्वांसमक्लिष्टमथेह काचित्[1] ।**
**भावैर्वपुः क्लिष्टवती विलोभित्र्यलोब्धरि क्ष्माभुजि दत्तदृष्टिः ॥३५॥**

३५. अथेह रमौकसि काचिद्देवी भावैः सात्विकै रत्यादिभिर्वा कृत्वा वपुः क्लिष्टवत्यपीडयत् । राज्ञि भावानां निरर्थकत्वाद्वपुःक्लेशमेव चकारेत्यर्थः । किं कृत्वा । अक्लिशितावपीडितौ मृदू इत्यर्थः । करौ तन्त्र्या वीणया कृत्वा क्लिशित्वा वादनाय तन्त्र्याघातेन पीडयित्वा तथाक्लिष्टमंसं स्कन्धं वीणादण्डस्थापनेन क्लिष्ट्वा वीणां वादयित्वेत्यर्थः । कीदृक्सती । विलोभित्री साभिलाषात एवालोब्धर्यार वशित्वान्निःस्पृहेपि क्ष्माभुजि कर्णे दत्तदृष्टिः ॥

**न नैष सोढा सहितेव किं त्वेषित्रीरनेष्टाप्यविरोपिता नः ।**
**रोष्टाथ चेन्नोन्ग्यत एष रेष्टेति भीतिरेपित्र्यपरा ननर्त ॥ ३६ ॥**

३६. अपरा काचिद्देवी ननर्त । कीदृक्सती । भीतिरेपित्री मर-

१ डी क्लिष्ट्वाम°. २ ए °तावक्लो°. ३ सी °ना न । रो. ई °ना नाः । रो°. ४ ए °ष्टाप्य चे°. सी °ष्टा चे°.

१ ए °मोकाश्चि°. २ ए दिशाश्चित°. ३ ए °भिभूत. ४ ए ई °तंच्छ°. ५ ए °च्छेदन. ६ ए °वत । न°. ७ ई पूत्वा म°. ८ ए भावै मा°. ९ बी °कैरित्या°. १० ए वपु क्लि°. ११ ए °तौ पृदू. ई °ता पट्टू°. १२ ए °भित्री सा°. १३ ए °ता र°.

णादिभयस्यापनायिका। कथमित्याह। एष कर्णोऽनेष्टापि वशित्वान्निः- स्पृहोपि नोऽस्माने पित्रीः साभिलाषाः सतीर्न न सोढा किं तु सहिष्णुरेव क्षमिष्यत्येवेत्यर्थः। यतो विरोपिनाक्रोधनोऽथ वा चेद्यदि रोष्टा क्रोत्स्यति तदाप्येष कर्णोतिदयालुत्वाद्दीध्यतो रौद्रेणास्मान्न रेष्टा न हनिष्यतीति ॥

भर्तासि शच्या भरिता नु भानां व्योमाशिताष्टा च दिशस्त्विषेति।
जगावसंस्तोत्र्यपरा स्तवित्री वस्त्युत्तरीयं वसनं वसित्री ॥ ३७ ॥

३७. असंस्तोत्र्यपरिचितादृष्टपूर्वेत्यर्थः। अपरा देवी कर्णं जगौ गायति स्म। कीदृशी सती। उत्तरीयमुपरितनं वस्त्रं वस्त्र्येकेन करेण परिदधाना। तथा वसनं पारिशेष्यादधोवस्त्रमपरकरेण वसित्री। कर्णस्य मनःक्षोभनाय वस्त्रपरिधानमिषेण स्तनाद्यवयवान्दर्शयन्तीत्यर्थः। तथा स्तवित्री कर्णं स्ववशीकर्तुं गीतमध्ये वर्णयन्ती। कथमित्याह। हे राजंस्त्वं त्विषा कृत्वा व्योमाशिता भ्रमिता व्यापक इत्यर्थः। दिशश्चाष्टा व्यापकस्तदसि त्वं शच्या भर्ता नु किमिन्द्रः। भानां नक्षत्राणां भरिता नु भर्ता वा किं वा चन्द्रोसीत्यर्थः। इन्द्रचन्द्रौ हि व्योम दिशश्च त्विषा व्याप्नुत इति ॥

शोक्रीमदोत्रीं दवितासि किं मां न शोचिता किं रविता न किं वा।
रोत्री प्रणोत्रीति च वेणुगीत्योपालब्ध तं श्रीनवितारमन्या ॥३८॥

३८. अन्या देवी श्रीनवितारं लक्ष्मीदेव्याः स्तोतारं तं कर्णमुपा-

१ ए भत्स्यासि. २ ए सी °तासि कि. ३ ई च वीणु° ४ बी लब्धं त.

१ ई °णादलयस्याप°. २ ए °ष्टाभि व°. ई °ष्टा व°. ३ सी डी ई °त्वान्निःस्पृ°. ४ ए °तीना न. ५ ई क्रोस्यति. ६ ई °तो रोद्यण नोस्मा°. ७ सी डी रौद्येणा°. ८ ए °द्रेणोसान्ना रे°. ९ ए न हिनि°. १० सी डी हरिय°. ११ ए °परिक°. १२ ए °मासिता. १३ सी डी ग्रशिता. १४ ए भत्ता नु. १५ ए °षा वाप्नु°.

लब्ध[1] सेनिन्दमवोचत्[2] । यतः[3] कीदृशी । वेणुगीत्या वंशस्य गानेन कृत्वा रोत्री वदन्ती प्रणोत्री च परमार्थतः कर्णरूपसौभाग्यादि स्तुवती[4] च । कथमित्याह । हे राजन् शोकीं त्वद्विरहदुःखेन सशोकां तथादोत्रीम[5]सन्तापिकां त्वमेव मे प्रिय इति प्रतिज्ञया ते सुखयित्रीमित्यर्थः । मामसि त्वं किं दवितानङ्गीकारेण किमिति संतापयसि तथा[6] त्वं[7] मां[8] न[9] किं शोचिता हा मद्विरहेणासौ वराकी दुःखितेत्येवं किं न शोचसि किं वा मां न रविना नालपसीति[10] ॥

**सोतैष कोपं सविता क्षमां[1] वा दुग्धूषुरस्मानदिदेविषुर्वा ।**
**इतीत्स[2]दूहार्दिधिषुस्मरान्या सस्मार नाधीतमपीह[3] गीतम् ॥ ३९ ॥**

४०. अन्या देवीह कर्णविषयेधीतमपि[11] पूर्वपठितमपि गीतं न सस्मार । यतः कीदृशी । इत्सै[12]न्विवार्धिषुरूहो यस्याः सा वितर्का[13]कुला । कथमित्याह । एष कर्णः कोपं मद्ध्यानस्य विघ्नाधायिका एता[14] इति क्रोधं[15] सोता[16] जनयिता[17] सु प्रसव[18]ैश्वर्ययोः । वाथ वा संप्रति प्रशान्तत्वात्क्षमां सविता तथैषोस्मान्दुग्धपूर्वमु[19]रदिदेविषुर्वेति । तथार्दिधिषुः कर्णरूपदर्शनाद्विवर्द्धि[20]षुः स्मरो यस्याः सा कामविह्वला च ॥

१ ए °मां व दु°. ई °मां च दु°. २ ए °तीत्मपूहा°. ३ ए °ह गतिम्.

१ डी °ध तमिदम°. २ सी ममिदम°. ३ ए यत की°. ४ ए °तीत । क°. ५ डी °त्रीससन्ता°. ६ ए °था त्व गां न. ७ सी त्वं मा किं न शो . ८ डी मां किं न शो ९ बी न शो°. १० ए °ति ॥ सौतै°. ११ ए °पि गी°. १२ बी इंच्छंन्वि°. १३ ए °तर्काकु°. १४ ए एमा इ°. १५ ए क्रोध मो°. १६ डी सोतां ज°. १७ बी सी डी ई °ता सु प्र°. १८ सी डी प्रशवै°. १९ डी °सुरादि°. २० बी °द्धिपु स°.

अधिप्सुमा[1]शिश्रयि[2]षुं युयूषुं शिश्रीषसे किं [3]न दिदम्भिषो माम् ।
बिभ्रक्ष्यमाणां यियविष्वनङ्गानलेन बि[4]भ्रज्जिषसि [5]त्वमाः किम् ॥ ४० ॥

धा[6]र्ष्ट्यं [7]बुभू[8]र्षुर्बि[9]भरिष्वलज्जामि[10]तीङ्गितं काचिद[11]नूर्णुनूषुः ।
भा[1]वैर्बलात्प्रोर्णुनविष्यमाणा तालं बिभर्षुः सहसा तमूचे ॥ ४१ ॥

४०. ४१. काचिद्देवी सहसा रत्यादिपरवशत्वेनापर्यालोचितमेव तं [1]कर्णमूचे । कीदृक्सती । कर्णदर्शनाद्भावै रत्यादि[2]भिर्बलात्प्रो[3]र्णुनविष्य[4]माणा [5]व्याप्तुमिष्यमाणात एवा[6]लज्जां निर्लज्जतां बिभरि[7]र्षु पोषयि[8]तुमिच्छु धारयितु[9]मि[10]च्छु वा [11]धा[12]र्ष्ट्यं प्रागल्भ्यं बुभू[13]र्षुरत एव चेङ्गितं स्मरचेष्टितं[14]म[15]नूर्णुनूषुः प्रकटयितुमिच्छुरत ए[16]वं च तालं चञ्चपुटादि बिभर्षुर्धारयितुमिच्छुस्तालं वादयन्तीत्यर्थः । कथमूच इत्याह । हे दिदम्भिषो[16] [17]दम्भितुमिच्छो मां किमिति न शिश्रीषसे न सेवितुमिच्छसि । किंभूतामधिप्सुं दम्भितुम[18]निच्छुं तथा[19]शिश्रयिषुं[20] सिसेविषुं तथा युयू[21][22]र्षुमालि[23]ङ्गितुमिच्छुं तथा[24] आः खेदे [25]यियविष्व[26]नङ्गानलेन संव-

१ ई °शिश्रियि°. २ प °यिपु यु°. ३ प न त्रिद°. ४ सी ई °भ्रजिष°. ५ प त्वमा कि°. ६ प °र्ष्य्यं विभू°. ७ डी बुभूंर्षु°. ८ ई °भूपुर्वि°. ९ प °र्षुंबिभ°. १० डी °मिताङ्गि°. ११ प °नूर्णनू°.

१ प कर्म्ममू°. २ ई °भिबला°. ३ बी °र्णुनंवि°. ४ प माणो व्याप्नुमि°. ५ सी °मिच्छुरत××एव च ता°. ६ डी °लज्जा नि°. ७ सी ई रिपुं पो°. ८ ई °पुं प्रोष°. ९ प °तुनिच्छु. १० प °मिच्छ वा. ११ प धाष्टय प्रा°. १२ प °भूपुर°. १३ प °मचूर्णनूपुः. १४ ई °नूर्णनू°. १५ बी सी डी °व ता°. ई °वथ ता°. १६ प °षोर्दम्भि°. १७ ई दन्दम्भि°. १८ प °निच्छुत°. १९ प ई °शिश्रीपुं. २० ई °षुं त°. २१ प °षुना लि°. २२ सी डी °मालङ्गि°. २३ ई °ङ्गितमि°. २४ प °था आ खे°. २५ बी °दे ययिवि°. २६ प °नङ्गवले°.

ह्रीभवितुमिच्छुना कामाग्निना[1] विभ्रक्ष्यमाणां दग्धुमिष्यमाणां[3] मां किमिति बिभ्रज्जिषस्यनङ्गीकारेण [4]दग्धुमिच्छसीति । अलज्जामित्यत्रेतिशब्दो भिन्नक्रमेत्र योज्यः ॥

मानाद्यया जिज्ञपयिष्यसे न वुवूर्ष्यसे[1] नापिपतिष्यसे न ।
ह्रीप्सुः प्रपित्सुर्विवरीषुरास्[2]तां ध्यातासि चित्ते सिसनिष्[3]वलज्जः ॥ ४२ ॥

ततः सिषास्वा तितनिष्यमाणमुदा[4] मया शुष्कधुनीं[5] तितीर्षा[6] ।
तितंस्यतेनुत्तितरीषु चक्षुर्मुधा[7] त्वयीत्येष[8] कया चिदूचे[9] ॥ ४३ ॥

४२. ४३. कयाचिद्[5]देव्या एष कर्ण ऊचे । कथमित्याह । यस्मात्त्वं यया सुभगया[6] मानात्सौभाग्याहंकारान्न जिज्ञपयिष्यसे न तोषयितुमिष्यसे[7] न वुवूर्ष्यसे[8] याचितुं सेवितुं वा नेर्ष्यसे न चापिपतिष्यस आगन्तुमपि नेष्यसे । आः खेदे कोपे वा । तां नायिकां सिसनिषुः सेवितुमिच्छुरलज्जा यस्य[9] स निर्लज्जोसि त्वं चित्ते ध्याता स्मरसि[10] । कीदृक्सन् । तां[11] ह्रीप्सुस्तोषयितुमिच्छुः[12] प्रपित्सुर्गन्तुमिच्छुर्[13]विवरीषुः सेवितुमिच्छुश्च[14] । ततस्[15]तस्माद्धेतोस्तितनिष्यमाणा त्वद्रूपातिशयदर्शना[16]द्विस्तारयितुमिष्यमाणा मुद्यया तया । अत एवं[17] रागोल्लासेन सिषास्वा त्वां

१ ए °वृर्ष्यसे. २ डी °षुरीस्तां. ३ ए °निष्ठल॰. ४ ए °माणः मु°. ५ ई शुष्कधु°. ६ ए °तीर्था । ति°. ७ ए °क्षुर्मधान्वर्यां°. ८ डी °त्वयात्ये°. ९ बी सी डी °च ॥ एष कर्णः क°.

१ ए °ना विवक्ष्य°. २ ई दभ्रमि°. ३ ई °णां कि°. ४ ई दग्रुमि°. ५ बी सी डी ई °देव्योचे. ६ ई °भया. ७ ए °ष्यते न. ८ ए °ष्यंत न. ९ ए °स्य नि°. १० ए °रसि । कीदृक्संज्ञांस्तां ह्री°. ११ ई तां जीप्सु°. १२ ए °मित्सु प्र° सी °मिच्छुर्वि°. १३ ई °पिच्छुर्ग°. १४ सी डी °च्छुस्तत°. १५ बी तत्तस्मा°. १६ ए °द्विस्तर°. १७ सी डी °व च रा°.

सेवितुमिच्छन्त्या मयानुत्तितरीष्वगाधलावण्यामृतनिमग्नत्वेनोत्तरीतुमनिच्छु चक्षुस्त्वयि विषये मुधा निरर्थकं तितंस्यते दर्शनाय विस्तारयितुमिष्यते । यतः कीदृश्या । शुष्कधुनीं निर्जलनदीं तितीर्ष्वानुरागरसरहितत्वाच्छुष्कनदीतुल्यं त्वां दुःखकारि निरर्थकं चाभिलषन्त्येत्यर्थं इति ॥

दिभाग्दरिद्रासुतनुस्तपोभिर्लक्ष्मीं भजेतादिदरिद्रिषुर्ना ।
विसिस्मयिष्वा पिपविष्यमाणो गिरिष्यसे ङ्गशिशिषुश्रिया त्वम् ॥४४॥

तेजस्तमिस्रं चिकरीषदाजिगरीषदास्त्वाञ्जिजिपत्यधीशम् ।
त्वया तपः किं दिधरिष्यते तद्ध्रिक्षुकैरादिदरिष्यते हि ॥ ४५ ॥

पिपृच्छिषुं मां निहनिष्यसि त्वं करिष्यसे नोत्तरमुचिचृत्सुः ।
चिचर्तिषुश्छद्म च चेत्तितृत्स्वा तर्दिष्यसेऽङ्गेन मयामुना तत् ॥४६॥

चिकर्तिषूनप्यचिकृत्सुमुचिच्छृत्सावचिच्छिर्दिषुमित्यमुं द्राक् ।
उक्त्वा निनृत्सुः प्रनिनर्तिषुभ्रूः काचिद्विलक्षाब्जदलान्यकर्तीत्
॥ ४७ ॥

१ ए °ग्दद्दिद्रा°. २ ए °क्ष्मी भुजे°. ३ ए ई °जेथादि°. ४ ए वि स°. बी ई विसस्म°. डी वि जिम्म°. ५ सी डी रिरष्य°. ६ ई °रिषिमे°. ७ ए सी °मिश्रां चि°. बी °मिश्रं चि°. ई °मिश्रा चि°. ८ ई दिधिरि°. ९ ए बी ई °चिभृत्सुः. १० डी तर्हिष्य°. ११ ए °चिच्छर्दि°. १२ ए उक्ता नि°. १३ ई निनित्सुः. १४ ई °चिद्वल°. १५ ए बी ई °र्तान् ॥ का°.

१ ए °त्वेन त्वत्त°. सी °त्वेनत्त°. ई °त्वन तूत्त. २ ए °ष्कधनी. ३ सी डी °तीर्ष्वानु°. ४ ए °ससहि°. ५ ए दुःखका°. बी दुरवका°. ६ बी °भिलाष°. ७ ए °षन्तेत्य°. ई °षन्तीत्य°.

४४–४७. काचिद्देवी कर्णक्षोभलक्षणकार्यासिद्धेर्[1]विलक्षा सत्यब्जदलानि क्रीडाकमलपत्राण्यकर्तीञ्चिच्छेद[2] । विलक्षो हि पत्रकर्तनभूविलेखनादि[3] कुरुते । किं कृत्वा । विलक्षामुं[4] कर्णमुक्त्वा । कीदृक्सती । कर्णमनःक्षोभ[5]नार्थं[6] निनृत्सुर्नर्तितुमिच्छुस्तथा प्रनि[7]नर्तिषू[8] नर्तितुमिच्छू भ्रुवौ यस्याः सा[9] च । कीदृशममुम् । चिकर्तिषूनपिच्छेत्तुमिच्छूनपि रोद्धुमिच्छूनपि[10] वा शत्रूनपीत्यर्थः । अचिकृत्सुं[11] जितद्वेषत्वात्प्रतिकर्तुम[12]निच्छुं तथोञ्चिच्छृत्सावपि । अपिरत्रापि योज्यैः[13] । क्रीडितुमिच्छावपि मित्रेपीत्यर्थः । अचिच्छर्दिषुं जित[14]रागत्वात्क्रीडितुमनिच्छुम् । कथमुक्त्वेत्याह । हे राजन्नदिदरिद्रिषुर्[15]दरिद्रः सन्नदरिद्रीभवितुमिच्छुर्ना नरो लक्ष्मीं[16] देवतां दारिद्र्योच्छेदाय भजेत सेवितुमर्हति । कीदृक्सन् । तपोभिः कृत्वा दिप्राग्दरिद्रासुर्[17]दिदरिद्रासुः[18] कृशीभवितुमिच्छुस्तनुर[19]ङ्गं यस्य स त्वं तु विसिस्मयिष्वा[20]श्चर्यभूतया[21]शिशिषुश्रिया सर्वाङ्गं व्याप्तुमिच्छन्त्या लक्ष्म्या राज्यश्रिया पिपविष्यमाणः पवित्रीकर्तुमिष्यमोणः[22] सन्नङ्गि[23]रिष्यसे[24] गन्तुमिष्यसे[25] सेवितुमिष्यस इत्यर्थः । अत एव । आ विस्मये[26] । तमिस्रं[27] तिमिरं चिकरीषत्[28]क्षेप्तुमिच्छ्राजिगरीषेद्[29]ग्रसितुमिच्छु प्रचण्डमित्यर्थः । तेजोङ्गदीप्तिस्त्वा त्वामधीशं राजानमञ्जिजिषति प्रकटयितुमिच्छति तस्माद्धि स्फुटं यत्तपो भिक्षुकैर्भिक्षाचरैरादिदरिष्यते[30]ञ्जीचिकीर्ष्यते तत्तपस्त्वया किं केन हेतुना[31] दिधरिष्यते ।

---

१ प °द्धे विल°. २ प तींचिच्छे°. ३ प सी डी °लेषना°. ४ °क्षासुं क°. ५ सी °क्षोभाय. ६ प बी ई °य ननृ°. ७ प· प्रतिनि°. ८ प षूर्नेत्तितु°. ९ ई सा । की°. १० ई °पि श°. ११ प °त्सुं चित°. १२ ई °र्तुमिच्छुं. १३ ई °ज्यः । कीडि°. १४ प जिगत°. १५ बी °पुदरि°. १६ ई लक्ष्मीदे°. १७ डी °द्रासुः कृ°. १८ प °द्रासुकृसीभ°. १९ प °स्तमुरगं य°. २० प ई विसस्म°. २१ प °तयाः शि°. २२ प बी °माण स°. २३ ई °रिरंध्य°. २४ बी °से रन्तु°. सी °से पन्तु°. २५ प °से इ°. २६ ई °ये । तिमि°. २७ प °मिस्रां ति°. सी ई °मिश्रां ति°. २८ प °रीपत्क्षेपुमिच्छाजि°. सी रीषुत्क्षे°. २९ प °षद्भुसि°. ३० सी डी °तेत°. ३१ बी °ना दधिरि°.

इट् अन्तर्भूतणिगर्थः सकर्मकः । धर्तुमिष्यते चरितुमिष्यत इत्यर्थः । तथा चेत्त्वमुभिचृत्सुः कोपेन हन्तुमिच्छुः सन् पिपृच्छिषुमुक्तगीत्या प्रष्टुमिच्छुं मां निहनिष्यसि चपेटादिना ताडयिष्यसि । तथा चेत्त्वं कुध्य ध्यान्यहं मौन्यहमित्येवं मायां चिचर्तिपुर्ग्रन्थितुमिच्छुश्चिकीर्षुः सन्नुत्तरं पूर्वपृष्टप्रतिवचनं न करिष्यसे च तत्तदा तितृत्स्वा जिघांस्वा मयामुना प्रत्यक्षेणाब्जेन कर्त्री त्वं तर्दिष्यसे हनिष्यस इति ॥

जरित्वा । व्रश्चित्वा । इत्यत्र "जॄव्रश्चः क्त्वः [ ४१ ] इतीट् ॥

देवित्वा द्यूत्वा । इत्यत्र "उदितो वा" [ ४२ ] इति वेट् ॥

क्षुधितम् । क्षुधित्वा । उषितः । प्रोषितवान् । उषित्वा । इत्यत्र "क्षुध०" [ ४३ ] इत्यादिना-इट् ॥ यङ्लुपि वावमितम् । यङ्लुपि नेच्छन्त्यन्ये । वावन्तवत् ॥

लुभित । लुभित्वा । अञ्चित । अञ्चितवत् । अञ्चित्वा । इत्यत्र "लुभि० [४४] इत्यादिना-इट् ॥

अभिपूतम् परिपूतवत् पूत्वा पवितः पवित्वा । अक्लिष्टम् । क्लिष्टवती क्लिष्ट्वा अक्लिशितौ क्लिशित्वा । इत्यत्र "पूङ्०" [ ४५ ] इत्यादिना वेट् ॥

सोढा सहिता । अलोब्धरि विलोभित्री । अनेष्टा एषित्रीः । रोष्टा अविरोषिता ।

१ बी धृङा अ०. २ ए धर्तुमि०. ३ ए °चिभृत्सु को°. बी ई °चिभृत्सुः. ४ ए बी °मित्सुः स°. ५ ए °मिच्छु मां. ई °मिच्छ मां. ६ ए मौनाह°. ७ ए °त्येव मा°. ८ सी ई °यां विवर्ति°. ९ ए °पुग्रन्थि°. १० डी °ग्रंथित्तु°. ११ मित्सुश्चि°. १२ ए समुत्त°. १३ ई °नं क°. १४ सी डी °ष्यसि च. १५ ए च वत्त°. १६ ए °त्वा त्व तदिष्य°. १७ ए सी °से इ°. १८ बी सी °व्रश्च क्त्वः. १९ ए क्षुधित्वा. २० ई °षित । प्रो°. २१ ए सी °त । प°. २२ ए अक्लिष्ट°. २३ ए °ष्टा पषि°. २४ ए °त्रीः । रोष्टा । रोषित्रीश्च वि°. डी °त्रीः । राष्टा.

रेष्टा रेषित्री[1] । इत्यत्र "सहलुभ°" [ ४६ ] इत्यादिना वेट् ॥ कश्चित्तु पठति । अशिभृग्रस्तुद्रुच्चिवसिभ्यस्तकारादौ[2] वेट् । अष्टा अशिता[3] । भर्ता भरिता । असंस्तोत्री स्तवित्री[4] । शोक्त्रीम्[5] शोविता[6] । वस्त्री वसित्री ॥ तथा[7] रु-नु-सु-दुभ्योपरोक्षायां वेट् । रोत्री रविता । प्रणोत्री नवितारम् । सोता सविता । अदोत्रीम् दविता ॥

ईवन्त । दुघूषुः अदिदेविषुः । ईर्ष्मेत् अर्दिधिषु । बिभ्रंक्ष्यमाणाम् बिभ्रजिषसि । अधिप्सुम् दिदम्भिषो । शिश्रीषमे आशिश्रयिषुम् । युयूषुम् यियविषु । अनूर्णुनूषुः प्रोर्णुनविष्यमाणा । बुभूर्षुः बिभरिषु । ज्ञीप्सुः जिज्ञपयिष्यसे । सिषास्वा सिसनिषु । तितंस्यते तितनिष्यमाणे । प्रपित्सुः आपिपतिष्यसे । बुवूर्ष्यसे विवरीषुः । ऋदन्त । तितीर्ष्वा अनुत्तितरीषु । दिदरिद्रासु । अदिदरिद्रिषुः । अत्र "इवृध०" [ ४७ ] इत्यादिना वेट् ॥ भरेति शवा निर्देशो यङ्लुपो बिभर्तेश्च निवृत्त्यर्थः । बुभूर्षुः । बिभर्तेरपीच्छन्त्येके । इडभावपक्षे गुणमपि । बिभर्षुः बिभरिषु । तन्मतसंग्रहार्थं कृतगुणस्य भृगो निर्देशस्तेनेडभावपक्षेपि गुण स्यात् ॥

अरिरिष्यसे । विमिस्मयिष्वा । पिपविष्यमाणः । अञ्जिजिषति ।

१ बी °षिती । इ°. २ प °चिव्यस्ति°. ३ प °ना । मर्ता. ४ बी °त्रीम् । शो°. ५ सी डी °क्त्री शो°. ६ प शोतिना. ७ प °था ऋतुपुमु°. डी °था ऋनु°. ८ सी रुतुदु°. ९ प इदं च । दु°. १० प °भ्रक्षमाणा बि°. ११ बी युयूंपुम् । यियिवि°. १२ प °यूर्पु यि°. १३ प °नूपुः प्रार्णु°. १४ प °माणो । बु°. १५ डी °निपुः । ति°. १६ डी °माणा प्र°. १७ प °ण । प्रपित्सु आ°. १८ सी °पित्सु आ°. १९ बुभूर्ष्यं°. २० प सी °रीपु । ऋ°. २१ प °पु । दद°. २२ डी °द्रासुः अ°. २३ प अदद°. २४ सी °रिद्रपु । अ°. २५ प °द्रिपु । अव इ°. २६ प भरति. २७ प बी सी डी °तिक्षिवा. २८ डी °रिपुः । त°. २९ डी °गोर्निर्दे°. ३० सी निदेश°. ३१ प °यिषा । भि°.

अशिशिषु[1] । चिकरीषन् । आजिगरीषत् । दङ् । आदिदरिष्यते[2] । धृङ् । दिधरिष्यते । पिपृच्छिषुम्[3] । अत्र "ऋस्मि०" [ ४८ ] इत्यादिना-इट् ॥

निहनिष्यसि । करिष्यसे । अत्र "हनृतः स्यस्य" [ ४९ ] इतीट् ॥

कृतेत् कृतेप् वा[5] । चिकृत्सुम् चिकर्तिषून्[6] । उच्चिचृत्सुः[7] । चिचर्तिषुः । निनृत्सुः[8] प्रनिनर्तिषु[10] । उच्चिच्छृत्सौ अचिच्छर्दिषुम्[11] । तितृत्स्वा तर्दिष्यसे । अत्र "कृतचृत०"[12] [ ५० ] इत्यादिना वेट् ॥ असिच इति किम् । अकर्तीत् ॥

स्वस्त्वं गमिष्यस्युत गंस्यतेधिजिगांसुनान्तः[1] किमपीह मोक्षः ।
यत्तेधिपूर्वं जिगमिष्वभिख्यां[2] स्त्रैणं प्रति प्रैस्तविता[3]सि नान्तः ॥४८

उक्ष्णा यदा[4] स्तोष्यत आशु शैलैरुत्क्रंस्यते[5]ब्धेः क्रमितार्थ वोर्वः[6] ।
भूर्वा क्रमित्री क्रमितासि मां त्वं तदा प्रकल्प्तासि[7] रता[8] विवृत्साम्
॥ ४९ ॥

पाता न मां त्वं[9] शकिताप्यशक्त्क्रीमखेदिता यद्यधुनातिखेत्रीम् ।
क्व वेदिता मां ननु मृत्युवेत्रीं यत्कृत्यबोद्धापि न बोधिता किम्
॥ ५० ॥

क्ष्वेत्ता त्वमक्ष्वेदितृवन्मयासि वृतः श्रितः कीर्णह्रियेत्युदित्वा ।
स ऊर्णुतो ध्यानयुतो जिघृक्ष्वा करेण निर्लूनभिया[9] कया चित्
॥ ५१ ॥

---

१ ए °गांमुना°. २ ए °भिख्या स्त्रं°. ३ ए प्रस्तवि°. ४ सी °दा स्तोष्य°. ५ ए °रुत्कंस्य°. ६ ए °तानचोर्वः. ७ ए °कस्त्फासि. ८ ए त्वं शंकि°. ९ ए °नभया.

१ ए °शिपुः । विक°. २ बी °ते । धृंङ्. ३ ए सी °पु । अ°. ४ ए °नृत स्य°. ५ बी °तेपु वा. ६ बी चिकिर्ति°. ७ ए °च्चिभृत्सुः. ८ ए °र्तिषु । नि° ९ ए °त्सुः नि°. १० ए डी र्तिषुः । उच्चिनृत्सौ अचिच्छ°. ११ ए डी °पु । ति°. १२ ए °तमृत्यत्या°. सी °तभृतेत्या°.

४८–५१. कया चिद्देव्या निर्लूनभिया निर्भययात एव करेण कृत्वा जिघृक्ष्वा तं[१] ग्रहीतुमिच्छन्त्या सत्या ध्यानयुतो योगी स कर्ण ऊर्णुत आच्छादितः स्वाङ्गेन व्याप्त आश्लिष्ट इत्यर्थः । किं कृत्वा[२] । वदित्वा[३] । किमित्याह । हे राजंस्त्वद्गतचित्तत्वोत्तेभिख्यां[४] कर्ण इति नामान्तं[५]श्चित्तेधिपूर्वं जिगमि[६]ष्वधिजिगमिषु पठितुमि[७]च्छु स्मर्तुमिच्छु वा स्त्रैणं देवाङ्गनौघं प्रति [८]लक्ष्यीकृत्य यदसि त्वं न प्रे[९]क्ष्णविता नार्द्र-हृद[१०]यीभवसि न प्रसीदसीत्यर्थः । तत्त्वं किं स्वर्ग[११]मिष्यस्युताथ वेह लक्ष्मी-गृहे[१२]न्तश्चित्ते किमर्[१३]थ्यैज्ञेयं रहस्यमधिजिगां[१४]सुना पिपठिषुणा जपतेत्यर्थः । त्वया मोक्षो[१५] गंस्यते । ईदृशैस्तपोजपैः स्वर्गापव[१६]र्गौ स्वप्नेपि ते दुर्लभा-वित्यर्थः । अथ[१७] वा यदोक्ष्णा बलीवर्दे[१८]न स्तोष्यते पयः क्षारिष्यते[१९]थ वा यदा शैलै[२०]रांशूत्कंस्यत ऊर्ध्वं यास्यतेथ वा यदौर्वो वडवाग्निरब्धेः सका-शा[२१]त्क्रमिता गन्ता निःसरिष्यतीत्यर्थः । वा यद्वा[२२] भूः पृथ्[२३]वी क्रमित्री स्वपदाभ्यां संचरिष्यतीत्यर्थः । तदा त्वं[२४] मां क्रमितासि गमिष्यसि सेवि[२५]-ष्यस इत्यर्थः । तथा तदा रतौ निधुवनविषये विवृ[२६]त्सां प्रवर्तने[२७]च्छां प्रकल्प्तासि विधास्यसि[२८] क्लृप् अन्त[२९]र्भूतणिगर्थः सकर्मकः । य[३०]दोक्षादीनां प्र[३१]श्र(स्त)वादि भवि[३२]ष्यति तदानया देव्या सहाहं रंस्य इति त्वया

१ बी तं गृही°. २ सी °त्वादित्वादिशकि°. ३ प °दित्या । कि°. ४ प °त्वाभि°. ५ बी सी डी °न्तश्चेतस्यधि°. ६ प °मिपु प°. ७ प °मित्सु स°. ८ प लक्ष्मी-कृ°. ९ प प्रश्नवि°. १० प °दयांभ°. ११ बी °गंक्रमि°. १२ प °हंतश्चि°. १३ प °व्यजेयं. १४ प °गांसना. १५ प °क्षो गम्यते. १६ प °वर्गो स्व°. १७ प °थथा-यवोक्षणा. १८ प सी डी °न स्तोष्य°. १९ प °तय वा. २० प °राशृत्कं°. २१ प °शाक्रमि°. २२ बी सी °द्वा यदा भूः. २३ प °थ्वी कृमि° २४ प त्वं नां क्र°. सी त्वं मा क्र°. २५ प सेथिष्य°. २६ प विमृत्सां. २७ प °नेच्छाप्र°. २८ सी °सि क्लृप्. प °सि क्लृ इ अ°. २९ प °न्तभूत°. ३० प यदाक्षादीना प्र°. ३१ सी प्रस्तवनादि. डी प्रस्तवनादि. ३२ प °ष्यसि तथान°.

तीव्रोभिग्रहैः कुतोथ वेत्यहं जानामीत्यर्थः । परमधुना संप्रति मां यदि त्वं न पाता स्वाङ्गसङ्गामृतास्वादनेन न रक्षसि । कीदृशीम् । अशर्मी कामशरैर्जर्जरीकृतत्वात्किंचिदपि कर्तुमसमर्थामत एवातिखेत्रीमत्यन्तं दीनीभवन्तीं परितप्नीभवन्तीं वा । यतः खिदंपरिताप इति केचित्पठन्ति । कीदृशः संस्त्वं शकितापि समर्थोपि । अत एवाखेदितापि अदीनोपि । तदा नन्विति प्रश्ने । पृच्छामि त्वां मां क वेदिता लभेमे यतो मृत्युवेत्रीं त्वदुपेक्षायां कामाग्निदाहातिरेकेण मरणं वर्तमानां मृत्योर्लब्ध्रीं वाद्य श्वो वा मे मृत्युर्भावीति मृत्योर्विचारिकां वा । तस्माद्यत्कृत्यबोद्धापि यच्च तत्कृत्यं च यत्कृत्यं स्वयमखिन्नशक्तेन खिन्नाशक्तपालनलक्षणं महाधर्मकृत्यं तस्य बोद्धापि सर्वशास्त्रेषु लोके च प्रसिद्धत्वाज्ज्ञातापि मन्किमिति न वोधिता न जानासि तस्याकरणात् । तस्मान्मां रक्षेति तात्पर्यार्थः । यद्वा किं बहूक्तेन क्ष्वेत्तापि । अपिरध्याहार्यः । जापवशेनाव्यक्तं वदन्नप्यनङ्गीकारान्मां त्यजन्नपि वाक्ष्वेदितृवव्यक्ताक्षरं मामालपन्निवात्यजन्निव वा त्वं मया वृतो भर्तृत्वेन वरितः श्रितश्चासि यतः कीर्णह्रिया त्यक्तलज्जयेति ॥

**कोपं जुघुक्षन्निजुगूहिषुः स्वं नृपः पुपूर्षन्नतितिक्षतैतत् ।**
**उड्डीनतद्विघ्नभयः स लग्नो ब्रह्मण्यनुड्डीनसमाधिशून्यः ॥ ५२ ॥**

५२. नृपः कर्णं एतदप्सरःकृतमनुकूलोपसर्गवृन्दमतितिक्षताक्षाम्यत् । कीदृक्सन् । कोपं जुघुक्षन्निरुन्धंस्तथा स्वमात्मानं निजुगूहिषु-

१ ए °पन्निति°. २ सी उदीन . डी उर्डीन°. ३ ए °भवः स. ४ ए °ण्यमुड्डी°.

१ सी °ग्रहं कु°. २ ए °हः कुतो°. ३ ए मर्थीम . ४ बी सी °वन्ती वा. ५ ए °भते य . ६ ए °त्योप्त्री वा . ७ ए °पि त्वत°. ८ बी सी °त्यं य°. ९ ए °न्किगिति. १० ए डी °क्तेनाक्ष्वे . ११ ए °पव्यमेना . १२ ए °प्यनंदगीकारान्यात्य°. १३ बी °ङ्गीकरा. १४ ए डी ई °पि क्ष्वे°. १५ ए °दिश्चव . १६ ए डी °रं नामाल°. १७ ए° न्निर्वा त्वं. १८ ए रिता श्रि°. १९ बी सी डी निजगू°.

वेशीचिकीर्षुरित्यर्थः। अत एव स्वमेव पुपूषन्पवित्रीचिकीर्षुः[1]। यतः स कर्णो ब्रह्माणि परमध्येये[2] लग्न आसक्तोभून्। कीदृक्सन्। अनुड्डीनोक्षीणो यः समाधिश्चित्तैकाग्र्यं तेन[3] शूनो वृद्धोतिस्फीतसमाधिरित्यर्थः। अत एवोड्डीनवन्नष्टं विघ्नभयं[4] यस्य सः॥

गम्लृ। गमिष्यसि। इङ् इङ्का। अधिजिगमिषु। अत्र "गमोनात्मने"[5] [ ५१ ] इतीट्॥ इङो नेच्छन्त्येके। अधिजिगांसुना[6]॥ अनात्मने[7] इति किम्[8]। गंस्यते[9]॥

प्रस्नविता। इत्यत्र "स्नोः" [ ५२ ] इतीट्॥

क्रमितासि। इत्यत्र "क्रमः" [ ५३ ] इतीट्॥ अनात्मन इति किम्। उत्क्रंस्यते[10]॥

क्रमिता। क्रमित्री[11]। इत्यत्र "तुः" [ ५४ ] इतीट्॥

विवृत्साम्। प्रकल्प्सासि। इत्यत्र "न वृद्भ्यः" [ ५५ ] इति नेट्॥

पांक्। पाता॥ शक्लृन् शकींद्वा[12]। अशक्रीम्॥ विदिंच् विदंती विदिंप्वा[13]। वेत्रीम्[14]॥ खिदिंच्[15] खिदंन् खिदिंप्वा[16]। अनिखेत्रीम्। अत्र "एकस्वरा॰"[17] [ ५६ ] इत्यादिना नेट्॥ शक्यतिविन्दतिखिन्दतीनामिटमिच्छन्त्येके[18]। शकिता। वेदिता। अखेदिता॥ अनुस्वारेत इति किम्[19]। ञिक्ष्विदाँ[20] ञिक्ष्विदाङ्[21] ञिक्ष्विदाँत्वा[22][23]।

१ ए ॰पुः। यतः. २ बी ॰ध्ययल॰. ३ ए तेम शू॰. ४ सी विघ्नं भ॰. ५ ए ॰त्म इ॰. ६ ए सी ॰गांमुना. ७ बी ॰त्म इ॰. ८ डी ॰म्। गम्यंत. ९ ए गंम्यते. १० ए उत्कंस्य॰. ११ ए डी ॰मिर्ता। इ॰. १२ बी सी डी शक्लंट् श-कींच्वा। अ॰. १३ ए विदिप्वा. १४ बी वेत्रीम्. १५ ए ॰दिंव. १६ ए खिदिस्वा। अ॰. डी ॰दिंप्वा। अ॰. १७ बी सी डी ॰स्वरादित्या॰. १८ बी सी ॰खिदती॰. १९ ए ॰म्। निक्ष्वि॰. २० सी ॰दाच्वा। क्ष्वं॰. २१ डी ञिदाड् निक्ष्विदाच्वा। क्ष्वे॰. २२ ए ॰दाद्वा। क्ष्वं॰. २३ बी ॰दाध्वा। क्ष्वे॰.

क्ष्वेदितृ ॥ अस्मादपीटं नेच्छन्त्येके। क्ष्वंत्ता ॥ बुधग् बुंध वा। बोधिता। आभ्याम पीटं नेच्छन्त्येके। बोद्धा ॥

वृतः। कीर्णः(र्ण)। श्रिनः। ऊर्णुतः। अत्र "ऋवर्ण०" [५७] इत्यादिना नेट्॥

युतः। लून। इत्यत्र "उवर्णात्" [५८] इति नेट्॥

जिघृक्ष्वा। जुघुर्क्षन्। पुपूषन्। इत्यत्र "ग्रहं०" [५९] इत्यादिना नेट्॥ गुहेरिटमिच्छत्यन्यः। निजुगृहिषुः॥

अतितिक्षत। इत्यत्र "स्वार्थे" [६०] इति नेट्॥

अनुडीन। उड्डीनवत्। शूनः॥ एदित्। लग्नः। अत्र "डीय०" [६१] इत्यादिना नेट्॥

**सुव्यक्तमित्यस्तरुचिः स्मरास्त्रासितैः समर्णो द्युवधूजनोऽथ।**
**नभोर्दितैरुत्पतितो विमानैर्न्यर्णस्त्रपां व्यर्णरुगर्णबुद्धिः॥५३॥**

५३. अथ कर्णस्य ध्यानाचलनानन्तरं द्युवधूजनो नभोर्दितैर्व्योमप्राप्तैर्विमानैः कृत्वोत्पतितः। कीदृक्सन्। स्मरास्त्रामितैः कर्णरूपदर्शनोत्थकामशरक्षेपैः समर्णः पीडितस्तथेत्युक्तरीत्या सुव्यक्तमस्तरुचिर्भग्नमनोरथोत एव त्रपां लज्जां न्यर्णः प्राप्तस्तथा व्यर्णरुग्विच्छायस्तथार्णबुद्धिर्गतधीः॥

१ ए °त्यरु°. ए °रास्वासि°. ३ ए °नोव। न°. ४ बी नन्यर्ण°. ५ ए °पा त्यणरगरुणबु°.

१ ए बी सी बुगृग २ बी डी बुध वा. ३ ए °पीग ने° ४ डी °क्षन्। पु°. ५ सी °त्र गुह°. ६ डी °हगुह र° ७ ए निजगू°. ८ ए °त्यव स्वा°. ९ ए शून्॥ ए°. १० ए °र स्वुव°. ११ ए नभ्योर्दि°. १२ ए °रास्वासि°. १३ ए °मर्थपी°. १४ सी डी °यरुचिस्त°.

अञ्जौ । सुव्यक्तम् । असू । अस्त । इत्यत्र "वेटोपतः" [ ६२ ] इति नेट् ॥ केचिदस्यतेर्भावे क्ते नित्यमिटमिच्छन्ति । असितः ॥ अपत इति किम् । उत्पतितः॥

समर्णः । न्यर्णः । व्यर्ण । इत्यत्र "संनि°" [ ६३ ] इत्यादिना नेट् ॥ संनिवेरिति किम् । अर्दितः ॥ कश्चित्केवलादपीच्छति । अर्ण ॥

अभ्यर्णमागादथ वृत्तमन्त्रे नृपे विशस्तौजसि कोपि धृष्टः ।
कष्टः पुमान्घुष्टगुणावबद्धातिकष्टकेशो घुषितानि कुर्वन् ॥ ५४ ॥

५४. अथ देव्युत्पातानन्तरं कोप्यज्ञातः पुमान् पुंरूपधारी सुरोभ्यर्णं कर्णसमीपमागात् । क सति । विशस्तौजसि प्रौढप्रतापे नृपे कर्णे वृत्तमन्त्रे जपितलक्ष्मीमन्त्रे । कीदृग् । धृष्टः प्रगल्भस्तथा कष्टः कषिष्यति कष्टं कृच्छ्रं तस्य हेतुस्तथा घुष्टेन संबद्धावयवेन निबिडेनेत्यर्थः । गुणेन रज्ज्वावबद्धाः संयमिता अतिकष्टा अतिगहनाः केशा यस्य सः । तथा घुषितानि नानाशब्दितानि कुर्वन् ॥

अभ्यर्णम् । अत्र "अविदूरेभेः" [ ६४ ] इति नेट् ॥

वृत्तमन्त्रे । अत्र "वृत्तः(तः?)°" [ ६५ ] इत्यादिना वृत्तेति निपात्यम् ॥

धृष्टः । विशस्त । इत्यत्र "धृप°" [ ६६ ] इत्यादिना नेट् ॥

कष्टः । अतिकष्ट । इत्यत्र "कषः°" [ ६७ ] इत्यादिना नेट् ॥

घुष्टगुण । इत्यत्र "घुषेः°" [ ६८ ] इत्यादिना नेट् ॥ अविशब्द इति किम् । घुषितानि ॥

१ ए °माथावथ. २ ए °पि सृष्टः ।.

---

१ ए अमू । अ°. २ ए र्णः । व्य°. ३ सी अर्णम् ॥ अ°. डी अर्णः ॥ अ°. ४ सी डी °र्णं स°. ५ ए °सि नृ°. ६ बी निवेटे°. ७ ए रज्व अव°. ८ ए केनाय°. ९ बी सी डी °शा येन मः. १० ए बी ई °त्र वत्तः इ°. ११ ए °त्य ॥ धृ°. १२ ए अधिष्टेत्यकष्टेत्य°.

ध्वान्ताकृतिर्बाढदृढाचलेन्द्रक्षुब्धाम्बुधिम्लिष्टविरिब्धकण्ठः ।
स पारिवृढ्यं नु दधन्नृपं स्म दुःस्वान्त इत्याह समाधिलग्नम् ॥५५॥

५५. स पुमान्समाधिलग्नं ध्यानलीनं नृपमिति वक्ष्यमाणनीत्याह स्माब्रवीत् । कीदृक्सन् । ध्वान्ताकृतिः । तथा बाढं भृशं दृढो बली स्थूलो वा योचलेन्द्रो मन्दराद्रिस्तेन क्षुब्धो मथितो योम्बुधिस्तस्येव म्लिष्टमस्पष्टं विरिब्धं स्वरो यस्य स तथा कण्ठो गलो यस्य सः । तथा दुःस्वान्तो दुष्टचेतास्तथा पारिवृढ्यं नु प्रभुत्वमिव दधत्स्वामीव निःशङ्क इत्यर्थः ॥

फाण्टं नु मिन्नो विदितोसि मिन्नं मम क्रुधा मेदितमीर्ष्यया च ।
प्रमेदितव्याज तव प्रमिन्नं वपुः किमत्तुं शकितं मया न ॥ ५६ ॥

५६. प्रमेदितं स्निग्धीकर्तुमारब्धमाश्रितमित्यर्थः । व्याजं तपोजपरूपं छद्म येन हे प्रमेदितव्याज फाण्टं त्वनायाससाध्यमश्रपितमपिष्टमुदकसंपर्कमात्राद्विभक्तरसमौषधं कषायादि फाण्टं तदिव मिन्नः स्निग्धोत्युपचित इत्यर्थः । असि त्वं मया विदितो दृष्ट इत्यर्थः । अतश्च मिथो विरुद्धाङ्गोपचयतपोध्यानावलोकेन तव मायित्वावगत्या मम क्रुधा कर्त्र्या मिन्नमुपचितमीर्ष्यया चाक्षमया च मेदितमतश्च प्रमिन्नमुपचेतुमारब्धं तव वपुरत्तुं किं मया न शकितं न शक्ष्यते । अत्र "वा हेतुसिद्धौ क्तः" [ ५.३.२ ] इति भविष्यति क्तः । चेन्मम कोपेन मिन्नं तदा त्वद्वपुरत्तुं शक्ष्यत एवेत्यर्थः ॥

१ ए °ढवृढा°. २ ए °विरप्तक°. बी °विरब्ध°. ३ °पं स्व दुः°. ४ डी दुःखान्त. ५ ए नु सिन्नो. ६ ए °या त ॥.

१ °न् । क्रन्ता°. २ ए °थावांढ. ३ ए °तोयोधि°. ४ ए बी विरब्धं. ५ सी डी °लोस्य. ६ सी डी दुःखान्तो. ७ ए °रत्वं मा. ८ ए तज°. ९ ए °श्म जेन. १० ए °समोष°. ११ ए °मीर्षया. बी °मीक्ष्यया. १२ डी °या वाक्ष°. १३ ए °रत्तुं किं. १४ ए शष्यते. डी शक्यते. १५ ए °ते । तत्र. १६ ए रत्वं शष्यत.

न शक्तमास्थातुमशान्तदान्तैः श्रीवेश्म मे स्पष्टमदासितार्चैः ।
ततस्त्वमच्छन्नमदस्तपूर्णबलिर्मया स्पाशित एवमन्ये ॥ ५७ ॥

५७. श्रीवेश्मास्थातुमाश्रयितुं न शक्तं न शक्यते स्म । कैः कैरित्याह । अशान्तदान्तैरजितेन्द्रियतपःक्लेशासहैस्तथा मे मह्यं स्पष्टमदासितार्चैरदत्तपूजैश्च । तत्तस्माद्धेतोरच्छन्नं प्रकटमदस्तपूर्णबलिर्मह्यमदत्तपर्याप्तपूजोपचारस्त्वं मया स्पाशित एव भक्षणाय गृहीत एवेति मन्ये । यद्यपि राज्ञः स्पशनं भावि तथाप्यनेनातिस्वाधीनत्वेन कृतमिव संभावितमित्यतीते क्तः ॥

रक्षोभिराच्छादितपूरितं प्राक् संज्ञप्तविश्वैर्दमितामरैर्हि ।
विश्वस्तया पातुमिदं श्रियौक आज्ञापितोहं शमितान्यशक्तिः ॥५८॥

५८. इदं प्रत्यक्षमोको लक्ष्मीगृहं पातुं रक्षितुं विश्वस्तया मयि कृतविश्वासया श्रियाहमाज्ञापितो नियुक्तः । यतः कीदृशम् । प्राक्पूर्वं संज्ञप्तविश्वैर्मारितलोकैर्दमितामरैः परिभूतदेवै रक्षोभिर्हि स्फुटमाच्छादितपूरितमाक्रान्तं संभृतं च । यतः कीदृशोहम् । बलिष्ठत्वेन शमितान्येषां राक्षसादिशत्रूणां शक्तिर्येन सः ॥

कथमाज्ञापित इत्याह ॥

जप्तापि मन्त्रैर्जपितापि पुष्पैस्तूर्णं भवाम्युच्छ्वसिता न तस्य ।
न ते बलिं यस्त्वरितो दिशेत्प्राग्बलिः स भावी रुपितस्य ते च
॥ ५९ ॥

१ ए °क्तमस्था°. २ ए °वेश्मन स्प°. सी °वेस्म मे. ३ ए °र्णवलि°. ४ बी °या स्फाशि°. ५ ई °प्ताभिम°. ६ ए °र्जप्तापि. ७ बी पुष्फैस्तू. ८ ए °मुच्छसि°. ९ ए °वी रूपि°.

१ सी °वस्मास्था°. २ सी शक्यं. ३ बी °न्तदीतर°. ४ बी ततस्तसा°. ५ ए राज्ञ स्प°. ६ ए सी डी °र्व सज्ञ°.

अभ्यान्तरक्षोवमितास्रुरुष्टा वान्ताश्रुगास्वान्तवतीति वृत्तिम् ।
संघुष्टवाग्मेभ्यमितस्य देवी प्रतिज्ञया संघुषितस्वनस्य ॥ ६० ॥

५९,६०. देवी लक्ष्मीर्मे वृत्तिं जीविकामास्वान्तवत्युवाच । कीदृक्सती । अभ्यमन्ति स्माभ्यान्तान्यभिमुखमागतानि यानि रक्षांसि तैर्वमितमरुच्योद्गीर्णं यदस्रं पूर्वपीतं मनुष्यादिरक्तं तेन रुष्टात एव वान्ताश्रुः कोपावेशेन नेत्रेभ्योश्रूणि क्षरन्ती । कीदृशः मतो मेभ्यमितस्य देव्यभिमुखं गतस्य तथा प्रतिज्ञया त्वद्भृत्यम मया सर्वदुष्टेभ्यो रक्ष्यमेवेत्यभ्युपगमेन संघुषितस्वनस्य नानोच्चारितशब्दस्य । कां वृत्तिमित्याह । यो नरस्त्वरित उत्सुकः संस्ते तुभ्यं प्राग्बलिं न दिशेन्न दद्यात्तस्य प्राक्तुभ्यं बलेरदातुर्नोच्छ्वसिता न प्रसन्ना भवामि । कीदृशी । मन्त्रैस्तूर्णं जप्तापि स्मृतापि पुष्पैर्मन्त्रपूतकुसुमैर्जपितापि मन्त्रोच्चारपूर्वं करवीरादिपुष्पक्षेपेण स्मृतापीत्यर्थः । तथा स प्राक्तुभ्यं बलेरदाता रुषितस्यापूजया क्रुद्धस्य ते बलिर्भावी च स त्वया प्रसनीय इत्यर्थ इति । न च वाच्यमवहेलया प्रतिज्ञातं सकृच्चैतां वृत्तिं देवी तवोचदिति । यतः संघुष्टवागेवंविधा ते वृत्तिरेवेति प्रतिज्ञातवचनैवंविधा ते वृत्तिरित्यसकृदुच्चारितवचना वा ॥

१ ए °क्षोवामिताश्रु°. २ ई °ताश्रुरु°. ३ ए सी वान्ताश्रु°. सी वाताश्रु°. ४ ए °वाग्मभ्य°.

१ ए °न्तिमाममाभ्या°. २ ए °रक्ता तेन रुष्टा°. ३ ए वाताः श्रुः°. ४ ए देभ्योभि°. ई देव्या अभि°. ५ ए रक्षमे°. ६ ए °त्यभ्यप°. ७ सी डी °गमनेन. ८ ए °त्सुकम°. ९ ई °कः मस्ते. १० सी डी °वामीनि । की°. ११ ए ई °सा स्मृ°. १२ ई प्राक् बलर°. १३ ए °ता ऋषि°. १४ ई क्रुधस्य. १५ बी नवा°. १६ ए °च्यसव°. १७ ए बी डी °कृचेतां. सी °कृत्वेती वृत्ति दे°. १८ बी सी °त्तिरेव विधा ते वृत्तिरि°.

तद्भोक्तुमित्यास्वनितं श्रिया त्वामहृष्टदन्ताहृषिताग्रदंष्ट्रः ।
सज्जोस्मि धार्ष्ट्याद्धृषिताग्रकेशलोमन्प्रहृष्टोन्नतकेशलोमा ॥ ६१ ॥

६१. तत्तस्माद्धेतो[1]र्हे धाष्टर्यान्न तु सत्त्वातिरेकाद्धृषिताग्रे[2]केशलो-मै[3]न्नुद्धुषि[4]तवालरोमाग्रेत्युक्तरीत्या श्रियास्वै[5]नितमादिष्टं दत्तमित्यर्थः । त्वां भोक्तुं ग्रसितुमहं सज्जोस्मि । कीदृक्सन् । प्रहृष्टोन्नतकेशलोमा त्वत्सदृशापूर्वभक्ष्यप्रापणोत्थहर्षातिरेकादुच्छ्वसितोच्चकेशलोमा तथाहृष्टा अप्रतिहता दन्ता यस्य स योहृषिताग्रदंष्ट्रोप्रतिहतदंष्ट्रा[6]ग्रः स तथा ॥

किं चास्मि हृष्टो हृषितो न को वा ससर्जिथाद्यापचितं न यन्मे ।
ससृष्ठ देव्या अपचायितं[2] त्वं न मां तु दद्रष्ठ ददर्शिथाः किम् ॥६२॥

६२. किं चेति विशेषे । अद्य यत्त्वं मे मै[7]मापचितं पूजां न सस-र्जिथ न चकर्थे[8] तेनास्म्यहं हृष्टो विस्मितो[9] वाथ वा को न हृषितः किं[10] त्वभिनवः कोप्ययं ध्याता यः प्राक्पूज्यममुं व्यन्तरमपूजयित्वा मद्ध्यानफलं साधयिष्यतीति सर्वोपि साश्चर्योभूदित्यर्थः । ननु मयान्योपि कोपि नार्चितस्त[11]तस्ते कोपमानो येनैवं वक्षीत्याह । त्वं देव्या लक्ष्म्या अपचायितं[12] पूजां ससृष्ठ चकर्थ[13] मां तु मां पुनर्न[14] दद्रष्ठ पूजायै[15] न स्मृतवानतस्त्वम् । आः[16] कोपे । किं ददर्शिथ मूलस्मरणीयास्मर-णां[17]न्न किमप्यस्मर इत्यर्थः ॥

१ ई °ल्ष्टान्न°. २ ए °यित्व तं न.

१ सी °तोर्हि धा°. ई °तोहे धाष्टयान्न. २ ए °प्रक्केशनोम°. ३ बी °न्नुद्धृषि°. ४ बी सी डी °तवाल°. ५ ए °स्वमित°. ६ ए °ष्ट्राग्र स. ७ ए मप°. ८ ए °कथ ते°. ९ ए विस्मृतो. १० ए किं तु भि°. ११ सी डी °स्ततः स को°. १२ ए °यितां पू°. १३ ए °कथमा तु. १४ ए °ननं द°. १५ ए° यै स्मृ°. १६ ई कोपि । किं. १७ ए °णान्ना किं°.

मन्त्रेण संचस्करिथाथ संचस्कर्थाम्यतन्त्रैः स्वमु शेकिथास्त्रैः ।
शशक्थ दोर्भ्यामथ चेत्ततोपि क्षयं ययाथाययिथात्र यत्त्वम् ॥ ६३ ॥

६३. उ हे राजंश्चेद्यद्यपि त्वं मन्त्रेणाङ्गरक्षामन्त्रेण स्वमात्मानं संचस्करिथ । अथ तथाभ्यतन्त्रैः संप्रभावैरङ्गरक्षाहेतुमुद्राविशेषादितन्त्रैश्च स्वं यद्यपि संचस्कर्थाथ तथा यद्यपि त्वमस्त्रैर्वारुणादिभिः शेकिथ समर्थोभूस्तथा यद्यपि दोर्भ्यां शशक्थ ततोपि तथापि यत्त्वमत्र श्रीगृह आययिथागास्ततस्तस्मात्क्षयं ययाथ प्राप्त एव ॥

जहर्थ यच्छिश्रयिथारिथाथ सस्वर्थ विप्राग्वरिथाद्दिथापि ।
त्वं यच्च संविव्ययिथापसस्वरिथेह तद्गर्हय तेस्मि मृत्युः ॥६४॥

६४. हे राजन्निह जन्मनि यद्दार्यं देवद्रव्यादि जहर्थापहृतवान् यच्चासेव्यमसत्सङ्गादि शिश्रयिथाथ तथा यदगम्यं परस्त्र्याद्यारिथ गतो यच्चावाच्यं सस्वर्थोक्तवान्यदपीड्यं साध्व्यादि पीडितवान्त्रा यच्चायाच्यमधिककरादि विप्राग्वरिथ विवरिथ याचितवान्यच्चाभक्ष्यमाद्दिथापि भक्षितवांश्च यच्चानाच्छाद्यं प्रच्छन्नपापं संविव्ययिथाच्छादितवान्यच्चापसस्वरिथ विरुद्धमवोचस्तत्त्वं गर्हय निन्दय यतस्तेहं मृत्युर्मरणहेतु-

---

१ ए °थाम्यत°. २ ई °मु शोकि°. ३ ए शेकथा°. ४ ई °च्छिश्रियि°. ५ ए सस्वर्थ. ६ डी °रिथेह.

---

१ बी समा°. २ ई °भावनेर°. ३ डी °स्त्रैर्वांगा°. ४ ए ई °भिः शोकि°. ५ ए °शक्नुत°. ६ ई तवापि. ७ ए °यिप्रामास्त°. ८ ए °हार्यं दे°. ९ ए यथासे°. १० ए °यमत्वाथ त°. ११ ई °तोयावा°. १२ ए °न्यर्पा°. १३ ए °ध्वायिदपी°. १४ ए °तन्वा. १५ ई °वान् य°. १६ ए सी डी °य या°. १७ ए °तथाच्यत्वाभ°. १८ ए यच्च ना°. १९ ए °पापमं°. २० ए ई मव्य°. २१ ए °दिथवा°. २२ ए ई °य त°. २३ बी °त्युमर°.

वेर्ते[1] । मृत्युकाले हि पापगर्हा[2] क्रियते । यद्यप्यत्र विशेषानुक्तेर्यच्छब्देन[3] निन्द्यमनिन्द्यं चोच्यते तथापि तद्गर्हेयेत्युक्तेर्निन्द्यमेवोच्यते[4][5] ॥

दृढ । इति "बलि°" [ ६९ ] इत्यादिना निपात्यम् ॥

क्षुब्ध । विरिब्ध[6] । स्वान्तः[7] । ध्वान्त[8] । लग्नम्[9] । म्लिष्टं[10] । फाण्टम्[11] । बाढं[12] पारिवृढ्यम् । एते "क्षुब्ध°" [ ७० ] इत्यादिना निपात्याः ॥

मित्रः[13] । अत्र "आदितः" [ ७१ ] इति नेट् ॥

मित्रं[14] क्रुधा मेदितमीर्ष्यया । प्रमिन्नम् प्रमेदित । इत्यत्र "न वा°" [ ७२ ] इत्यादिना नेड्वा ॥

शक्तम् शकितम् । अत्र "शकः कर्मणि" [ ७३ ] इति वा नेट् ॥

दान्तैः दमितैं[15] । अशान्त[16] शमित । पूर्णं[17] पूरितम् । अदस्त अदामितं[18] । स्पष्टम् स्पाशितः[19] । अच्छन्नम् आच्छादित[20] । संज्ञप्त[21] आज्ञापितः[22] । एते "णौ दान्त°"[23] [७४] इत्यादिना वा निपात्याः ॥

विश्वस्तया[24] उच्छ्वसिता[25] । जप्ता जपिता[26] । वान्त[27] वमित । रुष्टा[28] रुषितस्य । तूर्णम् त्वरितः[29] । संघुष्टवाक् संघुषितस्वनस्य । आस्वान्तवती आस्वनितैम्[30] । अभ्यान्त अभ्यमितस्य । इत्यत्र "श्वसजप°" [ ७५ ] इत्यादिना वा नेट् ॥

१ ए °र्तें । का°. २ ए °र्हा क्रय°. ३ ए °क्तेच्छ°. ४ ए °मनन्द्यं व्योच्य°. ५ सी डी °पि गर्ह°. ६ ए बी ई विरब्ध. ७ डी ई स्वान्त ।. सी स्वान्त । धात । ल°. ८ ए °न्तः । ध्वन्त. ९ ए सी °म्र । म्लि°. १० सी °ष्टम् । फा°. ११ ए डी °ण्ट । बा°. १२ सी °ढम् । पारिवृढ्य । ए°. १३ ए मित्र । अ°. १४ सी मित्र क्रु°. १५ ए डी ई °मितः । अ°. १६ सी °शान्तः श°. १७ ए पूर्णा पू°. १८ सी °त । स्फष्टं स्फाशि°. १९ डी °शित । अ°. २० ए डी ई °दिता । सं°. २१ डी °ज्ञप्तः आ°. २२ सी °पित । ए°. २३ बी णौ दान्त°. २४ ई उच्छ्वसि°. २५ ए बी ई °सित । ज°. २६ ई °पित । वा°. २७ सी डी वान्ता व°. २८ ई रुष्ट रु°. २९ सी °रित । सं°. ३० ए °म् । आभ्या°.

प्रहृष्टोन्नतकेशलोमा[1] हृषिताग्रकेशलोमन् । हृष्टोस्मि हृषितो न कः । [3]अहृष्टदन्त अहृषिताग्रदंष्ट्रः । अत्र "हृषेः°" [ ७६ ] इत्यादिना वा नेट् ॥

अपचितम् । [4]इति "अपचितः" [ ७७ ] इति निपात्यं वा । पक्षे । अपचायितम्[6] ॥

ससृष्ठ ससर्जिथ । दद्रष्ठ ददर्शिथ । संचस्कर्थ संचस्करिथ । स्वर । ययार्थ आययिथ । अत्वन् । शशक्थ[10] शेकिथ[11] । अत्र "सृजिदृशि°" [ ७८ ] इत्यादिना वेड् ॥ तृजिति किम् । किति नित्यानिटो मा भूत् । शिश्रयिथ ॥ अनिट इति किम् ॥ शिश्रयिथ ॥

जहर्थ । इत्यत्र "ऋतः" [ ७९ ] इति नेट् ॥ [12]तृज्नित्यानिट इत्येव । अपमस्वरिथ[13] ॥ अत्रापि[14] निषेधमिच्छन्त्येके । सस्वर्थ ॥

आरिथ । विवरिथ । संविव्ययिथ । आदिथ । इत्यत्र[15] "ऋवृ°" [ ८० ] इत्यादिनेट् ॥

**यत्तुष्टुमाथादधिमाहितास्थिशाणेषु संचस्करिमायुधं प्राक् ।**
**शुश्रोथ यत्त्वं बभृमाधुना तद्धन्तुं[1] भवन्तं वव्रमान्तकत्वम् ॥ ६५ ॥**

६५. प्राग्यदायुधं वयमहितास्थिशाणेषु[16][17] । आहितास्थीन्येव तेजोहेतुत्वाच्छाणा निकषोपलास्तेषु । आदधिम संस्थापितवन्तोथ[18] तथा

१ ए सी °द्धन्तं भ°.

१ ए सी डी °मा ऋपि°. २ सी ई अहृष्ट°. ३ ए बी डी °दन्ता हृ°. ४ ए ई हृषेत्या°. ५ डी इत्यत्र अ°. ६ सी °म् ॥ अत्र°. डी °म् ॥ स्र°. ७ ए दद्दृष्ठ. ८ ए °थ ययथि°. डी ई °थ य°. ९ ई °त् । अशशक्थ. १० बी °क्थ शकि°. ११ सी °किथः । अ°. १२ ए तृजित्या°. १३ ए °परस्व°. १४ डी °त्रापीट् नि°. १५ ए °त्र व्रज् इ°. १६ ए °यसाहि°. सी डी °यमाहि°. १७ सी डी °पु । आहि°. १८ ए °स्थात°.

संचस्करिम सततव्यापारणेनोत्तेजितवन्तश्च । येनारयो हता इत्यर्थः । अत एव येत्तुष्टुम श्लाघितवन्तोत एवं च सर्वत्र प्रसिद्धत्वाद्यत्त्वं शुश्रोथ जनवार्तयाशृणोस्तदायुधमधुना भवन्तं हन्तुं वयं बभ्रूम धृतवन्तो यतो भवन्तं हन्तुमन्तकत्वं वयं ववृमाङ्गीचकृम ॥

**सुस्त्रोथ दुद्रोथ ससर्थ न त्वं यज्जग्लिवान्नैव न चोचिवान्वा ।**
**तज्जक्षुषो जघ्निवदस्त्रमुज्जग्मिवन्ममोत्पश्य मदं जगन्वान् ॥ ६६ ॥**

६६. यद्यस्मात्त्वं न सुस्त्रोथ मृत्युभयेन नामूत्रयो न दुद्रोथ न स्विन्नो न च ससर्थ न क्वापि नष्ट इत्यर्थः । नैव च जग्लिवान्न क्षीणहर्षोभून्न चोचिवान्वा न च दीनवचनान्युक्तवान् । त्वं शूर इत्यर्थः । तत्तस्माज्जक्षुपस्त्वां ग्रस्तवतो मम जघ्निवद्घातकमस्त्रमुज्जग्मिवद्वर्त्त्वन्मारणायोद्यतं सत्त्वं पश्य । कीदृक्सन् । मदं हर्षं जगन्वान्प्राप्तः । मम प्रहारः शूरेष्वेव त्वं च शूरस्तस्माद्धृष्टः सन्मत्प्रहारं पतन्तं पश्येत्यर्थः ॥

**प्रोच्येति पादेन भुवं जघन्वान्सं वेविशुष्यं क चनापि भेजे ।**
**तद्दादृशुष्यं प्रति वैविदुष्यमाञ्जीचुलुक्यश्च समाधिर्लग्नः ॥ ६७ ॥**

६७. इति पूर्वोक्तं प्रोच्योक्त्वा भयोत्पादाय कोपाटोपात्पादेन भुवं

१ ए सी डी ई न वोचि°. सी डी न वोचि°. २ सी डी °पो जिघ्नि°. ३ ए °न्सवेवि° ४ ए ई °शुष्क क. ५ ई °द्दानृशु°. ६ बी °मार्जाच्चु°. ७ सी डी °धिमग्नः. ८ ए °लग्न ॥.

१ सी डी °त्यथे। अ°. २ ई यत्नुष्ट°. ३ सी डी °न्तो अत. ४ ए °व स°. ५ सी डी °न्त हंतु व°. ६ ए वयववृम. ७ ई वृव°. ८ सी °न्त हंतुम°. ९ ए हन्तुम°. १० ई न शुश्रोथ. ११ ए °यो दु°. १२ ए °थ मस्वि°. १३ सी डी न श्विन्नो. १४ डी न न स°. १५ बी °पांभून चो°. ई °पां न चो°. १६ ए °र्थः। स्तत्त°. १७ बी ई °द्धातुक°. १८ ई °वन्मा°. १९ डी °त संत्त्वं. २० सी °न्। मंदह°. २१ ई °न्वात्प्राप्तः. २२ ए °हार शू°.

जघ[1]न्वान्हतवान्स सुरः क्व चनापि[2] क्वापि स्थाने वैविशुष्यं प्रवेशं भेजे कर्णस्य स्वध्यानाचल[3]नेन विलक्षः सन्क्वाप्यन्तर्हित इत्यर्थः । समाधिलग्नो ध्यानस्थ[4]श्चुलुक्य[5]श्च कर्णोऽपि तद्दा[6]दृशुष्यं देवदर्शनं कर्मोञ्जीव्यञ्जितवान् । कथम् । वैविदुष्यं लाभं प्रति लक्ष्[7]यीकृत्य अन्तर्भूतणिगर्थोऽञ्जिः सकर्मकोऽत्र । यथा व्यनक्ति पदार्थान् रविः । देवदर्शनं विफलं न स्यादिति देवदर्शनादात्मनः फ[8]लसिद्धिं[9] ज्ञातवानित्यर्थः ॥

संचस्करिमं[10] ॥ स्वाद्य[11]न्येभ्यः । आ[12]ददिम । इत्यत्र “स्क्र[13]सृ” [ ८१ ] इत्यादिना–इट्[14] ॥ स्वादिवर्जनं किम् । समर्थ । ववृम । बभृम । तुष्टुम । दुद्रोथ । शुश्रोथ[15] । सुस्तोथ ॥

जक्षुषः ॥ एकस्वर । ऊचिवान् । जग्लिवान् । इत्यत्र “घस्येक” [ ८२ ] इत्यादिना–इट् ॥

उज्जग्मिवत् । जगन्वान् । जघ्निवत् । जघ[16][17]न्वान् । वैविदुष्यम् । वैविशुष्यम् । दादृ[18]शुष्यम् । अत्र “गमहन°” [ ८३ ] इत्यादिना वेट् ॥ इट्यनिटि च ध्यण्ये[19]करूपत्वाद्विकल्पपक्षेपि विद्वविशदृशां वैविदुष्यमित्या[20]द्येवोदाहरणम् ॥

आञ्जीत् । इत्यत्र “सिचोञ्जेः” [ ८४ ] इतीट् ॥

**लक्ष्मीर्व्यधावीत्स्वशिरो नृपं चास्तावीदसावीच्च मुदश्रुपूरैः ।**
**विघ्नान्न्यरंसीद्दुरितं न्ययंसीन्मुदोदनंसीत्सविधेभ्ययासीत् ॥ ६८ ॥**

६८. लक्ष्मीः स्वशिरो व्यधावीदाश्चर्यकारितद्धैर्यदर्शनादकम्पय-

१ सी डी °न्वान्स°. प °न्वाह्नतवान्सु सु°. २ बी °पि स्था°. ३ डी °ने वि°. ४ ई °स्थ श्चलु°. ५ सी °क्यक. ६ ई °दातृशु. ७ प सी ई लक्षीकृ°. डी लक्षी कृ. ८ सी °लसुद्धिं. डी °लशुद्धि. ९ प °द्धि जात°. १० ई °म ॥ श्राद्य°. ११ प ई °घनेभ्यः. १२ सी डी °ददिम. १३ प स्क्रमित्या°. सी स्क्रसित्या°. ई स्क्रश्रित्या°. १४ प °ट् । × × × वि°. १५ ई °थ । ज°. १६ ई जघ्नवान्. १७ सी °घस्वान्. १८ प ई दातृशु°. १९ प ध्यण्येक°. सी डी ध्यणैक°. २० प °त्यादेवो°.

त्तथा नृपं कर्णमस्तावीच्च[1] । तथा मुदश्रुपूरैर्मुदा[2] कर्णधैर्यातिशयदर्शनोत्थानन्देन येश्रुपूरास्तैरसावीच्च स्नाता च । तथा विघ्नादनुकूलप्रतिकूलान्तरायाद्व्यरंसीन्निवृत्ता[3] । तथा दुरितं कष्टं न्ययंसीन्न्ययच्छयत् । तथा मुदा कृत्वोदनंसीदुदश्वसीत्[4] । तथा सविधे कर्णसमीपेभ्ययासी[5]दभिमुखं गता[6] ॥

व्यधावीत्[7] । असावीत् । अस्तावीत् । इत्यत्र "धूग्सु" [ ८५ ] इत्यादिनेट् ॥

न्ययंसीत्[8] । व्यरंसीत् । उदनंसीत् । अभ्ययासीत् । अत्र "यमि" [ ८६ ] इत्यादिना सिच[9] आदिरिट् । एषां[10] च सोन्तः ॥

ईशिध्वमीशिध्व[1] उ चेदथोचेदीडिध्व ईडिध्वमु मातरोमुम् ।
ईशिष्व[2] चेदीशिष ईडिषे चेदीडिष्व[3] चण्डि[4] स्वपिपीह किं त्वम्[5] ॥ ६९ ॥

किं रोदिषि प्राणिहि जक्षिहि क्ष्मे धर्म[6] श्वसिह्यद्य हि मा स्म रोदीः ।
त्वं मार्थ रोदः स्म च किं तु जक्ष्या गीर्मा स्म रोदीच्च वृथा ह्यरोदत्[7] ॥ ७० ॥

विघ्नेद्[8] स्म मादः स्वयशोस्य विघ्नैर्मा स्मादर्दन्योपि[9] यदद्य लक्ष्मीः ।
वरैः सुसंस्कारममुं परिष्करोती[10]त्यथाभाष्यत वेत्रवत्या ॥ ७१ ॥

७१[11]. अथ वेत्रवत्या लक्ष्मीप्रतीहार्या कर्त्र्याभाष्यतोक्तम् । किमि-

१ ए °ध्वनु मा°. २ ए °शिपू चे°. ३ ए °ड्थि च°. ४ ए °ण्टि स्वपि°. ५ ए कि त्वाम् ॥ सी कि वि ॥ कि. ६ ए °र्म श्वसिद्य हि. ७ सी डी °रोदीत्. ८ ए °घ्नेत्प्रमादस्वंय°. ९ बी °दन्र्यौपि. १० बी सी डी °रिम्करो°.

१ ए °वीग्व । त°. २ ई °रैमुदा. ३ ए °याद्वारं°. ४ ए °दनमी.° ५ ए °पेभ्याया°. ६ ए सी डी °ता ॥ न्यधा°. ७ ए सी डी °त् । अर°. ८ ए यसि इ°. ९ बी सिच् । आ°. १० ए एसो°. ११ सी ७१ ल°.

त्याह। उ हे मातरो[1] ब्राह्म्याद्याः[2] सप्त मातृदेवताश्चेदमुं कर्णं यूयमीशिध्वे पालयथेत्यर्थः। तदेशिध्वं पालयत[3]। अत्रार्थे ममानुज्ञेत्यर्थः। अथ तथा हे मातरश्चेदमुमीडिध्वे निर्व्यूढधैर्यादिगुणावर्जितत्वात्[4]स्तुथ[5] ईडिध्वे तदेडिध्वं स्तुत। तथा हे चण्डि गौरि त्वं चेदमुमीशिषे[6] पासि[7] तदेशिष्व[8] चेदीडिषे तदेडिष्व किं किमिति त्वमिह कर्णस्य पालने[9] स्तवने च विषये स्वपिषि निरुद्यमीभवसि। तथा हे क्ष्मे भूदेवते किं रोदिषि मम भर्ता कर्णोनेन दुष्टसुरेण भक्ष्यते लग्न इति शोकेन किमित्यश्रूणि मुञ्चसि किं तु प्राणिहि मद्भर्ता विजयमानोस्तीत्युज्जीव तथा जक्षिहि स्वभर्तुरभ्युदयदर्शनेन हस। तथा हे धर्म हि स्फुटमद्य मा स्म रोदीः किं [10]तु श्वसिहि तथा हे अर्थ[11] त्वं मा स्म रोदः[12] किं तु जक्ष्या[13] हस तथा गीः सरस्वत्यद्य मा स्म रोदीश्च हि निश्चितं वृथा निरर्थकं गीः पूर्वमरोदीन्[14]। तथा हे विघ्नेड्[15] विघ्नविनायकास्य कर्णस्य विघ्नैः कृत्वा स्वयशो मा स्मादो मां[16] विनाशय[17]ः। अत्रोपसर्गा[18] अकिंचित्करत्वात्तवायश एव करिष्यन्तीति[19] भावः। तथान्योपि यक्षराक्षसादिरप्यस्य विघ्नैः[20] स्वस्यायशो[21] मा स्मादद्यद्यस्माद्धेतोः[22] सुसंस्कारं स्थिरवासनममुं कर्णं लक्ष्मीरद्य[23] वरैः[24] प्रसाददानैः परिष्करोत्यलंकरोतीति[25]॥

ईशिषे। ईशिध्वे। ईशिष्व[26]। ईशिध्वम्। ईडिषे। ईडिध्वे। ईडिष्व। ईडिध्वम्[27]। अत्र "ईशीडः"[28] [८७] इत्यादिनेट्॥

१ ए °रो ब्रह्माद्याः. २ सी ब्राह्माद्याः. ३ ए °यतीत्रा°. सी डी °यतेत्यत्रा°. ४ बी °त्वात्स्तुथ त°. ५ ए °त्सुथतडिध्वं. ६ ए °मुनीशि°. ७ ए °सि त्व चेशीष्व. ८ सी डी °दशीष्व. ९ सी डी °लनस्त°. १० बी तु स्वसि°. ११ ए °र्थ इं मा. १२ ए रोह कि. १३ ए जक्षा हमा त°. १४ बी °रोदत्त। त°. १५ बी °घ्नेद् वि°. १६ बी मा स्मा वि°. १७ डी °शय। अ°. १८ ए °र्गा कि. १९ ए °ष्यतीति. २० ए विस्तैः स्व°. २१ ए बी स्वय°. २२ ए स्मानद्य°. बी स्मादाद्य°. सी डी °स्मादद्यस्मा°. २३ ए °लक्ष्मीर°. २४ ए वचैः प्र°. २५ बी सी डी °रिस्करो°. २६ ए ईसिष्व. २७ डी °म्। ईडिषे ईडिध्वे। ईडिष्व। ईडिध्वम्। अ°. २८ ए °शीङ् इ°.

रोदिषि । स्वपिषि । प्राणिहि[1] । श्वसिहि । जक्षिहि । इत्यत्र "रुत्पञ्च[2]०"[८८] इत्यादिना-इट् ॥ अय इति किम् । जक्ष्याः[4] ॥

मा स्म रोदीत्[5] । मा स्म रोदीः । इत्यत्र "दिस्योरीट्" [ ८९ ] इतीट् ॥ दिस्योरिति किम् । प्राणिहि ॥ दिस्याहचर्यात्सिंस्तन्या[6] एव । तेन रोदिषि[7] ॥

मा स्मादत् । मा स्मादः । अरोदत् । मा स्म रोदः । अत्र "अदश्चाट्" [९०] इत्यट् ॥

संस्कारम्[8] । परिस्क(ष्क?)रोति । इत्यत्र "सं" [ ९१ ] इत्यादिना स्सट् ॥

देवी सितज्योतिरुपस्कृतेनोपस्कुर्वती[1] द्यामनुपस्कृतं तम् ।
नृपं प्रसन्ना रभसादुपस्कुर्वाणानुपस्कारमिदं[2][3] बभाषे[4] ॥ ७२ ॥

७२. देवी[9] लक्ष्मीरनुपस्कारं[10] वाक्याध्याहाररहितं यथा स्यादेवमिदं वक्ष्यमाणं बभाषे । कीदृक्सती । प्रसन्नात एवानुपस्कृतं रागद्वेषादिविकाररहितं तं नृपं कर्णं रभसादौत्सुक्येनोपस्कुर्वाणा[11] पुत्रलाभवरेण विशेषयन्ती । अत एवं[12] सितं[13]ज्योतिरुपस्कृतेन सितं[14]स्य प्रसादोद्भवहसितस्य ज्योतिषां कान्तीनामुपस्कृतेन समुदायेन कृत्वा द्यां व्योमोपस्कुर्वत्यलंकुर्वती ॥

द्यामुपस्कुर्वती । ज्योतिरुपस्कृतेन । तमुपस्कुर्वाणा । अनुपस्कृतम्[15] । अनुपस्कारम् । अत्र "उपाद्" [ ९२ ] इत्यादिना[16] स्सट्[17] ॥

---

१ प डी °पकुर्व°. २ प °भरमादु°. ३ प °णामुप°. ४ प °भापेः ॥.

---

१ प °हि । स्वसि°. २ प रुव्यच°. ३ सी डी °श्चक इ°. ४ बी जक्ष्या ॥. ५ प रोदीत् । इ°. ६ प °त्सिह्यंस्तरया ए°. ७ प सी °पि ॥ सा स्मा°. ८ बी °स्कार । प°. ९ प देवी ल°. १० प °रं व्याक्या°. ११ प °त्सुकोनो°. १२ बी सी डी °व च सिम°. १३ डी °तस्य. १४ प °तरम प्र°. १५ सी °पस्का°. १६ सी °ना स्मट्. १७ प रस इ ॥ तु°.

**तुष्टास्म्युपस्कीर्य लुनामि तेघं मा भूत्प्रतिस्कीर्णमतः परं ते ।**
**यदप्युपस्कीर्णमिहोपसर्गैस्तैस्ते तपः प्रत्युत दीपितं हि ॥ ७३ ॥**

७३. हे राजन्नस्म्यहं तुष्टा सती ते तवाघं कष्टमुपस्कीर्य विक्षिप्य लुनामि । अतश्चातोस्मादिनात्परं पश्चात्ते प्रतिस्कीर्णं हिंसानुबन्धी विघ्नेट्कृतो विक्षेपो मा भूत् । यदप्युपसर्गैर्विघ्नेट्कृतोपद्रवकर्तृकैमुपस्कीर्णं हिंसानुबन्धी विक्षेप इह स्थानेभूत्तेन परीक्षानिर्वाहशाणभूतेनोपस्कीर्णेन तैरुपसर्गैः कर्तृभिर्हि स्फुटं प्रत्युत विशेषेण ते तपो दीपितमुज्ज्वालितम् ॥

उपस्कीर्य लुनामि । इत्यत्र "किरो लवने" [ ९३ ] इति स्सट ॥

प्रतिस्कीर्णम् । उपस्कीर्णम् । अत्र "प्रतेश्च वधे" [ ९४ ] इति स्सट ॥

**अपस्किरन्ते श्वकविष्किरोक्षाणः क्षेत्रपालाच्युतशंकराणाम् ।**
**प्रस्तुम्पति स्वर्गिगवीं च वत्सो यत्रास्तु तत्राप्यहता तवाज्ञा ॥७४॥**

७४. तत्रापि स्वर्गेपि तवाज्ञाहता मत्प्रसादादस्खलितास्तु । यत्र स्वर्गे क्षेत्रपालाच्युतशंकराणाम् । अज्ञातः श्वा श्वकः कुंकुरः । विष्किरः पक्षी । अर्थाद्गरुडोत्र । उक्षा वृषभः । द्वन्द्वे ते वाहनान्यपस्किरन्ते विक्षिपन्तीति सामान्यार्थः । विशेषस्त्वयम् । श्वा आश्रयार्थी सन् विलिख्य भस्म विक्षिपति । विष्किरो भक्ष्यार्थी सन् विलिख्याव-

१ डी °पस्कार्य. २ सी तेपमा. ३ ए विष्करो°. सी डी विस्करो . ४ डी °म् । प्रास्तु°.

१ ए °वाय क°. २ ए साद्दिना . ३ ए यदिप्यु . ४ सी विघ्नंकृतो°. डी °विघ्नकृतो°. ५ ए °कणिक°. ६ ए सी °स्कीर्णि हि . ७ ए °सर्गैक . ८ ए प्रत्यत. ९सी डी °नाति । इ . १०सी °निष्कीण । उ . ११सी ति स्मट ॥ अ°. १२ए कुक्करः. सी कुकुरः. डी कुर्कुरः. १३ ए °भः । थीद्दंत. १४ ए °परिकर°. १५ ए °मान्यर्थः. १६ ए °लिष्पति स. सी °लिष्य भ°. १७ बी विष्करो. १८ ए सी डी भक्षार्थी.

स्करं विक्षिपति[1]। उक्षा हृष्टः सन् विलिख्य तटं विक्षिपति[3] तथा यत्र च वत्सः स्वर्गिगर्वीं कामधेनुं प्रस्तुम्पत्युत्तुण्डयति । पयःपानायोध आघातपूर्वं लेढीत्यर्थः ॥

प्रस्तुम्पतिर्गौरपि[1] मास्तु देशः प्रस्तुम्पको[2] नन्दतु तेद्य[3] वत्स ।
मा सिश्व मुश्वाद्य समाधिमुद्रामुम्भामि यत्तेन्यदभीप्सितं वा ॥७५॥

७५. हे वत्स पुत्र ते गौरपि धेनुरपि वृषोपि वा प्रकृष्टस्तुम्पतिर्हिंसा यस्य स प्रस्तुम्पतिर्मास्तु । तथा तव देशश्च प्रगतस्तुम्पोस्मात् कचि प्रस्तुम्पकः परचक्रोपद्रवादिरहितः सन्नन्दतु । अत एवाद्य समाधिमुद्रां योगनिरोधं मा सिश्व मा वर्धयेत्यर्थः । किं तु मुञ्च । वा यद्वा यत्तेन्यत्स्वर्गेप्यस्खलिताज्ञाभवनादेरपीतरदभीप्सितं समाधिमुद्राया अमोक्षलिङ्गेनाभिलषितमस्ति तदप्युम्भामि पूरयामि ॥

शुम्भच्छदम्फन्सुधयेव तृम्फन्गुम्फन्नु[4] हारान्वचनैरजम्भः[5] ।
आरम्भरन्धोन्मुदितोथ[6] लक्ष्मीं स रेधुषीमारभतेति नोतुम्[7] ॥७६॥

७६. अथैवंभणनानन्तरं[11] स कर्णो रेधुषीं संसिद्धां फलदानोन्मुखीमित्यर्थः । लक्ष्मीमिति वक्ष्यमाणगीत्या नोतुं स्तोतुमारभत । कीदृक्सन् । अजम्भो मैथुनरहितो ब्रह्मचारीत्यर्थः । अत एवारम्भरन्धोन्मु-

१ ए °तिर्गोर°. २ ए °स्तुम्पको. ३ ए ते व°. डी तद्य व°. ४ डी तृफन्गु°. ५ डी °नैरंज°. ६ ए °न्धोमुदितोथ ल°. ७ ए नोत्तुम्.

१ बी विक्षप°. २ ए °ति विष्किरो भक्षार्थी मन्विलिख्यावस्करं विक्षिपति उ°. ३ बी विक्षप°. ४ ए सी °गवी का°. ५ डी °कृष्टा स्तु°. ६ ए °स्तुन्तिर्मा°. ७ बी °गतः स्तु°. ८ ए °रहिः स°. ९ ए °रोध मा. १० ए °लषत°. ११ ए °थैवम°. १२ ए °न्तरसं स. १३ ए वक्ष्यमा°. १४ ए नोत्तु स्तो°. १५ डी °भत् । की°.

दितः कार्यस्य संसिद्ध्या हृष्टोत एव चादृम्फंस्तपोध्यानादिनाक्लिश्य-मानोत एव च शुम्भन् शोभमानोत एव च सुधया तृम्फन्निवैवात एवं च वचनैः कृत्वा हारानिव राज्ञोतिहृष्टत्वेन वचसां स्मितसितत्वा-त्सुसंबद्धत्वाच्च मुक्ताकलापानिव गुम्फन् ग्रथ्नन् ॥

आरेभ आलम्भ्यपशूननालम्भयन्पुरो यः करुणां लभन्तीम् ।
त्वामर्चितुं तेन यशांसि लम्भं लम्भं विभोलम्भ्युपलम्भ्यसिद्धिः ॥ ७७ ॥

७७. हे विभो स्वामिनि यस्त्वामर्चितुमारेभे । कीदृक्सन् । पुरस्तात्त्वामग्रत आलम्भ्यपशून्वध्यांश्छागादिपशूननालम्भयन्नहिंसन् । यतः किंभूतां त्वाम् । करुणां लभन्तीं प्राप्नुवतीम् । तेन पुंसा कर्त्रा यशांसि लम्भं लम्भमुपलम्भ्यसिद्धिः प्रशस्यकार्यनिष्पत्तिरलम्भि प्राप्ता ॥

अस्रूपलम्भां मतिमत्र लाभं लाभं तवालाभि पदार्चनं यैः ।
प्रालम्भि नात्मा हि कलिं प्रलम्भं प्रलम्भमेभिः सशिवोपलम्भैः ॥ ७८ ॥

७८. यैर्नरैरस्रूपलम्भां दुःप्रा(दुष्प्रा)पां मतिं ज्ञानं लाभं लाभमत्र जगति तव पदार्चनमलाभि । सज्ज्ञानैर्यैस्त्वत्पादपूजा प्राप्तेत्यर्थः । ए-

१ ए आम्भप°. २ बी °लम्भप°. ३ ए °चिंतं ते°. ४ डी °भं नवा°. ५ ए तबाला°. ६ ए प्रलिम्भं°. ७ बी लभं प्र°. ८ ए प्रलिम्भ°.

१ डी °दितोक्लि°. २ ए तृफन्नि°. ३ बी °वा तृप्यंन्निवात. ४ सी डी °व व°. ५ ए चनैः. ६ डी °संबंद्ध°. ७ ए मुक्ताक°. ८ ए बी सी ई ग्रथन्. ९ ए °तथाग्र°. १० बी °लम्भप°. ११ ए °पशूंल्व°. १२ बी °शून्वंध्यां°. १३ ई °भती प्रा°. १४ बी °वन्तीम्. १५ ए बी सी डी °लम्भ्यसि°. १६ बी °निप्पत्ति°. १७ डी °रैरंसू°. १८ सी लाभम°. १९ सी डी °ति नव. २० ए °दार्थन°. २१ ए °लापि । स°. २२ ई °त्यर्थ । ए°.

भिर्नरैः[1] कलिं पापयुगं प्रलम्भं प्रलम्भमभीक्ष्णं वञ्चयित्वा हि स्फुटमात्मा न प्रालम्भि परमपुरुषार्थमोक्षप्रापणेन न वञ्चितः। किंभूतैः। सशिवोपलम्भैः परमात्मदर्शनयुक्तैः[2]। ते परमज्ञानिनः सन्तः सिद्धा इत्यर्थः॥

अपस्किरन्ते श्वकविष्किरो[3]क्षाणः। अत्र "अपात्[4]°" [ ९५ ] इत्यादिना[5] स्सट्॥

विष्किर[6]। इत्यत्र "वौ विष्किरो वा" [ ९६ ] इति वा स्सट्[7] निपात्यः॥

प्रस्तुम्पति वत्सः स्वर्गिगवीम्[8]। अत्र "प्रात्०" [९७] इत्यादिना स्सट्॥ अन्ये तु प्रात्परस्य तुम्पतिशब्दस्य गव्यभिधेये स्सडादिः स्यात्। प्रस्तुम्पति[9]र्गौः[10]। तुम्पतिधातोस्तु[11][12] स्सट् न स्यादिति मन्यन्ते॥ एके तु प्रात्तुम्पतेः कपीत्यारभन्ते[13]। कपि हिंसायां कंप्पर्याये[14] वा कपि समामान्त इति[15] च व्याचक्षते। प्रस्तुम्पति वत्सः[16] स्वर्गिगवीम्। दुग्धक्षारणायोधसि हिनस्तीत्यर्थः। प्रस्तुम्पकः॥

नन्दतु। इत्यत्र "उदितः°" [ ९८ ] इत्यादिना नोन्तः[17]॥

मुञ्च। सिञ्च। तृम्फन्[18]। अदम्फन्। गुम्फन्। शुम्भन्। उम्भामि[19]। इत्यत्र "मुचादि°" [९९] इत्यादिना नोन्तः॥

अजम्भः[20]। अत्र "जभः स्वरे" [ १०० ] इति नोन्तः॥

रन्ध। इत्यत्र "रध°" [ १०१ ] इत्यादिना नोन्तः॥ इटि तु परोक्षायां[21] रेधुषीम्[22][23]। अत्र नस्य लुक्॥

आरम्भ। इत्यत्र "रभ°" [ १०२ ] इत्यादिना नः[24]॥ अपरोक्षाशवीति किम्। आरेभे। आरभत॥

१ डी °रपुषा°. २ ई °क्तः । प°. ३ ई °विष्करो. ४ बी अपीत्या°. ५ ए इना. ६ ए सी डी °ष्किरो. ७ ए स्मद्भिपा°. ८ ए स्वगिग. डी स्वर्गंग°. ९ ए स्तुपति°. १० ई °तिगौः । तु. ११ ए °तोस्म°. १२ सी डी °स्तु न. १३ बी °रम्भे । क°. १४ ए कन्यर्यां°. सी कत्यर्यां. ई कम्ययया. १५ सी डी °ति व्या°. १६ ए वत्स्तास्व°. १७ डी °न्तः ॥ मुञ्च. १८ ए तृफन् । अ° १९ ए उभा-त्य°. सी डी उम्भन् । इ°. २० ए अतजभस्व°. २१ डी °क्षाया रे°. २२ ए रेधुषी°. २३ ए सी डी °षी । अ°. २४ ए °नः ॥ स्वप°.

अनालम्भयन् । इत्यत्र "लभः" [ १०३ ] इति नः ॥ लभेः परस्मैपदस्याप्य-भिधानाल्लभन्तीमिति केचित् ॥

आलम्भ्य । इत्यत्र "आङो यि" [ १०४ ] इति नः ॥

उपलम्भ्य । इत्यत्र "उपात्स्तुतौ" [ १०५ ] इति नः ॥

अलाभि अलम्भि । लाभं लाभम् लम्भं लम्भम् । इत्यत्र "ञिख्णमोर्वा" [ १०६ ] इति वा नः ॥

खल । असूपलम्भाम् । घञ् । उपलम्भेः ॥ ञि । प्रालम्भि । प्रलम्भं प्रलम्भम् । अत्र "उपसर्गात्°" [ १०७ ] इत्यादिना नः ॥

**अभक्तिभाजां त्वमिहातिदुर्लम्भतोतिदुर्लम्भ ऋतं ब्रवीमि ।**
**भक्तात्मनां चातिसुलम्भतोतिसुलम्भ ऋद्ध्यास्पदमस्यजस्रम्**
**॥ ७९ ॥**

७९. हे प्रभो अहमृतं सत्यं ब्रवीमि । किं तदित्याह । इह भुव्य-भक्तिभाजामभक्तानां त्वमतिदुर्लम्भतोप्यतिशयदुःप्रा(दुष्प्रा)प्यादपि वस्तुनोतिदुर्लम्भा तथा ऋद्ध्यास्पदमणिमादिमहर्द्धीनां स्थानमसि त्वं भक्तात्मनां चातिसुलम्भतोप्यतिसुलम्भा ॥

खल् । अतिसुलम्भतः । अतिदुर्लम्भतः ॥ घञ् । अतिसुलम्भा । अतिदुर्लम्भा । इत्यत्र "सुदुर्भ्यः" [ १०८ ] इति नः ॥

१ ए °जां त्वमि°. २ ए ऋभं ब्रवीसि । भ°. ३ बी सुम्भंतो°. ४ ए °लभ ऋ°.

---

१ डी °स्याभि°. २ बी °धान्नाल्ल°. ३ ए °भन्तः । मि°. ४ बी डी °लम्भ । इ°. ५ सी °त्र उपा°. ६ बी लम्भ । इ°. ७ ए °पास्तुतौ. ८ ई नः ॥ ला°. ९ ए लाभ लाभ ल°. १० बी लभं लभम् ।. ११ ए इत्रत्य लिख्ण°. १२ ए °म्भाः ॥. सी डी °म्भा ॥. १३ सी डी उपाल°. १४ डी °लम्भेः ॥. १५ ए °लम्भिः । प्र°. १६ बी °म्भि । ख्णम् । प्र°. १७ सी डी °त्याना. १८ ई °मि । कित°. १९ ए त इत्याह । दुह भु°. २० ए °क्तिराजामाभ°. २१ ई °थास्प°. २२ ए सी डी °लभा ॥. २३ ए °दुर्लभ्य इ°.

नंष्ट्रीं[1] च मङ्क्षीं च यदाम्बुधौ त्वां स्रष्टापि नै[3] द्रष्टुमलं तैदा हि ।
दृष्टं निसृष्टं जगतोपि दौस्थ्यं स्पष्टुं विमर्ष्टा तव कः कलां तत् ॥८०॥

८०. स्रष्टाप्यास्तामन्यो जनो ब्रह्मापि यदा नालं[2] न समर्थोभूत् । किं कर्तुम् । त्वां द्रष्टुम् । किंभूतां सतीम् । नंष्ट्रीं[3] च ऋषिशापेन जगतो नश्यन्तीं च । तथाम्बुधौ मङ्क्षीं[4] च मज्जन्तीं च । तदा हि स्फुटं जगतोपि सकलविश्वस्यापि निसृष्टं स्वाभाविकं दौस्थ्यं[5] दारिद्र्यं दृष्टम्[6] । अब्धिमथनात्पूर्वं किल दुर्वासोमुनिनात्यादरेण[7] दत्तायां सन्तानकपुष्पमालायामिन्द्रेणैरावणकुम्भस्थले[8][9][10] क्षेपेणावज्ञातायां क्रुद्धेन शापो[11] दत्तो यथा लक्ष्मीगर्वेणैवमवज्ञेति[12] निःश्रीकं जगद्भूयादिति । ततो लक्ष्मीरब्धौ तथा निलीना[13] यथा स्रष्टापि न द्रष्टुं शकिता जगत्तातिदुःस्थमासीदिति[14] पुराणम् । तत्तस्मात्तव[15] कलां[16] माहात्म्यं[17] स्पष्टुं[18] ज्ञातुं को विमर्ष्टा विमृशति । अहं लक्ष्मीमाहात्म्यं ज्ञास्यामीति[19] चिन्तामपि न कोपि करोतीत्यर्थः ॥

स्प्रष्टास्त्रमाम्रष्ट[5] ऋतं च शास्त्रं स्रप्ता गिरीन्द्रारिनिधींश्च सप्ता[6] ।
अस्त्वग्निचिद्वा[7] यजमान औदासीन्यं भवत्या यदि तन्मुधैतत् ॥८१॥

८१. अस्त्रं धनोपार्जनार्थे[20] चापादि शस्त्रं स्प्रष्टा[21][22] स्वविद्यानैपुणेन[23][24]

१ सी ई नंष्ट्री च. २ बी मङ्क्षी च. ३ बी न द्रष्टु. ४ ए तथा हि. ५ सी डी स्प्रष्टास्त्र°. ६ ई °श्च स्रप्ता ।. ७ ए °द्वा जयमा°.

१ ई °ह्मादि य°. २ सी डी °लं स°. ३ ए सी डी °ष्ट्रीं ऋ°. ४ ए सी डी ई °ङ्क्षीं म°. ५ बी °थ्यं द्रष्ट°. ६ ए दृष्टा अब्धिम°. ७ ई °र्वासामु°. ८ ए सन्तानं°. ९ बी °पुष्पमा°. १० सी डी °स्थलक्षे°. ११ ए शापाद°. १२ ए लक्ष्मीं ग°. १३ ए °ना स्र°. १४ ए °गत्वाति°. १५ ई °स्मात्ते क°. १६ बी °लां महा°. १७ ई °त्म्यं स्प्रष्टुं ज्ञा°. १८ ए बी स्पष्टुं ज्ञा°. १९ ए °मी चि°. २० बी °नार्थे चा°. २१ सी स्प्रष्टाः स्वvि°. २२ बी °ष्टात्रवि°. डी ई °ष्टास्त्रवि°. २३ सी °पुष्पेन. डी °पुण्येन. २४ ई °न गृही°.

ग्रहीता नरोस्तु । ऋतं सत्यं शास्त्रं शब्देशास्त्राद्यास्रष्टा च यथावस्थितार्थावगमेन विचारयिता वा नरोस्तु । उद्यमित्वाद्रिरीन् रोहणादिशैलान् स्रप्ता वा गन्ता वा नरोस्तु । वारिनिधीन्सप्र्ता च गन्ता वास्तु । यजमानोग्निचिद्वा धनवृद्धिहेतुयागस्य कारयिता वास्तु । परं यदि भवत्या औदासीन्यमुपेक्षानाराधितत्वेनास्त्रस्प्रष्टा(ष्ट्रा)दिपु चेन्नानुकूलासीत्यर्थः । तत्तथैतदस्त्रस्पर्शनादि मुधा विफलम् ॥

नंष्ट्रीम् । अत्र "नशो धुटि" [ १०९ ] इति नः ॥

मङ्क्तीम् । अत्र "मस्जेः सः" [ ११० ] इति सस्य नः ॥

स्रष्टा । द्रष्टुम् । अत्र "अः सृजि॰" [ १११ ] इत्यादिना-अः । अकितीति किम् । निसृष्टम् । दृष्टम् ॥

स्प्रष्टा स्पर्ष्टुम् । आम्रष्टा विमर्ष्टा । स्रप्ता सर्प्ता । इत्यत्र "स्पृश॰" [ ११२ ] इत्यादिना वा-अः ॥

अग्निचित् । इत्यत्र "ह्रस्वस्य॰" [ ११३ ] इत्यादिना तोन्तः ॥

यजमानः । अत्र "अतो म आने" [ ११४ ] इति मः ॥

औदासीन्यम् । अत्र "आसीनः" [ ११५ ] इत्यासीनशब्दो निपात्यः ॥

**वचः सुधामुद्गिरति न्वकीर्णं मुखं च पूर्तेन्दुरुचिं जिहीर्षु ।**
**पोपूर्यते कौस्तुभतां नखश्रीः शिष्टः करौ स्वर्द्रुमपल्लवत्वम् ॥८२॥**

१ प ॰कीर्णं मु॰. २ प च मूर्तें. ३ प ॰रुचि जि॰.

---

१ सी शाद्या॰. २ प ॰ब्दशब्दशा॰. ३ बी ॰थाम्थि॰. ४ प सी ॰धीन्सुर्प्ता॰. ५ प ॰नास्वस्प्र॰. ६ सी ॰स्त्रस्पृष्टा॰. ७ बी ॰त्तदैत॰. ई ॰त्तदैतत्तद॰. ८ प थैदतदस्वस्प॰. ९ प ॰दि मुधा. १० ई ॰टि नः. ११ बी मस्जे श इति शस्य. १२ प ॰स्जेः श इ॰. १३ प ॰ति शस्य मः ॥. १४ प सी डी नः ॥ स्प्रष्टा. १५ प अती॰. १६ सी डी ॰म् । स॰. १७ ई म् । द्रष्ट॰. १८ सी डी ॰त्र दृश॰. १९ बी ॰ना अः. २० सी ॰ना नोतः ॥ य॰. डी ॰ना नोन्तः. २१ बी ॰त्याशीन॰.

**इयं विशिष्टाशिषदब्जवासे तवार्[1]यशीः कामगवीत्वमाशीः ।**
**अक्रूतमक्ष्मापितपादमेतद्गजेन्द्रयानं दिदिवत्प्रयातम् ॥ ८३ ॥**
**किं क्रूय्यते वा वि[2]निषेव्यसे त्वं सहोदरैः कीर्तितसेवनैर्नु ।**
**मूर्ध्ना प्र[3]णिंस्ते घनघात्यविघ्नो दानीय एषोपि जनस्तवांह्री[4] ॥८४॥**

८३–८४. हे अब्जवासे लक्ष्मि अकी[1]र्णं संबद्धं ते वचस्तुष्टास्मी[2]त्यादिगीराह्लादकत्वात्सुधां[3] न्वमृतमिवो[4]द्गिरति क्षरति तथा ते[5] मुखं पूर्तेन्दुरुचिं परिपूर्णचन्द्रल[6]क्ष्मीं जिहीर्षु पूर्णेन्दुतुल्यं मुखमित्यर्थः । तथा नखश्रीरत्यारक्तत्वादिगुणैः कौस्तुभतां कौस्तुभमणित्वमा[7]त्मनः पोपूर्येतेत्यर्थं[8] पोषयति । तथा करौ मार्दवादिगुणैः स्वर्द्रुमपल्लवत्वं पारिजातकिशलयतां स्वस्य शिष्टो वदतः । तथार्यान्पुण्यवतः शास्ति वक्तयायेशीः । पुण्यपात्रेषु भवन्तीत्यर्थः । इयं प्रत्यक्षा विशिष्टा साधितविशेषकार्याशीरस्तु तत्रा[9]प्यहृता तवाज्ञेत्यादिनोक्तपूर्वं म[10]ङ्गलशंसनं कामगवीत्वं सर्वकार्यसाधकत्वात्स्वस्य कामधेनुतामशिषदवोचत् । तथैतत्प्रत्यक्षमक्रूतं निःशब्दमक्ष्मापितपादमकम्पितांह्रि प्रयातं मत्समीपेभिगमनं कर्तृ गजेन्द्रयानमैरावणगतिं दिदि[11]र्वञ्जितवत् । वा यद्वा किं क्रूय्यते वचः सुधामुद्गिरतीत्यादि किमित्युच्यते । उपमानोपमेयतोक्त्या यद्वचनादेः सकाशाद्भेदो[12] मयोक्तः मोयुक्त एवेत्यर्थः । यतो नु शङ्के कीर्तितसेवनैर्वचनादि[13]व्याजेन ज्ञापितसेवैः सहोदरैः सुधादिभिरेव साक्षात्त्वं सेव्यसे सर्वसहोदरेभ्यूत्कृष्टत्वादाश्रीयसे । न तु ते सुधादितुल्यं वचनादि किंचिदस्तीत्यर्थः । सुधेन्दुकौस्तुभस्वर्द्रुमपल्लवकामधेनु-

१ सी डी तथार्ये°. २ प विनेषे°. ३ बी णिस्ते घ°. ४ ई 'ह्री ॥ अ°.

१ प °कीर्ण सं°. २ प °सीदि°. ३ प °धा तृमृ° ई °धा त्वमृ°. ४ ई °वोद्गर°. ५ प ते सुखं. ६ प सी °लक्ष्मी जि°. ७ ई °मात्मानः. ८ डी °त्राहते त°. ९ बी °पूर्वम°. १० ई °ङ्गलशं°. ११ डी °र्वञ्जित'. १२ प सी डी °दो नयो°. १३ प °दिर°.

गजेन्द्रा अब्धेरुत्पन्नत्वाल्लक्ष्म्याः सहोदरा इति। अतश्चैषोपि मल्लक्षणो जनस्तवांह्री मूर्ध्ना प्रणिंस्ते चुम्बति नमतीत्यर्थः। यतः कीदृक्। घनैर्लोहघनैर्घात्या हन्तुं शक्या विघ्ना निष्पुत्रत्वाद्यन्तराया यस्य सः कृच्छ्रोत्तार्यविघ्न इत्यर्थः। तथा दीयते यस्मै स दानीयः प्रसाददानयोग्यः॥

अकीर्णम्॥ क्विति। गिरति। अत्र "ऋतां क्ङितीर्" [११६] इतीर्॥ बहुवचनं लाक्षणिकस्यापि परिग्रहार्थम्। जिहीर्षु॥

पूर्तं। पोपूर्यते। अत्र "ओष्ठ्यादुर्" [११७] इत्युर्॥

अक्ङि। अशिषत्॥ क्ङिति व्यञ्जने। शिष्टः। विशिष्टा। इत्यत्र "इसासः°" [११८] इत्यादिना–इस्॥

आर्यशीः। अत्र "क्वौ" [११९] इतीस्॥

आशीः। अत्र "आङः" [१२०] इतीस्॥

अक्ष्मापित। अक्रूतम्। दिदिवत्। इत्यत्र "य्वोः°" [१२१] इत्यादिना यवयोर्लुक्॥ यवर्जनं किम्। क्रूय्यते। विनिपेव्यसे॥ व्यञ्जन इति किम्। सेवनैः॥

कीर्तित। इत्यत्र "कृतः कीर्तिः" [१२२] इति कीर्त्॥

षोडशः पादः समाप्तः

---

१ ई अब्धरु°. २ ए °लक्ष्म्या स°. सी °लक्ष्मा स°. ३ ई °र्ध्नां पर्णि°. ४ ए °स्ते युंवति. बी °स्ते स्पृशति न°. ५ ए यता की°. ६ ए सी °नीय प्र°. ७ ए °र्णं॥ ङि°. ८ ए गिरिति. ९ ए °त्र ऋतान्तिती°. १० सी °तीर। ब°. ११ डी °र्। ब°. १२ ए °तीरा। ब°. १३ ई बलुव°. १४ ई जिजिहीं°. १५ ई °र्तम्। पो°. १६ डी यंत्ते। अ°. १७ ए °त्। न्विति. १८ बी °ने। विशिष्टा। शिष्टः। इ°. १९ सी डी इशासः. ई इः सा°. २० ए °दिन् इ°. २१ ई इम्॥ आर्यसी। अ°. २२ सी °त। दि°. २३ ए °त्र य्वोः इ°. २४ ए °म्। न्क्रय्य°. २५ ए °त्र कृतः. २६ ए बी सी ई कीर्त्त॥. डी कीर्त्॥. २७ सी षोडः पा°. २८ सी पादस°. २९ ई °दः॥.

घनघात्य । इत्यत्र "आतुमः°" [ १ ] इत्यादिना प्रत्ययः कृत् ॥ अर्थादिरिति किम् । प्रणिस्ते ॥

दानीयः । अत्र "बहुलम्" [ २ ] इत्युक्तादर्थादन्यत्रापि कृत् ॥

त्वन्नन्दनस्यास्य पुरापि मातर्न न्यूनमर्हश्छिदुरेस्ति किंचित् ।
यत्कृष्टपच्यान्नमयी धरित्री भिदेलिमं भङ्गुरधैर्यमारम् ॥८५॥

८५. हे अर्हश्छिदुरे पापच्छेदिके मातस्त्वन्नन्दनस्य मल्लक्षणस्य पुरापि साक्षात्त्वदाशीर्दानात्पूर्वमपि न किंचिन्न्यूनमस्ति । यद्यस्मात्त्वत्प्रसादप्रतापमात्रादपि पृथ्वी कृष्टपच्यानि कृष्टे स्वयं पैकान्यन्नानि प्राचुर्येण प्राधान्येन वा यस्यां "अस्मिन्" [७.३.२] इति मयटि कृष्टपच्यान्नमय्यस्ति । तथारमरिसमूहो भङ्गुरधैर्यं स्वयंविशीर्यमाणधैर्यमत एव भिदेलिमं स्वयमेव विदीर्यमाणमास्ते ॥

नन्दनस्य । इत्यत्र "कर्तरि" [ ३ ] इति कर्तरि कृत् ॥

भङ्गुर । छिदुरे । भिदेलिमम् । कृष्टपच्य । इत्यत्र "व्याप्ये°" [ ४ ] इत्यादिना घुरकेलिमौ प्रत्ययौ कृष्टपच्यशब्दश्च कर्मकर्तरि स्युः ॥

---

१ प °हस्तिदु°. सी °हस्यिदु°. २ प °पश्चान्न°. ३ बी भिदिलि°. ४ प °लिसुर°.

---

१ डीपुस्तके समासे–'घनघात्य इत्यत्र कारकं कृतेति समासः'. २ प °घात । इ°. ३ प °दिनाः प्र°. ४ बी °त्यादेरि°. ५ डी पुस्तके समासे–'प्रणिस्त इत्यत्र कृत्संज्ञायां निंसनिक्षेति णत्वविकल्पः स्यात्स तु न'. ६ बी °हच्छिदु°. सी °हस्यिदु°. ७ बी त्प्रतापप्रसा°. सी °त्प्रसात्वत्प्रसा°. ८ प °यं––न्य°. ९ सी डी पच्यान्य°. १० प स्वयं वि°. ११ सी डी °णमस्ति ॥. १२ सी °र्तरी क°. १३ प °रिरिति. बी °रि कृत् इ°. १४ प सी डी °दुर । भि°. १५ प °ब्दस्य क°. १६ सी °रि स्यु ॥. डी °रिस्युः ॥.

धत्से[1]जर्य रुच्यमव्यथ्यभव्ये वास्तव्या चेन्मेसि चित्ते तदानीम् ।
जन्यं रम्यं सूनुना जन्यरम्यापात्याप्लाव्येस्फा[3]तिनापात्यमङ्के ॥८६॥

८६. अव्यथ्येषु मुनिषु भव्या रक्ष[1]कत्वेन प्रधाना यद्वाव्यथ्या निर्भया च सा भव्या च हे अव्यथ्यभव्ये लक्ष्मि चेत्त्वं रुच्यं मनोज्ञमजर्यमार्यसंगतं धत्से तथा चेन्मे चित्ते वास्तव्या वसन्त्यसि भवसि तदानीं सूनुना जन्यमुत्पत्तव्यं तथाङ्के[3] ममोत्सङ्के पात्यं पतनीयं रम्यं च कूर्चाकर्षणादिना क्रीडनीयं च । किंभूतेन सता । जन्या जायमाना रम्या मनोहरापात्यागच्छन्त्याप्लाव्योच्छलन्ती स्फातिर्वृद्धिर्यस्य तेन त्वत्प्रसादात्पुत्रस्योत्पत्तिर्वृद्धिश्च स्तादित्यर्थः । शालिनी छन्दः ॥

गान्धारगेयजनगेययशोभिराप्ला-
व्याशेन वत्स भवतस्तनयेन भव्यम् ।
लक्ष्मीरिति प्रवचनीय ऋतोक्त्युपस्था-
नीया जगत्प्रवचनीयगुणा तिरोभूत् ॥ ८७ ॥

८७. लक्ष्मीस्तिरोभूत् । कीदृशी । ऋतोक्तयः सत्यवचनान्युपस्थानीयाआराधिका यस्याः सा । यद्वा ऋतोक्तिभिरुपस्थानीयाराध्या । तथा जगतां प्रवचनीयाः कीर्तनीया गुणा यस्याः सा । तथा प्रवचनीया वदन्ती सती । किमित्याह । हे वत्स भवतस्तनयेन भव्यमुत्पत्तव्यम् ।

---

१ बी °त्सेजयं रु°. २ ए °व्यसरफा°. ३ सी °स्फाटिना°. ४ ए °ययन°. ५ ए °भिसप्लाव्याशैन. ६ ए °येयेन. ७ सी ऋत्योक्त्यु°.

---

१ ए °कक्षो प्र°. २ बी °गते ध°. ३ ए तथीङ्के समो°. ४ सी °मान्या र°. ५ ए °स्य—व°. ६ ए बी °त्तिवृद्धि°. ७ ए श्च तादि°. ८ ए °लिनीं छ°.

कीदृशा। गान्धारस्य तृतीयग्रामस्य गेयो गाता यो जनो देवलोकस्तेनैव गान्धारस्य गेयत्वात्तेन गेयानि[1] यानि यशांसि तैः कृत्वाप्लाव्याशेन पूरणीयदिकेनेति[2] ॥

अजर्यम्। इति "संगतेजर्यम्" [ ५ ] इति निपात्यम् ॥

रुच्यम्। अव्यथ्य। वास्तव्या[3]। एते "रुच्य°" [ ६ ] इत्यादिना कर्तरि निपात्याः[4] ॥

भव्ये। गेय। जन्य। रम्य[5]। आपात्य। [आ?]प्लाव्य। इत्येते "भव्य°" [ ७ ] इत्यादिना कर्तरि[6] वा निपात्याः ॥ पक्षे। तनयेन भव्यम्। जनगेय। सूनुना जन्यम्। रम्यम्। आपात्यम्। आप्लाव्याशेनं ॥

प्रवचनीयोपस्थानीयाशब्दौ "प्रवचनीयादयः" [ ८ ] इति कर्तरि वा निपात्यौ ॥ पक्षे। प्रवचनीयगुणा ॥ तत्पुरुषे। ऋतोत्त्युपस्थानीया[8]। वसन्ततिलका छन्दः ॥

आश्लिष्टैर्दयितां नभोधिशयितैः स्वं यानमध्यासितै-
र्लक्ष्मीं शश्वदनूषितैर्मुदमुपारूढैस्त्वरामास्थितैः[1]।
पुष्पक्षेपमिषात्तदामरजनैरारूढहर्षो[2] नृपः[3]
किं श्लिष्टः किमुपासितो[4]धिशयितः किं वाथ वानूषितः॥८८॥

८८. तदा लक्ष्म्या वरप्रदानकाल आरूढ आश्रितो हर्षो येन स आरूढहर्षो[9] नृपः कर्णः पुष्पक्षेपमिषात्कुसुमवर्षव्याजाद[10]मरैः[11] किं श्लिष्टो

१ बी शस्वद°. २ ए °षात्तदा°. ३ ए °र्षोन्नृपः. ४ ए °पाशितो°.

१ बी सी डी °नि य°. २ बी डी °दिकेने°. ३ ए डी ई °स्तव्य। ए°. ४ ए °त्याः ॥ सव्ये. ५ ए रम्या। पा°. ६ बी °रि नि°. ७ सी डी °न व°. ८ सी डी °स्थापनी°. ९ ए °र्षोन्नृपः. १० बी पुप्फक्षे°. ११ ए °दनरैः.

मित्रैरिव स्नेहातिरेकादालिङ्गितः । किं वोपासितो बान्धवैरिव सदा समीपावस्थानेन सेवितः । किं वाधिशयितः परिचितलोकैरिव सुखवार्तालापेनाश्रितः । अथ वानूषितः प्रेष्यैरिवोनुगमनादिनानुसृतः । किंभूतैर्दयितामाश्लिष्टैः सभार्यैरित्यर्थः । तथा नभोधिशयितैराश्रितैस्तथा स्वं यानं विमानमध्यासितैस्तथा लक्ष्मीं श्रीदेवीं शश्वदनूषितैरनुसृतैस्तथामुदमुपारूढैराश्रितैस्तथा त्वरामौत्सुक्यमास्थितैराश्रितैः ॥ शार्दूलविक्रीडितं छन्दः ॥

अविभक्तचित्तैः सुजनैरुपस्थितो
जननीविजातैर्न्वनुजीर्णकल्मषः ।
स विजात उर्व्यां प्रविभक्त उन्नतिं
न तपोनुजीर्णः प्रकृतो न च स्मयम् ॥ ८९ ॥

८९. स कर्णः सुजनैः पुरप्रधानलोकैरुपस्थितो वर्धापनकसूचकवस्त्राद्युपढौकनेनाश्रितः । किंभूतैः । सद्भिः । जननीविजातैर्नु । एकमात्रा प्रसूतैरिव सहोदरैरिवाविभक्तचित्तैर्मिथोभिन्नमनोभिः । यतः कीदृक् सः । उर्व्यामुन्नतिमभ्युदयं विभक्तो विभागेन स्थापितवान् । ईदृक्कुत इत्याह । यत उन्नतिं पुत्रलाभैवररूपमभ्युदयं विजातः प्रसूतः । ईदृशोपि कुत इत्याह । यतो नु जीर्णं लक्ष्मीप्रसादेन क्षयं नीतं कल्मषं

---

१ ए न विस्म°.

---

१ ए वाभूषि°. २ ए °वामुग°. ३ बी °नुश्रितः. सी डी °नुधृतः. ४ ए °तागाश्लि°. ५ ए °श्रियितैतथा. ६ ए °नुमृतै°. बी °नुश्रितै°. ७ ए सी डी °र्णः स्वज°. ८ ए °नीनुजा°. ९ ए °मात्रोन्न°. १० ए °र्व्यांपुन्न°. ११ सी °न् । इदृकृत°. ए ईकृत. १२ बी °दृकुत. १३ ए °भपुत्रलाभव°. १४ ए सी °जात प्र°. १५ ए यं कल्मुषं निपु°. १६ सी °षं निपु°.

निःपु(निष्पु)त्रत्वरूपं पापं येन सः । ईदृशोपि कुत इत्याह । यतस्तपो नानुजीर्णः[1] सात्विकत्वात्तपः प्राप्य न क्षीणस्तथा महापुरुषत्वात्स्वयं लक्ष्मीसाक्षात्करणोद्र्वं[2] न प्रकृतो न कर्तुमारब्धवान् । योपि[3] तपो नानुजीर्णः स्वयं च न प्रकृतोत एवानुजीर्णकल्मषो[4] निष्पापो मुनिः स्यात्सोपि सुजनैस्तपःप्रभावान्निवर्तितवैरत्वाज्जननैनीवि[5]जातैरिवाविभक्तचित्तैः सद्भिः सेव्यत उन्नतिं प्रभावनां[6] विजातः सन्नुन्नैतिमुर्व्यां[7] विभजतीत्युक्तिः[8] ॥ सुदन्तं छन्दः । स्यौ स्जौ गः सुदन्तम् ॥

**प्रकृतोत्सवैः[1] सोनुगतो मुदं गतैरमृतं नु पीतैर्विनिपीत ईक्षणैः ।**
**रुचिरासितः कुञ्जरपृष्ठ आसितः सदनं प्रयातोभ्यनुयातवासवः**
**॥ ९० ॥**

९०. स कर्णः[10] सदनं राजभवनं प्रयातः । कीदृक्सन् । मुदं गतैर्हृष्टैरतैः[11] प्रकृतः कर्तुमारब्ध उत्सवो नगरशोभादिमहो[12] यैस्तैः[13] पौरैरनुगतस्तथामृतं नु पीतैः[14] स्वस्वामिदर्शनानन्देन[15] सुधां पीतैरिवेक्षणैर्विनिपीतः संहर्ष[16] हृष्टस्तथा कुञ्जरपृष्ठ आसितः स्थितस्तथा रुचिरमासितमासनबन्धो यस्य सोत[17] एवाभ्यनुयातवासवोनुकृतेन्द्रः[18] ॥

आश्लिष्टैर्दयिताम् नृपः श्लिष्टः । नभोधिशयितैः[19][20] नृपोधिशयितः[21] । त्वरामास्थितैः उपस्थितः सः । यानमध्यासितैः नृप उपासितः । लक्ष्मीमनूषितैः[22]

१ प ॰वैः सानु॰.

१ प ॰र्णः स्वत्वि॰. २ प ॰णादूर्वं. ३ प योति त॰. ४ प जीर्णःक॰. ५ प ॰नमैवि॰. ६ प ॰भाविनां जा॰. ७ प ॰न्नतमु॰. ८ प ॰क्तिः । मुद॰. ९ प ॰गः मुद॰. १० प कर्ण स॰. ११ बी ॰रत एव प्रकृतः प्रक॰. १२ बी ॰दिर्महो. १३ प ॰होदयै॰. १४ बी ॰तैः सुस्वा॰. १५ प ॰नातिदेन सुधां. १६ प ॰हष हृ॰. १७ प एडानु॰. १८ सी डी ॰वानु॰. १९ प ॰शयैः नृ॰. २० बी ॰यितः नृ॰. २१ प ॰यितैः । नृपोधिशयिता । त्व॰. २२ प ॰मभूषि॰.

नृपोनूषितः । उपार्ति विजातः जननीविजातैः । मुदमुपारूढैः आरूढहर्षैः । तपो नानुजीर्णैः अनुजीर्णकल्मषः । उपार्ति प्रविभक्तः अविभक्तचित्तैः । अत्र "श्लिष°"[1] [ ९ ] इत्यादिना कर्तरि वा क्तः ॥

स्मयं न प्रकृतः प्रकृतोत्सवैः । अत्र "आरम्भे" [ १० ] इति कर्तरि वा क्तः[2] ॥

गत्यर्थे[3] । मुदं गतैः[4] सोनुगतः । सदनं प्रयातः अभ्यनुयातवासवः[5] ॥ अकर्मक । आसितः रुचिरासितः[6] ॥ पिब । अमृतं पीतैः स विनिपीतः[7] । अत्र "गत्यर्थ°" [ ११ ] इत्यादिना क्तो वा कर्तरि[8] ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्ध-हेमचन्द्राभिधानशब्दानुशासनद्याश्रयवृत्तौ दशमः सर्गः ॥

१ सी डी श्लिष्य इ°. २ ए सी °रि क्तः. ३ बी °त्यर्थः । मु°. ४ ए °गतै सो°. ५ ए अत्यनु°. ६ बी °सित । रु°. ७ बी °पीत । अ°. ८ ए °र्तरिः ॥.

# BOMBAY SANSKRIT & PRAKRIT SERIES.

*Edited under the superintendence of Prof. V. S. Ghate, M. A. and Dr. S. K. Belvalkar, M. A., Ph. D.*

| | Rs. | a. |
|---|---|---|
| Âpastambîya Dharmasûtra, Part I., with Critical Notes and Index and various Readings of the Hiraṇyakes'i-Dharmasûtra, by Dr. G. Buhler ( B. S. S. No. 44 ) ... ... | 1 | 6 |
| „ „ Part II., containing extracts from Haradatta's Commentary called Ujjvala, by Dr. G. Buhler ( B. S. S. No. 50 ) | 1 | 2 |
| Âtharvaṇa Upanishads and Commentaries, by Col. G. A. Jacob. ( B. S. S. No. 40 )—*Under revision.* ... ... | 1 | 4 |
| Bhaṭṭi-Kâvya with Mallinâtha's Commentry, Vol. I., by R. B. K. P. Trivedi, B. A. (B. S. S. No. 56) | 9 | 0 |
| „ „ Vol. II., by R. B. K. P. Tridevi, B. A. (B. S. S. No. 57) ... ... ... ... | 6 | 0 |
| Concordance to the Principal Upanishads and Bhagavadgîtâ, by Col. G. A. Jacob ( B. S. S. No. 39 )... ... ... | 4 | 0 |
| Das'akumâracharita of Daṇḍin, Part I., with Critical Notes, etc., by Dr. G. Buhler (B. S. S. No. 10 )—*Under revision.* ... ... ... | | |
| „ „ Part II., by Dr. P. Peterson (B. S. S. No. 42 )—*Under revision.* ... ... ... | 0 | 8 |
| Des'înâmamâlâ Part I., Text and Critical Notes, by Prof. Pischel and Dr. G. Buhler ( B. S. S. No. 17 ) ... ... | 1 | 0 |
| Ekâvali of Vidyâdhara, with the Commentary, Tarala, of Mallinâtha, and Critical Notes, etc., by R. B. K. P. Trivedi, B. A. ( B. S. S. No. 63 ) ... ... ... | 14 | 0 |
| Gauḍavaho, by Vâkpati, by S. P. Pandit, M. A. ( B. S. S. No. 34 ) ... ... ... ... ... ... ... | 3 | 0 |

| | Rs. | a. |
|---|---|---|
| Hand-book to Ṛigveda Part I., by Dr. P. Peterson, ( B. S. S. No. 41 ) ... ... ... ... | 1 | 8 |
| „ „ Part II., by Dr. P. Peterson ( B. S. S. No. 43 ) ... ... ... ... ... ... ... | 2 | 8 |
| Harshacharita, by Dr. A. A. Führer (B. S. S. No. 66) ... | 2 | 0 |
| Hitopades'a of Nârâyaṇa, by Dr. P. Peterson ( B. S. S. No. 33 ) ... ... ... ... ... ... ... | 0 | 14 |
| Hymns from the Ṛigveda, 3rd edn., by Dr. P. Peterson and S. R. Bhandarkar, M. A. ( B. S. S. No. 36 ) ... ... | 2 | 4 |
| Hymns from the Ṛigveda (Second Selection), by Dr. P. Peterson (B. S. S. No. 58) ... ... ... ... ... | 4 | 0 |
| Kâdambarî, Vol. I. (Text), by Dr. P. Peterson ( B. S. S. No. 24) ... ... ... ... | 2 | 0 |
| „ Vol. II. ( Introduction and Notes ), by Dr. P. Peterson (B. S. S. No. 24) ... ... ... ... | 4 | 8 |
| Kîrti-Kaumudî, by A. V. Kathavate, B. A. (B. S. S. No. 25) —*Copy-right restored to the Editor* ... ... ... | | |
| Kumârapâla-Charita, by S. P. Pandit, M. A. (B. S. S. No. 60) | 8 | 8 |
| Mṛichchhakaṭika with two Commentaries and various Readings, by N. B. Godbole, B. A. (B. S. S. No. 52) ... | 3 | 8 |
| Mâlavikâgnimitra, by S. P. Pandit, M. A. ( B. S. S. No. 6 ), 2nd edition.—*Under revision* ... ... ... ... | 2 | 2 |
| Mâlatî-Mâdhava, with Critical Notes, etc., by Sir Dr. R. G. Bhandarkar (B. S. S. No. 15), 2nd edition ... ... | 4 | 4 |
| Mahâbhâshya of Patañjali, Vol. I., Parts I., II and III, ( together), 2nd edition, by Dr. F. Kielhorn (B. S. S. Nos. 18–20) ... | 4 | 8 |
| „ „ Vol. II., Parts I., II. and III. (together), 2nd edition, by Dr. F. Kielhorn (B. S. S. Nos. 21, 22 and 26 ) ... ... ... | 9 | 0 |
| „ „ Vol. III, Parts I., II. and III. (together), 2nd edn., by Do. (B. S. S. Nos. 28–30). ... | 9 | 0 |
| Mudrârâkshasa, with the Commentary of Dhuṇḍirâja, by K. T. Telang, M. A. ( B. S. S. No. 27 )—*Copy right restored to the Editor* ... ... ... ... ... | | |

| | Rs. | a. |
|---|---|---|
| Mahânârâyaṇa Upanishad, by Col. G. A. Jacob (B. S. S. No. 35) ... ... ... ... ... ... ... | 0 | 7 |
| Naishkarmyasiddhi, with the Chandrikâ of Jñânottama, by Col. G. A. Jacob (B. S. S. No. 38), 2nd Edn. ... ... | 2 | 8 |
| Navasâhasâṅkacharita, Part I., by Vamanashastri Islâmpurkar (B. S. S. No. 53) ... ... ... ... ... | 1 | 10 |
| Nîti and Vairâgya S'atakas, with Notes and extracts from two Commentaries, by K. T. Telang, M. A. (B. S. S. No. 11)—*Copy-right restored to the Editor* ... ... | | |
| Nyâyakos'a, by Mahâmahopâdhâya Bhimacharya Zaḷkikar (B. S. S. No. 49) ... ... ... ... ... | 6 | 0 |
| Pañchatantra, Book I., with Notes, by Dr. F. Kielhorn (B. S. S. No. 4) ... ... ... ... | 0 | 6 |
| „ Books II. and III., with Notes, by Dr. G. Bühler (B. S. S. No. 3) ... ... | 0 | 4 |
| „ Books IV. & V., with Notes by, Dr. G. Bühler (B. S. S. No. 1) ... ... ... ... | 0 | 4 |
| Parâs'ara Smṛiti, Vol. I., Part I., by Vamanshastri Islampurkar (B. S. S. No. 47) ... ... | 2 | 2 |
| „ „ Vol. I., Part II., by Do. (B. S. S. No. 48) | 2 | 0 |
| „ „ Vol. II., Part I., by Do. (B. S. S. No. 59) | 4 | 0 |
| „ „ Vol. II., Part II., by Do. (B. S. S. No. 64) | 5 | 0 |
| „ „ Vol. III., Part I., by Do. (B. S. S. No. 67) | 4 | 0 |
| Paribhâshendus'ekhara, Part I., Text and various Readings, by Dr. F. Kielhorn (B. S. S. No. 2) | 0 | 8 |
| „ Part II., Translation and Notes, by Do. (Paribhâshâs 1-37), (B. S. S. No. 7) | 0 | 8 |
| „ Part II., Translation and Notes, by Do. (Paribhâshâs 38 to 69). (B. S. S. No. 9) | 0 | 8 |
| „ Part II., Translation and Notes, by Do. (Paribhâshâs 70 to 122) (B. S. S. No. 12) | 0 | 8 |
| Pâtañjala Sûtrâṇi, with the Scholium of Vyâsa and Vâchaspati's Commentary, by Mahâmahopâdhyâya Râjârâm Shâstri Bodas (B. S. S. No. 46) *Under revision.* ... | 1 | 10 |
| Pratâparudrayas'obhûshaṇa of Vidyânâtha, by R. B. K. P. Trivedi, B. A. (B. S. S. No. 65) ... ... ... | 11 | 0 |
| Raghuvaṃs'a, Part I. (Cantos i–vi), with Mallinâtha's Commentary and Notes, by S. P. Pandit, M. A. (B. S. S. No. 5) ... ... ... ... ... ... ... | 1 | 8 |

| | Rs. | a. |
|---|---|---|
| Raghuvaṃs'a, Part II. (Cantos vii–xiii), with Mallinâtha's Commentary and Notes, by S. P. Pandit, M. A. (B. S. S. No. 8) ... ... ... | 0 | 12 |
| " Part III. (Cantos xiv–xix), with Mallinâtha's Commentary and Notes, by Do. (B. S. S. No. 13)... ... ... ... ... ... | 0 | 8 |
| Râjataraṅgiṇî, Vol. I., by Pandit Durgaprasad (B. S. S. No. 45) ... ... ... ... ... | 1 | 8 |
| " Vol. II., by Do. (B. S. S. No. 51) ... ... | 1 | 4 |
| " Vol. III., by Dr. P. Peterson (B. S. S. No. 54) | 1 | 2 |
| Rekhâgaṇita, Vol. I., by H. H. Dhruva, B. A. and R. B. K. P. Trivedi, B. A. (B. S. S. No. 61) ... ... | 12 | 0 |
| Do. Vol. II., by Do. Do. (B. S. S. No. 62) ... ... | 9 | 0 |
| S'âriṅgadharapaddhati, Vol. I., by Dr. P. Peterson (B. S. S. No. 37) ... ... ... ... ... ... ... | 3 | 0 |
| S'rîbhâshya. Vol. I., by Vasudeva Shastrî Abhyankar. (B. S. S. No. 68) ... ... ... ... ... | 11 | 0 |
| Subhâshitâvali of Vallabhadeva, by Dr. P. Peterson (B. S. S. No. 31) ... ... ... ... ... ... ... | 2 | 8 |
| Tarka-Kaumudî of Laugâkshi Bhâskar, by M. N. Dvivedi, B. A. (B. S. S. No. 32)—*Copy-right restored to the Editor* ... ... ... ... ... ... ... | | |
| Tarka-Saṃgraha, with two Commentaries and Notes, by Y. V. Âthalye, M. A. (B. S. S. No. 55)... ... ... | | |
| Vâsishtha Dharmas'âstra, by Dr. A. A. Fuhrer (B. S. S. No. 23) | 0 | 8 |
| Vikramâṅkadevacharita, by Dr. G. Buhler (B. S. S. No. 14) —*Copy-right restored to the Editor* ... ... ... | | |
| Vikramorvas'îya, with Notes, 3rd edn., by S. P. Pandit, M. A. and B. R. Arte, M. A. (B. S S. No. 16) ... ... | 2 | 0 |

SANSKRIT PUBLICATIONS NOT INCLUDED IN THE BOMBAY SANSKRIT AND PRAKRIT SERIES.

| | Rs. | a. |
|---|---|---|
| *Amarakos'a*, the Thesarus of Sanskrit Words of Amara-Siṃha with the Commentary of Mahes'vara. Edited by Raghunath Shastri Talekar with Index ... ... ... | 0 | 13 |
| *Atharvaveda-Saṃhitâ* with the Commentary of Sâyaṇâchârya. Edited by S. P. Pandit, M. A., Vols. I., II., III., and IV., each at ... ... ... ... ... ... | 0 | 10 |
| Kâvyaprakâs'a (2nd edition), edited by Vamanacharya Zalkikar —*Under revision* ... ... ... ... | 5 | 4 |

## Pahlavi.

| | Rs. | a. |
|---|---|---|
| Vendidad, complete in 2 Volumes ... ... ... ... | 5 | 0 |